शबरुवाच

निषेधश्च कृतः पूर्वं सर्व्वं सत्ये प्रतिष्ठितम् । सत्येनतपते सूर्यःसत्येन ज्वलतेऽनलः

सत्येन तिष्ठत्युदधिर्वायुः सत्येन वाति हि ।
सत्येन पच्यते सस्यं गावः क्षीरं स्रवन्ति च ॥ ९९ ॥
सत्याधारमिदं सर्वं जगत्स्थावरजङ्गमम् ।
तस्मात्सर्वप्रयत्नेन सत्यं सत्येन पालयेत् ॥ १०० ॥
देवकार्यं तु मे मुक्त्वा नाऽन्या बुद्धिः प्रवर्त्तते ।
गृहाण राज्ञि! पुष्पाणि कुरु पूजां गदाभृतः ॥ १०१ ॥
श्रूयते हिजवाक्यैस्तु न दोषो विद्यते क्वचित् ।
कुशाः शाकं पयो मत्स्या गन्धाः पुष्पाक्षता दधि ॥
मांसं शय्याऽऽसनं धानाः प्रत्याख्येया न वारि च ॥ १०२ ॥

राज्ञ्युवाच

ारामोपहृतं पुष्पमारण्यं पुष्पमेव च । क्रीतं प्रतिग्रहे लब्धं पुष्पमेवं चतुर्विधम् ॥
तमं पुष्पमारण्यं गृहीतं स्वयमेव च । मध्यमं फलमारामे त्वधमं क्रीतमेव च ॥

प्रतिग्रहेण यल्लब्धं निष्फलं तद्विदुर्बुधाः ॥ १०४ ॥

पुरोहित उवाच

हाणराज्ञि! पुष्पाणिकुरुपूजां गदाभृतः । उपकारःप्रकर्त्तव्योऽव्यपदेशेन कर्हिचित्

ईश्वर उवाच

श्रीफलानि सपद्मानि दत्तानि शबरेण तु ।
गृहीत्वा तानि राज्ञी सा पूजाञ्चक्रे सुशोभनाम् ॥ १०६ ॥

ापाजागरणञ्चक्रेश्रुत्वापौराणिकींकथाम् । शबरस्तुततोभार्यामिदं वचनमब्रवीत्

दीपार्थं गृह्यतां स्नेहो यथालाभेन सुन्दरि !।
कृत्वा दीपं ततस्तौ तु कृत्वा पूजां हरेः शुभाम् ॥ १०८ ॥

ाक्रतुर्जागरंरात्रौध्यायन्तो धरणीधरम् । ततः प्रभातसमये दृष्ट्वास्नानोत्सुकं जनम्

स्नाति ये शूलभेदे तु देवनद्यातथाऽपरे। सरस्वत्या नरा केचिन्मार्कण्डस्यहदेऽपरे
चक्रतीर्थं गताश्चन्ये स्नानं केचिद्विधानतः।
शुध्यन्ते जना सर्वे स्नात्वा देवशिलोपरि ॥ १११ ॥
श्राद्धं चक्रे प्रयत्नेनश्रद्धयापूतचेतसा। तान्दृष्ट्वा शबरो दिव्ये पिण्डाश्चक्रेप्रयत्नतः
भानुमत्या तथा भर्त्तुः पिण्डनिर्वपणं कृतम्।
अनिन्द्या भोजिता विप्रा दम्भमात्सर्यवर्जिता ॥ ११३ ॥
हविष्यान्नैस्तथा भक्त्या शर्करामधुसर्पिषा। पायसेनतु मध्येन कृताम्नेनविशेषतः
भोजयित्वा तथा राज्ञी ददौ दानं यथाविधि।
पादुकोपानहौ छत्रं शय्या गोवृषमेव च ॥ ११५ ॥
विविधानि च दानानि हेमरत्नधनानि च। चक्रतीर्थेमहाराजकपिलायप्रयच्छति
पृथ्वी तेन भवेद्दत्ता सशैलवनकानना ॥ ११६ ॥

उत्तानपाद उवाच

यानि यानि च दानानि शस्तानि जगतीपते।
तानि सर्वाणि देवेश कथयस्व प्रसादतः ॥ ११७ ॥

ईश्वर उवाच

तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम्। भूमिदः स्वर्गमाप्नोति दीर्घमायुर्हिरण्यदः
गृहदो रोगरहितो रूप्यदो रूपवान्भवेत्। वासोदश्चन्द्रसालोक्यमश्वसायुज्यमश्वदः
वृषदस्तु श्रियंपुष्टां गोदाताच त्रिविष्टपम्। यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्म शाश्वतम्।
वार्यन्नपृथिवीवासस्तिलकाञ्चनसर्पिषाम् ॥ १२१ ॥
सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते। येनयेन हि भावेन यद्यद्दानं प्रयच्छति ॥
तेनतेन स्वभावेन प्राप्नोतिप्रतिपूजितम्। दृष्ट्वा दानानिसर्वाणिराज्ञीदत्तानियानिच
उवाच शबरो भार्या यत्तच्छृणु नरेश्वर। पुराणं पठितं भद्रे ब्राह्मणैर्वेदपारगैः ॥
श्रुतश्च तन्मया सर्वं दानधर्मफलं शुभम्। पूर्वजन्मार्जितं पापं स्नानदानव्रतादिभिः

शरीरं दुस्त्यजं मुक्त्वा लभते गतिमुत्तमाम् ।
संसारसागरादुद्धीतः सत्यं भद्रे! वदामि ते ॥ १२६ ॥
अनेकानि च पापानि कृतानि बहुशो मया ।
घातिता जन्तवो भद्रे निर्दग्धाः पर्वताः सदा ॥ १२७ ॥
तेन पापेन दग्धोऽहं दारिद्र्यं न निवर्त्तते ।
तीर्थावगाहनं पूर्वं पापेन न कृतं मया ॥ १२८ ॥
तेनाऽहं दुःखितो भद्रे !दारिद्र्यमनिवर्त्तकम् ।
मातुर्गृहं प्रयाहि त्वं त्यज स्नेहं ममोपरि ॥
नगशृङ्गं समारुह्य मोक्तुमिच्छाम्यहं तनुम् ॥ १२९ ॥

शबर्युवाच

मात्रा पित्रा न मे कार्यं नाऽपि स्वजनबान्धवैः ।
या गतिस्तव जीवेश! सा ममापि भविष्यति ॥ १३० ॥
न स्त्रीणामीदृशो धर्मो विना भर्त्रा स्वजीवितम् ।
श्रूयन्ते बहवो दोषा धर्मशास्त्रेष्वनेकधा ॥ १३१ ॥
पारणं कुरुभोजेन्द्रव्रतंयेननंनश्यति । यत्तेऽभिवाञ्छितं किञ्चिद्धिष्णवेकर्त्तुमर्हसि
भार्याया वचनं श्रुत्वा मुमुदे शबरस्ततः ।
गृहीत्वा श्रीफलं शीघ्रं होमं कृत्वा यथाविधि ॥ १३३ ॥
सर्वदेवान्नमस्कृत्य भुक्तोऽपि च तया सह ।
चैत्र्यां तु विषुवं ज्ञात्वा तस्थौ तत्र दिनत्रयम् ॥ १३४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे सगङ्गावतरणव्याधवाक्योपदेशकथनपूर्वकंदानादिफलवर्णनं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

# सप्तपञ्चाशत्तमोऽध्याय

## व्याघ्रसर्गभञ्जनवर्णनम्

ईश्वर उवाच

भानुमतीद्विजान्भोज्य बुभुजेभुक्तशेषम् । भुक्त्वा सुसुखमास्थायतदनपरिणाम्य
नर्मोदया ततो गत्वा मदनारत्यतिथौ तदा ।
मार्कण्डस्य ह्रदे स्नात्वाऽऽनच्य देव गुहाशयम् ॥ २ ॥
कृतोपवासनियमा स्नापयित्वा महेश्वरम् । पञ्चामृतसुगन्धैश्च धूपदीपनिवेद्यनै
भावयद्विविधै पुष्पैर्नैवेद्यैश्च सुशोभितै ।
क्षपाजागरण कृत्वा श्रुत्वा पौराणिकीं कथाम् ॥ ४ ॥
नृत्यगीतैस्तथास्तोत्रैर्ध्यायीदेवमहेश्वरम् । अत्रयित्वारितसर्वदेवस्याऽप्रेयथाविधि
चातुर्वर्ण्यसुता सर्वे भोजिता भवरिच्छदा ।
चतुर्दश्या दिन यावत्सम्पूज्य वृषभध्वजम् ॥ ६ ॥
शङ्खवादित्रभेरीभि पटहध्वनिनादितम् । क्षपाजागरण कृत्वा प्रभूतजनसङ्कुलम्
नृत्यगीतैस्तथा स्तोत्रै प्ररिता सा निशा तदा ।
प्रभाते भोजिता विप्रा पायसैर्मधुसर्पिषा ॥ ८ ॥
दत्त्वा दानानि विप्रेभ्य शक्त्या वित्तानुसारत ।
भवयित्वा महापुण्ये सुगन्धैश्चन्दनेन च ॥ ६ ॥
विधिरै सक्ष्मवस्त्रैश्च देव सम्पूज्यवेष्टित । चन्द्रमाल्यमालैश्चबहुदीपसमुज्ज्वलै
पक्वान्नैर्विविधैर्भक्ष्यै सुवृत्तैर्मोदकादिभि । यतस्तेब्राह्मणा सर्वेवेदाध्ययनतत्परा
त एव कात्यायन्क पञ्चक नाम नामत ।
आदित्यस्य दिन त्वच तिथि पञ्चदशी तथा ॥ १२ ॥
त्वाष्ट्रमेव न नक्षत्र सक्रान्तिर्विषुवतथा ।

व्यतीपातस्तथा योगः करणं विष्टिरेव च ॥ १३ ॥

पद्मकंनाम पर्वैतदयनादिष्वनुगुणम् । अत्र दत्तं हुतं जप्तं सर्वं भवति चाऽक्षयम् ॥

ते द्विजा भानुमत्याऽथ शूलभेदं गताः सह ।

ददृशुः शवरं कुण्डे भार्यया सह संस्थितम् ॥ १५ ॥

ऐशानीं स दिशंगत्वा पर्वते भृगुमूर्द्धनि । पतितुं च समारूढोभार्ययासहपार्थिव

भानुमत्युवाच

तिष्ठतिष्ठ महासत्त्व शृणुष्ववचनंमम । किमर्थंत्यजसि प्राणानद्यापित्वंयुवाभवान्

कः सन्तापः क उद्वेगः किं दुःखं व्याधिरेव च ।

शिशुः संदृश्यसेऽद्याऽपि कारणं कथ्यतामिदम् ॥ १८ ॥

शवर उवाच

कारणं नास्ति मे किञ्चिन्न दुःखं किञ्चिदेव तु ।

संसारभयभीतोऽहं नान्याः बुद्धिः प्रवर्त्तते ॥ १९ ॥

दुःखेनलभ्यतेयस्मान्मानुष्यंजन्मभाग्यतः । मानुष्यंजन्मचासाद्ययोनधर्मंसमाचरेत्

स गच्छेन्निरयं घोरमात्मद्रोपेण सुन्दरि ॥

तस्मात्पतितुमिच्छामि तीर्थेऽस्मिन्पापनाशने ॥ २१ ॥

राज्युवाच

अद्यापि वर्त्तते कालो धर्मस्योपार्जनेतव । कृतापकृतकर्माचे व्रतदानैर्विशुद्ध्यति ॥

अहं दास्यामि धान्यं वा वासांसि द्रविणं बहु ।

नित्यमाचर धर्मं त्वं ध्यायन्नित्यं महेश्वरम् ॥ २३ ॥

शवर उवाच

नैवाहं कामये वित्तं न धान्यं वस्त्रमेव च ।

यो यस्यैवान्नमश्नाति स तस्याऽश्नाति किल्बिषम् ॥ २४ ॥

राज्युवाच

कन्दमूलफलाहारो भ्रमित्वा भैक्ष्यमुत्तमम् । अवगाह्यसुतीर्थानि सर्वपापैःप्रमच्यसे

ततो विमुक्तपापस्तु यत्किञ्चित्कुरुते शुचि ।
कर्मणा तेन पूतस्त्वं सद्गतिं प्राप्स्यसि ध्रुवम् ॥ २८ ॥

शबर उवाच

अस्मद्यमयात्यक्तप्राणेभ्योऽपिमहत्तरम् । सत्यं न लोपयेद्देवि निश्चिताऽश्रमतिर्मम
प्रसादं क्रियतां देवि क्षमस्वाऽद्य जनैः सह । सर्वोत्तरीयवस्त्रेणमयम्यात्मानमुद्धत

भार्यया सहितो व्याधो हरिं ध्यात्वा पपात ह ।
नगाग्रात्पतितो यावद्गतजीवो नराधिप ॥ २९ ॥
चूर्णीभूतौ हि तौ दृष्ट्वा कुण्डस्योपरि भूमिप ।
त्रिमुहूर्ते गते काले शबरो भार्यया सह ॥ ३० ॥
दिव्यं विमानमारूढो गतश्चानुत्तमां गतिम् ॥ ३१ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे व्याधस्वर्गगमनवर्णननाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

---

## अष्टपञ्चाशत्तमोऽध्यायः

### शूलभेदतीर्थमाहात्म्यवर्णनम्

उत्तानपाद उवाच

अथातो देवदेवेश भानुमत्यकरोच्च किम् । एतं मे संशयो देव कथयस्व प्रसादतः ॥

ईश्वर उवाच

चिन्तयित्वा मुहूर्तं सा गता कुण्डस्य सन्निधौ ।
दृष्ट्वा कुण्डस्य माहात्म्यं राज्ञी हर्षेण पूरिता ॥ २ ॥
विप्रान्वहून्समाहूय पूजयामास तत्क्षणात् ।

दत्त्वा तु विधिवद्दानं ब्राह्मणेभ्यो नृपात्मज !॥ ३ ॥
निश्चयंपरमंकृत्वास्थिताशान्तेनचेतसा । ततःसम्पूज्यविधिवत्पितॄन्देवान्नराधिप
क्षपयित्वापक्षमेकंमधुमासस्यसास्थिता ।अमावास्यांततोराज्ञीगतापर्वतसन्निधौ
नगश्रृङ्गं समारुह्यकृत्वामुकुलितौ करौ । विज्ञाप्य ब्राह्मणान्सर्वानिदं वचनमब्रवीत्

मम माता पिता भ्राता ये चान्ये सखिबान्धवाः ।
क्षमापयित्वा सर्वांस्तान्वचनं मम कथ्यताम् ॥ ७ ॥
त्वत्पुत्री शूलभेदे तु तपः कृत्वा स्वशक्तितः ।
विसृज्य चैव साऽऽत्मानं तस्मिंस्तीर्थे दिवं ययौ ॥ ८ ॥

ब्राह्मणा ऊचुः

सन्देशंकथयिष्यामस्त्वयोक्तंशोभनव्रते ।मातापितृभ्यांसुश्रोणिमातेभूऽदत्रसंशयः
ततोविसृज्यताँल्लोकान्स्थिताःपर्वतमूर्द्धनि ।अथोत्तरीयवस्त्रेणगाढंबद्ध्वापुनःपुनः

ततश्चिक्षेप साऽऽत्मानमेकचित्ता नराधिप !।
नगार्द्धे पतिता यावत्तावद्दृष्टाः सुराङ्गनाः ॥ ११ ॥
भोभो वत्से महाभागे! भानुमत्यतितापसि ।
दिव्यं विमानमारुह्य कैलासम्प्रतिगम्यताम् ॥ १२ ॥
ततः सा पश्यतां तेषां जनानां त्रिदिवं गता ॥ १३ ॥

मार्कण्डेय उवाच

इति ते कथितः सर्वः शूलभेदस्यविस्तरः । यःश्रुतःशङ्करात्पूर्वमृषिदेवसमागमे ॥
यइदं पठतेभक्त्यातीर्थेदेवकुलेऽपिवा । स मुच्यते महापापादपिजन्मशतार्जितात्
ब्रह्महाच सुरापीच स्तेयी च गुरुतल्पगः । गोघातीस्त्रीविघातीचदेवब्रह्मस्वहारकः

स्वामिद्रोही मित्रघाती तथा विश्वासघातकः ।
परन्यासापहारी च परनिक्षेपलोपकः ॥ १७ ॥
रसभेदी तुलाभेदी तथा वार्द्धुषिकस्तु यः ।
यः कन्याविघ्नकर्त्ता च तथा विक्रयकारकः ॥ १८ ॥

परभार्यां भ्रातृभार्यां गौ स्नुषाकन्यका तथा । अभिगामीपरद्वेषीतथाधर्मप्रदूषक
मुच्यन्ते सर्वे एवैते शूलभेदप्रभावत ॥ २० ॥
य इदंश्रावयेच्छ्राद्धे विप्राणामुवनानृप । मुदं प्रयान्ति संहृष्टा पितरस्तस्यसर्वश
यश्चेदं शृणुयाद्भक्त्या पठ्यमानं नरोवशी ।
स मुक्त सर्वपापेभ्य सर्वकल्याणमाप्नुयात् ॥ २२ ॥
इद यशस्यमायुष्यमिदं पावनमुत्तमम् । पठतांशृण्वतां नृणामायु श्रीर्विधिवर्द्धं
इति कथितमिदं हि शूलभेदस्य पुण्य महिम न हि मनुष्यै श्रूयते यत्सपापै ।
मदनरिपुतडित्या वाग्यकूलस्थितस्य प्रवरदुरितवन्हीश्चैत्वंद्राख्यरूपम् ॥२
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्या संहितायां पञ्चमेऽवन्तीखण्
रेवाखण्डे शूलभेदतीर्थमाहात्म्यवर्णननामाष्टपञ्चाशत्तमोऽध्याय ॥ ५८ ॥

शूलभेदमाहात्म्यं समाप्तम्

---

# एकोनषष्टितमोऽध्यायः

## पुष्करिण्यामादित्यतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तत पुष्करिणीं गच्छेत्सर्वपापप्रणाशिनीम् ।
श्रुते यस्या प्रभावे तु सर्वपापै प्रमुच्यते ॥ १ ॥
रेवाया उत्तरे कूले तीर्थं परमशोभनम् । यत्राऽस्ते सर्वदा देवो वेदमूर्तिर्दिवाक
कुरुक्षेत्रं यथापुण्य सार्वकामिकमुत्तमम् । इद तीर्थं तथा पुण्यं सर्वकामफलप्रद
कुरुक्षेत्रे यथावृद्धिर्दानस्य जगतीपते । पुष्करिण्यांतथा नाऽत्र यद्दत्तं नाऽत्रसंश
यवमेक तु यो दद्यात्सौवर्णं मस्तके नृप ।

पुष्करिण्यां तथा स्थानं यथा स्थानं नरे स्मृतम् ॥ ५ ॥
सूर्यग्रहे तु यः स्नात्वा दद्याद्दानं यथाविधि ।
हस्त्यश्वरथरत्नादि गृहं गाश्च युगन्धरान् ॥ ६ ॥
सुवर्णंरजतं वाऽपि ब्राह्मणेभ्योददाति यः । त्रयोदशदिनं यावत्त्रयोदशगुणम्भवेत्
तिलमिश्रेण तोयेन तर्प्पयेत्पितृदेवताः । द्वादशाब्दं भवेत्प्रीतिस्तत्र तीर्थे महीपते!
यस्तत्र कुरुते श्राद्धं पायसैर्मधुसर्पिषा । श्राद्धदो लभते स्वर्गं पितॄणां दत्तमक्षयम्
अक्षतैर्बदरैर्बिल्वैरिङ्गुदैर्वा तिलैः सह । अक्षयं फलमाप्नोति तस्मिंस्तीर्थे न संशयः
तत्र स्नात्वा तु यो देवं पूजयेच्च दिवाकरम् ।
आदित्यहृदयं जप्त्वा पुनरादित्यमर्चयेत् ॥
स गच्छेत्परमं लोकं त्रिदशैरपि वन्दितम् ॥ ११ ॥
ऋचमेकां जपेद्यस्तु यजुर्वासामएव च । स समग्रस्य वेदस्य फलमाप्नोति वै नृप
यस्त्र्यक्षरं जपेन्मन्त्रं ध्याधमानो दिवाकरम् ।
आदित्यहृदयं जप्त्वा मुच्यते सर्वपातकैः ॥ १३ ॥
यस्तत्र विधिवत्प्राणांस्त्यजते नृपसत्तम ।
स गच्छेत्परमं स्थानं यत्र देवो दिवाकरः ॥ १४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे पुष्करिण्यामादित्यतीर्थमाहात्म्यवर्णनं
नामैकोनषष्टितमोऽध्यायः ॥ ५६ ॥

---

# षष्टितमोऽध्यायः

## आदित्येश्वरतीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

भूयोऽन्यद् प्रवक्ष्यामि आदित्येश्वरमुत्तमम् । सर्वदुःखहरं पार्थ सर्वविघ्नविनाशनम्
आयुःश्रीवर्धनं नित्यं पुत्रदं स्वर्गदं शिवम् । यस्य तीर्थस्य चान्यानि तीर्थानि कुरुनन्दन
नालभन्त श्रियं नाके मर्त्ये पातालगोचरे ।
कुरुक्षेत्रं गया गङ्गा नैमिषं पुष्करं तथा ॥ ३ ॥
वाराणसी च केदारं प्रयागं रुद्रनन्दनम् । महाकालं सहस्राक्षं शुक्लतीर्थं नृपोत्तम
रवितीर्थस्य सर्वाणि कलां नार्हन्ति षोडशीम् ।
रवितीर्थे हि यद्वृत्तं तच्छृणुष्व नृपोत्तम ॥ ५ ॥
स्नेहात्ते कथयिष्यामि यादृशं वेनातिपीडितः । शृणुष्व तु महाराज सर्वतस्तो निष्ठामहाँजसः
श्रुतं मे रुद्रसान्निध्ये नन्दिस्कन्दगणैः सह ।
पार्वत्या पृच्छ शम्भुश्च रवितीर्थस्य यत्फलम् ॥ ७ ॥
शम्भुना च यदाख्यातं गिरिजायाः ससम्भ्रमम् ।
तत्सर्वमेकचित्तेन रुद्रोद्गीतं श्रुतं मया ॥ ८ ॥
ततोऽहं सम्प्रवक्ष्यामि शृणुष्व यत्नेन पाण्डव । दुर्भिक्षोपहता विप्रा नर्मदां तु समाश्रिताः
उद्दालको वशिष्ठश्च माण्डव्यो गौतमस्तथा ।
याज्ञवल्क्योऽथ गर्गश्च शाण्डिल्यो गालवस्तथा ॥ १० ॥
नाचिकेतो विभाण्डश्च वालखिल्यादयस्तथा ।
शातातपश्च शङ्खश्च जैमिनिर्गोभिलस्तथा ॥ ११ ॥
[illegible] । तीर्थयात्राप्रसङ्गेन नर्मदायाः समन्ततः

जम्बीरैरङ्गुनैःकुब्जैःशर्मकेशरकिंशुकैः । तस्मिंस्तीर्थमहापुण्ये सुगन्धिकुसुमाकुले
पुन्नागनारिकेलैश्च खदिरैः कल्पपादपैः । अनेकश्वापदाकीर्णं मृगमार्जारसङ्कुलम् ॥
ऋक्षहस्तिसमाकीर्णं चित्रकैश्चोपशोभितम् । प्रविष्टाऋषयः सर्वे वनेपुष्पसमाकुले

वनान्ते च स्त्रियो दृष्ट्वा रक्ता रक्ताम्बरान्विताः ।
रक्तमाल्यानुशोभाढ्या रक्तचन्दनचर्चिताः ॥ १७ ॥
रक्ताभरणसंयुक्ताः पाशहस्ताभयावहाः ।
तासां समीपगा दृष्टाः कृष्णजीमूतसन्निभाः ॥ १८ ॥
महाकाया भीमवक्त्राः पाशहस्ता भयावहाः ।
अनावृष्ट्युपमा दृष्ट्वा आतुराः पिङ्गलोचनाः ॥ १९ ॥
दीर्घजिह्वा करालास्या तीक्ष्णदंष्ट्रा दुरासदा ।
वृद्धानारी कुरुश्रेष्ठ दृष्टाऽन्या ऋषिपुङ्गवैः ॥ २० ॥
ततः समीपगा वृद्धा तस्य वृन्दस्य भारत !।
स्वाध्यायनिरता विप्रा दृष्टास्तैः पापकर्मभिः ॥ २१ ॥
ऊचुस्ते तु समूहेन ब्राह्मणांस्तपसि स्थितान् ।
अस्माकं स्वामिनः सर्वे तिष्ठन्ते तीर्थमध्यतः ॥
ते प्रस्थाप्या महाभागाः सर्वथैव त्वरान्विताः ॥ २२ ॥

तच्छ्रुत्वा वचनं तेषांसर्वेचैवत्वरान्विताः । जग्मुस्तेनर्मदाकक्षंदृष्ट्वारेवांद्विजोत्तमाः

ततः केचित्स्तुवन्त्यन्ये जय देवि! नमोऽस्तु ते ॥ २४ ॥
नमोऽस्तु ते सिद्धगणैर्निषेविते! नमोऽस्तु ते सर्वपवित्रमङ्गले !।
नमोऽस्तु ते विप्रसहस्रसेविते! नमोऽस्तु रुद्राङ्गसमुद्भवे! वरे !॥ २५ ॥
नमोऽस्तु ते सर्वपवित्रपावने! नमोऽस्तु ते देवि! वरप्रदे! शिवे !।
नमामि ते शीतजले! सुखप्रदे! सरिद्वरे! पापहरे! विचित्रिते !॥ २६ ॥
अनेकभूतौघसुसेविताङ्गे !गन्धर्वयक्षोरगपाविताङ्गे !।
महागजौघैर्महिषैर्वराहैरापीयसे ऽम्महोर्मिमाले !॥ २७ ॥

नमामि ते सर्ववरे सुखप्रदे विमोचयास्मानवपाशबद्धान् ॥ २८ ॥
भ्रमन्ति तावन्नरकेषु मर्त्या यावत्तवाम्भो नहि संश्रयन्ति ।
स्पृष्ट्वा करैश्चन्द्रमसो रवेश्चेत्तद्देवि दद्यात्परमं पदं तु ॥ २९ ॥
अनेकसंसारभयार्दितानां पापैरनेकैरभिवेष्टितानाम् ।
गतिस्त्वमम्भोजसमानवक्त्रे द्वन्द्वैरनेकैरभिसम्वृतानाम् ॥ ३० ॥
नद्यश्च पूता विमला भवन्ति त्वां देवि सम्प्राप्य न संशयोऽत्र ।
तु सातुराणामभयं ददासि शिवैरनेकैरभिपूजिताऽसि ॥ ३१ ॥
विपन्नदेहाश्च निमग्नदेहा भ्रमन्ति तावन्नरकेषु मर्त्याः ।
महाघनध्वस्तनरङ्गभङ्गं जलं न यावत्तव संस्पृशन्ति ॥ ३२ ॥
म्लेच्छाः पुलिन्दास्तथ यातुधाना पिबन्ति येऽम्भस्तव देवि पुण्यम् ।
तेऽपि प्रमुच्यन्ति भयाच्च घोरात्किमत्र विप्रा भवपाशभीताः ॥ ३३ ॥
सरांसि नद्यः क्षयमभ्युपेता घोरे युगेऽस्मिन्कलिनावसृष्टे ।
त्वं भ्राजसे देवि जलौघपूर्णा दिवीव नक्षत्रपथे च गङ्गा ॥ ३४ ॥
तव प्रसादाद्वरदे विशिष्टे कालं यथेमं परिपालयित्वा ।
यास्याम मोक्षं तव सुप्रसादाद्वयं यथा त्वं कुरु नः प्रसादम् ॥ ३५ ॥
त्वामाश्रिता ये शरणं गताश्च गतिस्त्वमम्बेव पितेव सुतान् ।
त्वत्पालिता याव दिमं सुघोरं कालं त्वनावृष्टिहतं क्षिपाम ॥ ३६ ॥
एवंस्तुता तदा देवी नर्मदा सरितां वरा । प्रत्यक्षा सा परामर्शित्राह्मणानां युधिष्ठि

श्रीमार्कण्डेय उवाच

पठन्ति [illegible] स्तोत्रमिदं नरेन्द्र शृण्वन्ति भक्त्या परया प्रशान्ताः ।
ते यान्ति रुद्रं वृषसंयुतेन यानेन दिव्याम्बरभूषिताङ्गाः ॥ ३७ ॥
ये स्तोत्रमेतत्सततं जपन्ति स्नात्वा च तोयेन तु नर्मदायाः ।
तस्योऽन्तकाले सरिदुत्तमेयं गतिं विशुद्धामचिराद्ददाति ॥ ३८ ॥
प्रातः समुत्थाय तथा शयानो यः कीर्तयेतानुदिनं स्तवेन्द्रम् ।

देहक्षयं स्वे सलिले ददाति समाश्रयं तस्य महानुभाव !॥ ४० ॥
पापैर्विमुक्ता दिवि मोदमानाः सम्भोगिनश्चैव तु नान्यथा च ॥ ४१ ॥
प्रसन्नानर्मदादेवीस्त्रोत्रेणाऽनेनभारत। जलेनाप्यायितान्विप्रान्दक्षिणापथवाहिनी
अमृतत्वं तु चो दद्मि योगिभिर्यन्नगम्यते। दुर्लभं यत्सुरैःसर्वैर्मत्प्रसादाल्लभिष्यथ
इति ते ब्राह्मणाराजल्लँब्ध्वा वरमनुत्तमम्। गमिष्यन्तःप्रीतचित्तादद‍ृशुश्चित्रमद्भुतम्

श्रीमार्कण्डेय उवाच

दृष्टास्तैः पुरुषाःपार्थनर्मदातटसंस्थिताः। स्नानदेवार्चनासक्ताःपञ्चएवमहाबलाः
ते दृष्टा ब्राह्मणैः सर्व्वैर्वेदवेदाङ्गपारगैः। सम्पृष्टास्तैर्महाराज यथा तदवधारय॥

विप्रा ऊचुः

वनान्ते स्त्रीयुगं दृष्ट्वा महारौद्रं भयावहम्। वृद्धाश्चपुरुषास्तत्रपाशहस्ताभयावहाः
दुर्धर्षा दुर्निरीक्ष्याश्च इतश्चेतश्च,चञ्चलाः। व्याहरन्तःशुभांवाचं न तत्रगतिरस्तिवै
अपरस्परयोः सर्वे निरीक्षन्तः पुनः पुनः।
तैस्तु तद्वचनं प्रोक्तं तत्सर्वं कथ्यतामिति ॥ ४६ ॥
अस्माकं;पुरुषाः पञ्च तिष्ठन्ति तत्र सत्तमाः।
ते प्रस्थाप्या महाभागाः सर्वथैव त्वरान्विताः ॥ ५० ॥
अथ ते पुरुषाः पञ्च श्रुत्वा वाक्यमिदं शुभम्।
परस्परं निरीक्षन्तो वदन्ति च पुनः पुनः ॥ ५१ ॥
क्व ते कस्य कुतो याताः किमुक्तं तैर्भयावहैः ॥ ५२ ॥

पुरुषा ऊचुः

तीर्थावगाहनंसर्वैः पूर्वदक्षिणपश्चिमैः। उत्तरैश्चकृतंभवत्या न पापं तैर्व्यपोहितम्
निष्पापाश्चाथ सञ्जातास्तीर्थस्याऽस्य प्रभावतः।
शृण्वन्तु ऋषयः सर्वे वह्निकालोपमा द्विजाः ॥ ५४ ॥
पातकानि च घोराणि यान्यचिन्त्यानि देहिनाम्।
पापिष्ठेन तु चैकेन गुरुदारा निषेविता ॥ ५५ ॥

कुरुक्षेत्रे समं पुण्यं नाऽत्र कार्या विचारणा ॥ ७० ॥
ग्रामे वा यदि वाऽरण्ये पुण्या सर्वत्रनर्मदा । रवितीर्थेविशेषेण रेवा पुण्यफलप्रदा
षष्ठ्यां सूर्यदिने भक्त्या व्यतीपाते च वैधृतौ ।
सङ्क्रान्तौ ग्रहणेऽमायां ये व्रजन्ति जितेन्द्रियाः ॥ ७२ ॥
कामक्रोधैर्विमुक्ताश्चरागद्वेषैस्तथैवच । उपोष्यपरया भक्त्या देवस्याऽग्रेनराधिप
रात्रौजागरणं कृत्वा दीपंदेवस्यबोधयेत् । कथां वै वैष्णवींपार्थ वेदाभ्यसनमेवच
ऋग्वेदं वा यजुर्वेदं सामवेदमथर्वणम् । ऋचमेकां जपेद्यस्तु स वेदफलमाप्नुयात्
गायत्र्या च चतुर्वेदफलमाप्नोति मानवः । प्रभाते पूजयेद्विप्रानन्नदानहिरण्यतः ॥
भूमिदानेन वस्त्रेण अन्नदानेन शक्तितः । छत्रोपानहशय्यादि गृहदानेनपाण्डव! ॥
ग्रामधूर्वहदानेन गजकन्याहयेन च । विद्याशकटदानेन सर्वेषामभयं भवेत् ॥ ७८॥
शत्रुश्च मित्रतां याति विषं चैवाऽमृतं भवेत् ।
ग्रहा भवन्ति सुप्रीताः प्रीतस्तस्य दिवाकरः ॥ ७६ ॥
एतत्ते सर्वमाख्यातंरवितीर्थफलंनृप । ये शृण्वन्ति नराभक्त्या रवितीर्थफलंशुभम्
तेऽपि पापविनिर्मुक्ता रविलोके वसन्ति हि । गोदानेनचयत्पुण्यं यत्पुण्यंभृगुदर्शने
केदार उदकं पीत्वा तत्पुण्यं जायते नृणाम् ।
अब्दमश्वत्थसेवायां तिलपात्रप्रदो भवेत् ॥ ८२ ॥
तत्फलं समवाप्नोति आदित्येश्वरकीर्त्तनात् ।
श्रुते यस्य प्रभावे न जायते यन्नृपात्मज !॥ ८३ ॥
तत्सर्वंकथयिष्यामिभक्त्यातव महीपते । पापानिचप्रलीयन्तेभिन्नपात्रेयथाजलम्
तीर्थस्याऽभिमुखोनित्यंजायतेनाऽत्रसंशयः । गुह्याद्गुह्यतरंतीर्थंकथितंतवपाण्डव
पापिष्ठानां कृतघ्नानां स्वामिमित्रावघातिनाम् ।
तीर्थाऽख्यानं शुभं तेषां गोपितव्यं सदा बुधैः ॥ ८६ ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे आदित्येश्वरतीर्थमाहात्म्यवर्णनंनाम षष्टितमोऽध्यायः ॥६०॥

# द्विषष्टितमोऽध्यायः

## करोडीश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्नराजेन्द्रकरोडीश्वरमुत्तमम् । यत्र वै निहतास्तात दानवाःसपदानुगाः
इन्द्रादिदेवैः संहृष्टैः सततं जयबुद्धिभिः । तेषां ये पुत्रपौत्राश्च पूर्ववैरमनुस्मरम् ॥

क्रुद्धैर्दैवसमूहैश्च दानवा निहता रणे ।
तेषां शिरांसि संगृह्य सर्वे देवाः सवासवाः ॥ ३ ॥
निक्षिप्य नर्मदातोये बन्धुभावमनुस्मरम् ।
तत्र स्नात्वा सुराः सर्वे स्थापयित्वा उमापतिम् ॥ ४ ॥

इन्द्रेणसहिताःसर्वेऽपूजयँल्लोकसिद्धये । हृष्टचित्ताःसुराःसर्वे जग्मुराकाशमण्डलम्

दानवानां महाभाग सूदिता कोटिरुत्तमा ।
तदाप्रभृति तत्तीर्थं करोडीति महीतले ॥ ६ ॥
विख्यातं तु तदा लोके पापघ्नं पाण्डुनन्दन ॥
अष्टम्यां च चतुर्दश्यामुभौ पक्षौ च भक्तितः ।
उपोष्य शूलिनश्चाग्रे रात्रौ कुर्वीत जागरम् ॥ ७ ॥

सत्कथापाठसंयुक्तो वेदाध्यनसंयुतः । प्रभाते विमले प्राप्ते पूजयेत्त्रिदशेश्वरम् ॥
पञ्चामृतेन संस्नाप्य श्रीखण्डेन च गुण्ठयेत् । शस्तैः पल्लवपुष्पैश्च पूजयेत्तु प्रयत्नतः
बहुरूपंजपन्मन्त्रंदक्षिणाशांव्यवस्थितः । यथोक्तेन विधानेन नाभिमात्रेजलेक्षिपेत्

तिलाञ्जलिं तु प्रेताय दक्षिणाशामुपस्थितः ।
श्राद्धं तत्रैव विप्राय कारयेद्विजितेन्द्रियः ॥ ११ ॥

विषमैरग्रजातैश्च वेदाध्ययनतत्परैः । गोहिरण्येन सम्पूज्य ताम्बूलैर्भोजनैस्तथा ॥

भूषणैःपादुकाभिश्च ब्राह्मणान्पाण्डुनन्दन ।

# त्रिषष्टितमोऽध्याय·

## कुमारेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेत्तुराजेन्द्र! कुमारेश्वरमुत्तमम्। प्रसिद्धं सर्वतीर्थानामगस्त्येश्वरसन्निधौ

षण्मुखेन पुरा तात! सर्वपातकनाशनम्।
आराध्य परया भक्त्या सिद्धिः प्राप्ता नराधिप ! ॥ २ ॥
देवसैन्याधिपो जातः सर्वशत्रुनिबर्हणः।
उग्रतेजा महात्माऽसौ सञ्जातस्तीर्थसेवनात् ॥ ३ ॥

तदाप्रभृतितत्तीर्थंसञ्जातं नर्मदातटे। तत्रतीर्थे तु यो गत्वा एकचित्तो जितेन्द्रियः
कार्त्तिकस्य चतुर्दश्यामष्टम्यांचविशेषतः। स्नापयेद्गिरिजानाथंदधिदुग्धेनसर्पिषा
गीतं तत्रप्रकर्त्तव्यं पिण्डदानं यथाविधि। ब्राह्मणैःश्रोत्रियैःपार्थषट्कर्मनिरतैःशुभैः
यत्किञ्चिद्दीयते तत्र अक्षयं पाण्डुनन्दन। सर्वतीर्थमयंतीर्थं निर्मितं शिखिना नृप
एतत्तेसर्वमाख्यातं कुमारेश्वरजं फलम्। कुमारदर्शनात्पुण्यं प्राप्यते पाण्डुनन्दन!

मृतः स्वर्गमवाप्नोति सत्यमीश्वरभाषितम् ॥ ६ ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
कुमारेश्वरतीर्थमाहात्म्यवर्णनंनाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥



## चतुःषष्टितमोऽध्यायः

### अगस्त्येश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम् । मराणापापनाशायअगस्त्येश्वरमुत्तमम्
तत्रस्नात्वा नरोराजन्मुच्यते ब्रह्महत्यया । कार्त्तिकस्यतुमासस्यकृष्णपक्षेचतुर्दशी
घृतेन स्नापयेत्तु देवं समाधिस्थो जितेन्द्रिय ।
एकविंशतिकुलोपेतो न च्यवेदीश्वरालयात् ॥ ३ ॥
धन चोपानहौ छत्र दद्याच्च घृतकम्बलम् । भोजन चैव सर्वपासवं कोटिगुण भवेत्
इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
अगस्त्येश्वरतीर्थमाहात्म्यवर्णननाम चतुःषष्टितमोऽध्याय ॥ ६४ ॥

———

## पञ्चषष्टितमोऽध्यायः

### आनन्देश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेत्तु राजेन्द्र आनन्देश्वरमुत्तमम् । रुद्रस्य परमानन्दो यत्रजातो युधिष्ठिर
तत्तीर्थं कथयिष्यामि सर्वपापक्षय करम् ॥ १ ॥

युधिष्ठिर उवाच

आनन्दश्चैव सञ्जातो रुद्रस्य द्विजसत्तम । कथयतामेवतत्सर्वंसङ्क्षेपात्सहबान्धवैः

श्रीमार्कण्डेय उवाच

कथयामि नृपश्रेष्ठ आनन्देश्वरमुत्तमम् । दानवानांवधं कृत्वा देवदेवोमहेश्वर ॥

पूजितो दैवतैः सर्वैः किन्नरैर्यक्षपन्नगैः । आनन्दसंयुतो देवो ननर्त वृषवाहनः ॥
भैरवं रूपमास्थाय गौर्याधार्ङ्गसंस्थितः । भूतवेतालकङ्कालैर्भैरवैर्भैरवो वृतः ॥
ननर्त नर्मदातीरे दक्षिणे पाण्डुनन्दन ! । तुष्टैर्मरुद्गणैः सर्वैः स्थापितः कमलासनः
तदाप्रभृति तत्तीर्थमानन्देश्वरमुच्यते । अष्टम्यां च चतुर्दश्यां पौर्णमास्यां नराधिप
विधिवत्त्वार्च्चयेद्देवं सुगन्धेन विलेपयेत् । ब्राह्मणान्पूजयेत्तत्र यथाशक्त्या युधिष्ठिर
गोदानं तत्र कर्त्तव्यं वस्त्रदानं शुभावहम् । वसन्तस्य त्रयोदश्यां श्राद्धं तत्रैव कारयेत्
इङ्गुदैर्बदरैर्बिल्वैरक्षतैश्च जलेन वा । प्रेतानां कारयेच्छ्राद्धमानन्देश्वर उत्तमे ॥ १०॥
आनन्दिता भवेयुस्ते यावदाभूतसम्प्लवम् । सन्ततेर्वं न विच्छेदः सप्तजन्मसु जायते
आनन्दो हि भवेत्तेषां प्रतिजन्मनि भारत ॥ ११ ॥
इति श्रीस्कान्दे महापुराणे काशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
आनन्देश्वरमाहात्म्यवर्णनं नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

## षट्षष्टितमोऽध्यायः

### मातृतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र! मातृतीर्थमनुत्तमम् । सङ्गमस्य समीपस्थं नर्मदादक्षिणे तटे
मातरस्तत्र राजेन्द्र! सञ्जाता नर्मदा तटे । उमार्द्धनारिर्देवेशो व्यालयज्ञोपवीतधृक्
उवाच योगिनीवृन्दं कष्टं कष्टमहो हर । अजेयाः सर्वदेवानां त्वत्प्रसादान्महेश्वर ॥
तीर्थमत्र विधानेन प्रख्यातं वसुधातले ।
एवं भवतु योगिन्य इत्युक्त्वाऽन्तरधाच्छिवः ॥ ४ ॥

श्रीमार्कण्डेय उवाच

तत्र तीर्थे तु यो भक्त्या नवम्यां नियतः शुचिः ।

मूर्खस्त्रीबालशत्रूणां यश्छन्देनाऽनुवर्त्तते । व्यसने पतते घोरे सत्यमेतद्धुर्दारितम्

देव्युवाच

भार्ययाऽभ्यर्थितो भर्त्ता कारणं बहु भाषते ।
लघुत्वं याति सा नारी एवं शास्त्रेषु पठ्यते ॥ ९ ॥
प्राणत्यागं करिष्यामि यदि मां त्वं न मन्यसे ।
पार्वत्या प्रेरितो देवो गतोऽसौ दानवं प्रति ॥ १० ॥

ईश्वर उवाच

किमर्थं पिबसेधूमं किमर्थंतप्यसेतपः । किं दुःखंकिंनुसन्तापोवदकार्यमभीप्सितम्
युवा त्वं दृश्यसेऽद्यापिवर्षविंशतिरेवच । तदाचक्ष्व हि मे सर्वं तपसः कारणंमहत्

दानव उवाच

अचला दीयतां भक्तिर्मम स्थैर्य्यं तवोपरि । अपरं वर्षसाहस्रं निर्विघ्नं मेगतंविभो
दिवसानां सहस्रे द्वे पूर्णे त्वत्तपसा मम ॥ १४ ॥

ईश्वर उवाच

याचयाऽभीप्सितंकार्यंतुष्टोऽहं तव सुव्रत । देवस्यवचनंश्रुत्वाचिन्तयामासदानवः
किं नाकं याचयाम्यद्य किमद्य सकलां महीम् ।
एवं सञ्चिन्तयामास कामबाणेन पीडितः ॥ १६ ॥

दानव उवाच

यदि तुष्टोऽसि मे देव वरं दास्यसि मे प्रभो ।
संग्रामैस्तु न तुष्टोऽहं बलं नास्तीति किञ्च न ॥ १७ ॥
यस्य मूर्द्धन्यहंदेवपाणिनासमुपस्पृशे । देवदानवगन्धर्वोभस्मसाद्यातु तत्क्षणात्

ईश्वर उवाच

यत्त्वया चिन्तितं किञ्चित्तत्सर्वं सफलं तव । उत्तिष्ठ गच्छशीघ्रंत्वंभवनंप्रतिदानव

दानव उवाच

स्थीयतां देवदेवेश! यावज्ज्ञास्यामि ते वरम् ।

नारद उवाच

देवदानवसिद्धानां गन्धर्वोरगरक्षसाम्। सर्वेषामेव देवेशो हरते ध्रुवमापदम्॥
असंभाव्यं न वक्तव्यंमनसापि न चिन्तयेत्। ईदृशीनैवबुद्ध्यामिआपदंचविभोतव

ईश्वर उवाच

गच्छ नारद शीघ्रं त्वं यत्र देवो जनार्द्दनः। विदितं च त्वया सर्वं यत्कृतंदानवेनतु
अवध्यो दानवो ह्येष सेन्द्रैरपि मरुद्गणैः। गत्वा तु केशवं देवं निवेदय महामुने !॥

नारद उवाच

न तु गच्छाम्यहं देव सुप्तः क्षीरोदधौसुखी। केशवःप्रेरणे ह्येषामादेशोदीयतांप्रभो
मात्रा स्वस्रा दुहित्रा वा राजानं च तथा प्रभुम्।
गुरुं चैवाऽदितः कृत्वा शयानं न प्रबोधयेत्॥ ४३॥

ईश्वर उवाच

यदि कश्चिदगारेषु वह्निरुत्पद्यते महान्। निधनंयान्ति तत्रस्था यद्बुद्ध्येरन्नसूरयः

नारद उवाच

शीघ्रं गच्छ महादेवआत्मानं रक्ष सुप्रभो। गच्छाम्यहं न सन्देहो यत्रदेवोजनार्द्दनः
ततो नन्दिमहाकालौ स्तम्भहस्तौ भयानकौ।
जघ्नतुर्दानवं तत्र मुद्गरादिभिरायुधैः॥ ४६॥
त्रयोऽपि च महाकायाः सप्ततालप्रमाणकाः।
न शमो जायते तेषां युध्यतां च परस्परम्॥ ४७॥
ततश्चानन्तरंविप्रोऽगच्छत्तंकेशवं प्रति। सुप्तं क्षीरार्णवेऽपश्यच्छेषपर्यङ्कसंस्थितम्
लक्ष्म्या पादयुगं गृह्य ऊरूपरि निवेशितम्।
अप्सरोगीयमानं तु भक्त्याऽऽनम्य च केशवम्॥ ४९॥
अद्य मे सफलंजन्मजीवितंचसुजीवितम्। उत्थापयस्वदेवेशंलक्ष्मित्वमविशंकिता
नारदस्यवचः श्रुत्वा पदाङ्गुष्ठं व्यमर्द्दयत्। नारदस्तिष्ठतेद्वारिउत्तिष्ठमधुसूदन
देवोऽपि नारदं दृष्ट्वापरंहर्षमुपागतः। स्वागतं तु मुनिश्रेष्ठ ! सुप्रभाताऽद्यशर्वरी॥

नारद उवाच

अद्य मे सफलं देवप्रभात तवदर्शनात् । कुशलं च न देवानां शीघ्रमुत्तिष्ठगम्यताम्

श्रीविष्णुरुवाच

मत्वा यन्दृश्य रद्रश्च ये धाम्ने तु मदृणा । आपद कारणयच्चतत्त्वमाख्यातुमर्हसि

नारद उवाच

दानवेन महार्तान्म नरान्तम सुदारुणम् । रुद्रेण च वरो दत्तोभस्मत्वं मनसेप्सितम्

परदानयन्नैव ■ दय हन्तुमर्हति । ईदृशा चेष्टिन भास्या नीतो देवोऽमरैः सह ॥

नारदस्य वच श्रुत्वा नगामस्मुनिर्हरिः । दृष्ट्वा देवस्तमीशानगच्छन्तदिशमुत्तराम्

दृष्ट्वा देव च रुद्राऽय परिप्यज्य पुन पुन । नमस्कृत्य जगन्नाथ देव च मधुसूदन

विष्णुरुवाच

भयस्य कारण देव' कथ्यता च महेश्वर । देवदानवयक्षाणां प्रेरयेय यमाल्यम् ॥

स्थाने च कृतो धर्मो युष्माकञ्च महेश्वर ।

छित्वा शिरस्तथाङ्गानि इन्द्रियाणि न मवाय ॥ ६० ॥

ईश्वर उवाच

नास्ति सौख्यं ■ मृत्यु नास्ति सौख्य च रोगिषु ।

पराधीने न सौख्य तु स्त्रीजिते च विशेषत ॥ ६१ ॥

स्त्रीजितेन मया विष्णो' वरो दत्तस्तु दानवे ।

यस्य मूर्ध्नि न्यसेत्पाणि स भवेद्भस्मपुञ्जवत् ॥ ६२ ॥

अनेयश्चामरश्चैव मया हा च स केशव '। हन्तुमिच्छतिमा पापउपायस्तथविधने

विष्णुरुवाच

गच्छन्तु अमरा सर्व युष्माभि महाशङ्कर । उपाय सञ्चयाम्यथ यथार्थदानवस्यच

रेवायाश्च तटे तिष्ठ देव त्वममरैः सह । कालक्षेपो न कर्तव्योगम्यतात्वरितम्प्रभो

दक्षिणा यत्र गङ्गा च रेवा चैव महानदी ।

यत्र यत्र च दृश्येन प्राचीचैव सरस्वती ॥ ६६ ॥

तत्समं च महातीर्थं न मर्त्ये चैव दृश्यते । स्नानं ये तत्र कुर्वन्ति दानञ्चैव तु भक्तितः
सप्तजन्मकृतं पापं नश्यते नात्र संशयः । एतत्तीर्थं महापुण्यं सर्वपातकनाशनम् ॥

गम्यतां तत्र देवेश! लुङ्केशं त्वं सहामरैः ।
विष्णोस्तु वचनादेव प्रविष्टो ह्रदमुत्तमम् ॥ ६१ ॥

रतिं सुमहतीञ्चक्रे सह तत्र मरुद्गणैः । ततश्चानन्तरं देवो मायां कृत्वा ह्यनेकधा ॥
वसन्तमासं संसृज्य उद्यानवनशोभितम् । अशोकैर्बकुलैश्चैव ब्रह्मवृक्षैः सुशोभनैः ॥

श्रीवृक्षैश्च कपित्थैश्च शिरीषै राजचम्पकैः ।
श्रीफलैश्च तथा तालैः कदम्बोदुम्बरैस्तथा ॥ ७२ ॥

अश्वत्थादिद्रुमैश्चैव नानावृक्षैरनेकशः । नानापुष्पैःसुगन्धाढ्यं भ्रमरैश्चनिनादितम्

तस्मिन्मध्ये महावृक्षो न्यग्रोधश्च सुशोभनः ।
बहुपक्षिसमायुक्तः कोकिलारावनादितः ॥ ७४ ॥
कृष्णेन च कृतं तस्मिन्कन्यारूपं च तत्क्षणात् ।
न तस्याः सदृशी कन्या त्रैलोक्ये सचराचरे ॥ ७५ ॥
अन्याश्च कन्यकाः सप्त सुरूपाः शुभलोचनाः ।
दिव्यरूपधराः सर्वा दिव्याभरणभूषिताः ॥ ७६ ॥
पुमांसमभिकाङ्क्षन्त्यो यथैकः कामयेत्स्त्रियः ।
मौक्तिकै रत्नमाणिक्यैर्वैडूर्यैश्च सुशोभनैः ॥ ७७ ॥

कामहारैश्च वंशैश्च बद्धो हिन्दोलकः कृतः । आरूढाश्च महाकन्या गायन्ते सुस्वरं तदा

मारुतः शीतलो वाति वनं स्पृष्ट्वा सुशोभनम् ।
वातेन प्रेरितो गन्धो दानवो घ्राणपीडितः ॥ ७९ ॥

ततः कुसुमगन्धेन विस्मयं परमं गतः । आघ्राय चेदृशं पुण्यं न दृष्टं न श्रुतं मया

वने चिन्तयतः किञ्चिद्ध्वनिगीतं सुशोभनम् ।
गीतस्य च ध्वनिं श्रुत्वा मोहितो मायया हरेः ॥ ८१ ॥
व्याधस्यैव महाकूटे पतन्ति च यथा मृगाः ।

कालस्पृष्ट ( कालपृष्ठ ) स्तथा कृष्णे पतितश्च नराधिप ॥ ८२ ॥
दृष्ट्वा कन्या च तां दैत्यो मूर्च्छया पतितो भुवि ।
पतितेन तु दुष्टेन कन्या धरातले स्थिता ॥ ८३ ॥
आस्यं दृष्ट्वा तु नारीणां पुनः कामेन पीडितः ।
गृहीत्वा हेमदण्डं तु ता पातयितुमिच्छति ॥ ८४ ॥

कन्योवाच

मा मानुस्पर्शाय त्वं हि कुमार्यहं कुलोत्तम ॥
भो मुञ्चमुञ्च मा शीघ्रं यावद्गच्छाम्यहं गृहम् ॥ ८५ ॥

दानव उवाच

अहं विवाहमिच्छामि त्वयासहसुशोभने । मुहूर्ते मङ्गले रात्रौ भवत्येवंनसंशयः

कन्योवाच

पितारक्षति कौमार्ये भर्त्ता रक्षतियौवने । पुत्रोरक्षतिवृद्धत्वे न स्त्रीस्वातन्त्र्यमर्हति

न स्वातन्त्र्य ममैवास्ति उत्पन्नाऽहं महत्कुले ।
याच्यस्तु मत्पिता भ्राता मातापि हि तथैव च ॥ ८८ ॥

दानव उवाच

यदि मा नेच्छसे त्वय स्वातन्त्र्यं नावलम्बसे ।
ममापि च तदा हत्या सत्यं च शुभलोचने ॥ ८९ ॥

कन्योवाच

विश्वासो नैव कर्तव्यो यादृशो तादृशो नरे ।
नराः स्त्रीषु विचित्राश्च लम्पटाः काममोहिताः ॥ ९० ॥
परिणीय मा त्वं हि भुङ्क्ष्व भोगान्मया सह ।
जन्मनाशो भवेत्पश्चात्त्व नान्यो भवेन्मम ॥ ९१ ॥
ब्राह्मणी क्षत्रिणी वैशी शूद्री यावत्तथैव च ।
द्वितीयो न भवेद्भर्त्ता एकाकी चेह जन्मनि ॥ ९२ ॥

दानव उवाच

यत्त्वया गदितं वाक्यं तन्मया धारितं हृदि ।
प्रत्ययं मे कुरुष्वाऽद्य यत्ते मनसि रोचते ॥ ९३ ॥

कन्योवाच

जानीष्व गोपकन्यां मां क्रीडामि सखिभिः सह ।
अस्मत्कुलेषु यद्दिव्यं तत्कुरुष्व यथाविधि ॥ ९४ ॥
न तद्दिव्यं कुलेऽस्माकं विषं कोशं न तत्तुला ।
गोपान्वयेषु सर्वेषु हस्तः शिरसि दीयते ॥ ९५ ॥
कामान्धेनैव राजेन्द्र! निक्षिप्तो मस्तके करः ।
तत्क्षणाद्भस्मसाद्भूतो दग्धस्तृणचयो यथा ॥ ९६ ॥
केशवोपरिदेवैस्तुपुष्पवृष्टिः शुभाकृता । हृष्टाःसर्वेऽगमन्देवास्वस्थानंविगतज्वराः
क्षीरोदं केशवोऽगच्छत्कालपृष्ठे निपातिते । यइदंश्रणुयाद्भक्त्याचरितंदानवस्यच
स जयी जायते नित्यं शङ्करस्य वचोयथा ।
एतस्मात्कारणाद्राजँल्लिङ्गेश्वर ( लुङ्केश्वर ) मितिश्रुतम् ॥ ९९ ॥
लीनं च पातकं यस्मात्स्नानमात्रेण नश्यति ।
त्वगस्थिशोणितं मांसं मेदस्नायुस्तथैव च ॥ १०० ॥
मज्जाशुक्रगतंपापं नश्यते जन्मकोटिजम् । लुङ्केश्वरे महाराज तोयं पिबति भक्तितः
त्रिभिःप्रसृतिमात्राभिः पापं याति सहस्रधा ।
विशेषेण चतुर्दश्यामुभौ पक्षौ तु चाष्टमी ॥ १०२ ॥
उपोष्य यो नरो भक्त्या पितृणां पाण्डुनन्दन !।
उद्धृतास्ते सर्वे नारकीयाःपितामहाः ॥ १०३ ॥
काकिणीं चैव यो दद्याद्ब्राह्मणेवेदपारगे । तेन दानफलंसर्वंकुरुक्षेत्रादिकं च यत्
प्राप्तं तु नान्यथा राजञ्छङ्करो वदते त्विदम् ।
स्पर्शलिङ्गमिदं राजञ्छङ्करेण तु निर्मितम् ॥ १०५ ॥

स्पर्शमात्रे मनुष्याणामुद्वासोऽभिजायते। तेन दानफलसर्वं कुरुक्षेत्रादिकच यत्

एतस्मात्कारणाद्राजेँल्लोकपालाश्च रक्षकाः।

दुर्गा च रक्षणे सृष्टा चतुर्हस्तधरा शुभा ॥ १०१ ॥

धनदो लोकपालेशो रक्षकश्चेश्वरस्य च। रक्षति च सदा कालं महद्व्यापाररूपतः ॥

पुत्रभ्रातृत्वमारूपं स्वामिसम्बन्धरूपिभिः। लुङ्केश्वर नराजेन्द्र देवैर्नाऽद्यापि मुच्यते

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे लुङ्केश्वरतीर्थमाहात्म्यवर्णनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

## अष्टषष्टितमोऽध्याय

### धनदतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

धनदस्य तु तत्तीर्थं ततो गच्छेद्युधिष्ठिर। नर्मदादक्षिणे कूले सर्वपापक्षयङ्करम् ॥

सर्वतीर्थफलं तत्र प्राप्यते नात्र संशयः। चैत्रमासत्रयोदश्यां शुक्लपक्षे जितेन्द्रियः

उपोष्य परया भक्त्या रात्रौ कुर्वीत जागरम्।

पञ्चामृतेन राजेन्द्र! स्नापयेद्धनदं बुधः ॥ २ ॥

दीपं घृतेन दातव्यं गीतं वाद्यश्च कारयेत्। प्रभाते पूजयेद्विप्रानात्मनः श्रेय इच्छति

प्रतिग्रहसमर्थाश्च विद्यासिद्धान्तवादिनः।

धौतस्मार्त्तक्रियायुक्तान्परदारपराङ्मुखान् ॥ ५ ॥

पूजयेद्गोहिरण्येन वस्त्रोपानहभोजनैः। छत्रशय्याप्रदानेन सर्वपापक्षयो भवेत् ॥

त्रिजन्मजनितं पापं धनदस्य प्रभावतः। स्वर्गदं दुर्विनीतानां विनीतानां च मोक्षदम्

अन्नदं च दरिद्राणां भवेज्जन्मनि जन्मनि। कुलीनत्वदुःखदानि स्वभायाज्ञायते नरे

व्याधिध्वंसो भवेत्तेषां नर्मदोदकसेवनात्।

धनदस्य तु यस्तीर्थे विद्यादानं प्रयच्छति ॥ ९ ॥
स याति भास्करे लोके सर्वव्याधिविवर्जिते ।
देवद्रोणीं च तत्रैव स्वशक्त्या पाण्डुनन्दन !॥ १० ॥
ये प्रकुर्वन्ति भूयिष्ठां रेवाया दक्षिणे तटे । तेयान्ति शाङ्करे लोकेसर्वदुःखविवर्जिते
इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे
रेवाखण्डे धनदतीर्थमाहात्म्यवर्णनंनामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

## एकोनसप्ततितमोऽध्यायः

### मङ्गलेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तुराजेन्द्रमङ्गलेश्वरमुत्तमम् । स्थापितंभूमिपुत्रेणलोकानांहितकाम्यया
तोषितः परया भक्त्या शङ्करः शशिशेखरः ।
चतुर्द्दश्यां गुरुर्देवः प्रत्यक्षो मङ्गलेश्वरः ॥ २ ॥
ब्रूहि पुत्र! वरं शुभ्रं तत्ते दास्यामि मङ्गल !॥ ३ ॥

मङ्गल उवाच

प्रसादं कुरु मे शम्भो प्रतिजन्मनि शङ्कर । त्वदङ्गस्वेदसम्भूतो ग्रहमध्येवसाम्यहम्
त्वत्प्रसादेन ईशान पूज्योऽहं सर्वदैवतैः । कृतार्थोह्यद्य सञ्जातस्तव दर्शनभाषणात्
स्थानेऽस्मिन्देवदेवेश मम नाम्ना महेश्वरः । एवं भवतुतेपुत्रेत्युक्त्वाचान्तरधीयत
मङ्गलोऽपि महात्मा वै स्थापयित्वा महेश्वरम् ।
आत्मयोगबलेनैव शूलिनाऽपूजयत्ततः । ७ ॥
सर्वदुःखहरंलिङ्गं नाम्नावै मङ्गलेश्वरम् । तत्र तीर्थेतु वैराजन्ब्राह्मणान्प्रीणयेत्सुधीः
सपत्नीकान्नृपश्रेष्ठ चतुर्थ्यङ्गारके व्रते । पत्नीभर्त्तारसंयुक्तं विद्वांसं श्रोत्रियं द्विजम्

घृतान्ने चैव गोधूमैर्यं शिवमुद्दिश्य दीयते ।
प्रीयतां [illegible] महादेव सपत्नीको वृषध्वज ॥ १० ॥
वस्त्रयुग्म प्रदातव्यंलोहित पाण्डुनन्दन । धूर्वही रक्तवर्णौ च शुभ्रं कृष्ण तथैव च
छत्र शय्या शुभा चैव रक्तमाल्यानुलेपनम् ।
दातव्यं पाण्डवश्रेष्ठ विशुद्धेनान्तरात्मना ॥ १२ ॥
चतुर्थ्यान्तु तथाऽष्टम्या पक्षयो शुक्लकृष्णयो ।
श्राद्ध तथैव कर्त्तव्यं वित्तशाठ्येन वर्जित ॥ १३ ॥
प्रेता भवन्तिसुप्रीता युगमेक महीपते । अपुत्रो जायते यस्य प्रतिजन्म नृपोत्तम
तस्य तीर्थस्य भावेन सर्वाङ्गरुचिरो नृप । मङ्गलमयने यदीनाऽशुभं विद्यते क्वचित्
भक्त्या च कीर्त्तयेन्नित्य तस्य पापं व्यपोहति ॥ १६ ॥
इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्या ंसहितायाम्पञ्चमेऽवन्तीखण्डे
रेवाखण्डे मङ्गलेश्वरतीर्थमाहात्म्यवर्णननामैकोननमतितमोऽध्याय ॥ ६९ ॥

---

## सप्ततितमोऽध्याय

### रवितीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

रेवाया उत्तरे कूले तीर्थं परमशोभनम् । रविणा निर्मित पार्थ सर्वपापक्षयङ्करम्
स्थापितेन भास्करस्तत्र तिष्ठत चोत्तरे तटे ।
सर्वव्याधिहर पु सा नर्मदाया व्यवस्थित ॥ २ ॥
षष्ठ्यांसप्तम्यांतपश्चाष्टम्यांचचतुर्दशीम् । स्नानय कारयेन्मर्त्य श्राद्धमनेषु भक्तित
तस्य पापक्षय पार्थ सूर्यलोके महीयते ॥ ३ ॥
तत स्वर्गाच्च्युत सोऽपि जायते विमले कुले ।

धनाढ्योव्याधिनिर्मुक्तो जीवेज्जन्मनि जन्मनि ॥ ४ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे रवितीर्थमाहात्म्यवर्णनंनाम सप्ततितमोऽध्यायः ॥ ७० ॥

---

# एकसप्ततितमोऽध्यायः

## कामेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

कामेश्वरंततश्चान्यच्छृणु पाण्डवसत्तम । सिद्धोयत्रगणाध्यक्षोगौरीपुत्रोमहाबलः

तत्रतीर्थे तु यो भक्त्या भक्तियुक्तो जितेन्द्रियः ।

पञ्चामृतेन संस्नाप्य धूपनैवेद्यपूजनैः ॥ २ ॥

प्रसाद्यजगतामीशं सर्वपापः प्रमुच्यते । अष्टम्यां मार्गशीर्षस्यतत्र स्नात्वायुधिष्ठिर

यो येन यजते तत्र स तं काममवाप्नुयात् ॥ ४ ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे कामेश्वरतीर्थमाहात्म्यवर्णनंनामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

## द्विसप्ततितमोऽध्यायः

### मणिनागेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र मणिनागेश्वरं शुभम् । उत्तरे नर्मदाकूले सर्वपापक्षयङ्करम् ॥
स्थापितं मणिनागेन लोकानां हितकाम्यया ॥ १ ॥

युधिष्ठिर उवाच

आशीविषेण सर्पेण ईश्वरः स्थापितः कथम् ।
क्षुद्रः सर्वस्य लोकस्य भयदो विषदारुणः ॥ २ ॥
कथयस्व तात मे सर्वं पातकघ्नं पापनाशनम् । मम सन्तापदं दुःखं दुर्योधनसमुद्भवम्
क्षणमीक्षोद्भवं रौद्रं दुःखं पाञ्चालीसमुद्भवम् ।
तव वक्त्राम्बुजोद्भवं प्लावितं निर्वृतिं गतम् ॥ ४ ॥
श्रुत्वा तव मुखोद्गीता कथा वै पापनाशिनीम् ।
अयुक्तमिदमस्माकं द्विजा क्लेशो न शाम्यति ॥ ५ ॥
अथवाप्राप्स्यते तात विद्यादानस्य यत्फलम् । तत्फलं प्राप्यमनित्यं कथाश्रवणतोऽधर

श्रीमार्कण्डेय उवाच

यथा यथा त्वं नृप भाषसे च तथा तथा मे सुखमेति भारती ।
शैथिल्यता वा जरयान्वितस्य स्वल्सौहृदं नश्यति नैव तात ॥
शृणुष्व तस्मात्सह बान्धवैश्च कथामिमां पापहरां प्रशस्ताम् ॥ ७ ॥
कथयामि यथावृत्तमितिहासं पुरातनम् ॥ ८ ॥
कथितं पूर्वतो वृत्तं पारम्पर्येण भारत ॥ ९ ॥
द्वे भार्ये कश्यपस्य रास्तासंवलोकेष्वनुत्तमे । गरुत्मन्तं च विनताऽसूत कद्रूरहानथ
सन्तोषेण च ते तात तिष्ठतः कश्यपे गृहे । कद्रूश्च विनतानाम द्वेषं चक्रिरे सदा

ताभ्यां सार्द्धं क्रीडते च कश्यपोऽपि प्रजापतिः ।
ततस्त्वेकदिने प्राप्ते आश्रमस्था शुभानना ॥ १२ ॥

उच्चैःश्रवं हयं दृष्ट्वा मनोवेगसमन्वितम् । पश्यपश्य हि तन्वङ्गीहयंसर्वत्रपाण्डुरम्
धावमानमविश्रान्तंजवेनमनसोपमम् । तं दृष्ट्वासहसाघाऽश्वमीर्ष्याभावेनचाब्रवीत् ।

कद्रूरुवाच

ब्रूहिभद्रेसहस्रांशोरश्वःकिंवर्णकोभवेत् । अहंब्रवीमि कृष्णोऽयं त्वं किं वदसितद्वद

विनतोवाच

पश्यसे ननु नेत्रैश्च कृष्णंश्वेतं न पश्यसि । असत्यभाषणाद्भद्रे यमलोकंगमिष्यसि
सत्यानृते तु वचने पणस्तव ममैव तु । सहस्रं चैव वर्षाणां दास्यहं तव मन्दिरे ॥

असत्या यदि मे वाणी कृष्ण उच्चैःश्रवा यदि ।
तदाऽहं त्वद्गृहे दासी भवामि सर्पमातृके ॥ १८ ॥

दिउच्चैश्रवाःश्वेतोऽहंदासीचतवैवतु । एवं परस्परंताभ्यां सम्वादोऽयंव्यवर्द्धत

आश्रमेषु गता बाला रात्रौ चिन्तापरा स्थिता ।
बन्धुवर्गस्य कथितं समस्तं तद्विचेष्टितम् ॥ २० ॥

पुत्राणांकथितंपार्थपणश्चैवमयाकृतम् । हाहाकारःकृतःसर्पैःश्रुत्वामात्रापणंकृतम्
तादासीनसन्देहःश्वेतोभास्करवाहनः। उच्चैःश्रवाहयःश्वेतोनकृष्णोविद्यतेक्वचित्

कद्रूरुवाच

यथाऽहंनभवेदासीतत्कार्यंच विचिन्त्यताम् । विशध्वंरोमकूपेषुह्युच्चैःश्रवहयस्यतु
एकं मुहूर्त्तमात्रं तु यावत्कृष्णःस दृश्यते । क्षणमात्रेणचैकेन दासीसा भवते मम

दासीं कृत्वा तु तां तन्वीं विनतां सत्यगर्विताम् ।
ततः स्वस्थानगाः सर्वे भविष्यथ यथासुखम् ॥ २५ ॥

सर्पा ऊचुः

यथात्वंजननीचाम्बसर्वेषांभुवि पूजिता । तथासाऽपिविशेषेण वश्चिन्त्यानमातरः

माता च पितृभार्या च मातृमाता पितामही ।

कर्मणा मनसा वाचा हितं तासां समाचरेत् ॥ २७ ॥
मातरस्तेन वाक्येन क्रुद्धाः कालानलोपमाः । मम वाक्यमकुर्वाणा ये केचिद्भुवि पन्नगाः ॥
हव्यवाहमुखे सर्वे ते यास्यन्त्यविचारितम् । मातुस्तद्वचनं श्रुत्वा सर्वे चैव भुजङ्गमाः ॥
कश्चित्प्रविष्टो रोमेषु उच्चैःश्रवहयस्य च । नष्टाः केचिद्दशदिशः कद्रूशापभयात्तत ॥
केचिद्गङ्गाजले मग्नाः केचिन्नष्टाः सरस्वतीम् ।
केचिन्महोदधौ लीनाः प्रविष्टा विन्ध्यकन्दरे ॥ ३१ ॥
आश्रित्य नर्मदातोये मणिनागोत्तमो नृप । तपश्चचार विपुलमुत्तरे नर्मदातटे ॥
मातृशापभयात्पार्थ ध्यायते कामनाशनम् ।
अच्छेद्यमप्रतर्क्यं च विनाशोत्पत्तिवर्जितम् ॥ ३३ ॥
वायुभक्षः शतं साग्रं तदर्धं रविवीक्षकः । एवं ध्यानरतस्यैव प्रत्यक्षस्त्रिपुरान्तकः ॥
साधुसाधुमहाभाग सत्यवांस्तु भुजङ्गम । त्वया भक्त्या गृहीतोऽहं प्रीतस्तेऽद्य रगेश्वर ॥
वरं याचय मे क्षिप्रं यत्ते मनसि वर्तते ॥ ३५ ॥

मणिनाग उवाच

मातृशापभयान्नाथ स्थितोऽहं नर्मदातटे । त्वत्प्रसादेन मे नाथ मातृशापो भवेद्वृथा ॥

ईश्वर उवाच

हव्यवाहमुखं वत्स न प्राप्स्यसि ममाज्ञया ।
मम लोके निवासश्च तव पुत्र भविष्यति ॥ ३७ ॥

मणिनाग उवाच

अत्र स्थाने महादेव स्थीयतामंशमात्रतः । सहस्रांशेन भागेन स्थीयतां नर्मदातटे ॥
उपकाराय लोकानां मम नाम्नैव शङ्कर ॥ ३८ ॥

ईश्वर उवाच

स्थापयस्व परं लिङ्गमाज्ञया मम पन्नग । इत्युक्त्वान्तर्हितो देवो जगाम ह्युमया सह ॥

मार्कण्डेय उवाच

तत्रतीर्थे ये गत्वा शुचिप्रयतमानसाः । पञ्चम्यां वाथ चतुर्दश्यामष्टम्यां शुक्लकृष्णयोः

अर्चयन्ति सदा पार्थ नोपसर्पन्ति ते ममम् ।
दध्ना च मधुना चैव घृतेन क्षीरयोगतः ॥ ४१ ॥
स्नापयन्ति विरूपाक्षमुमादेहार्धधारिणम् । कामाङ्गदहनं देवमथासुरनिषूदनम् ॥
स्नाप्यमानञ्च ये भक्त्या पश्यन्ति परमेश्वरम् ।
ते यान्ति च परे लोके सर्वपापविवर्जिते ॥ ४३ ॥
श्राद्धं येतेषु ये पार्थ चाष्टम्यां पञ्चमीषु च । ब्राह्मणैश्चसदायोग्यैर्वेदपाठकचिन्तकैः
स्वदारनिरतैः श्लक्ष्णैः परदारविवर्जितैः । षट्कर्मनिरतैस्तात शूद्रप्रेषणवर्जितैः
खञ्जाश्च दर्दु राः षण्ढा वार्द्धु ष्याश्च कुशीवलाः ।
भिन्नवृत्तिकराः पुत्र! नियोज्या न कदाचन ॥ ४६ ॥
वृषली मन्दिरे यस्य महिषीं यस्तु पालयेत् ।
स विप्रो दूरतस्त्याज्यो व्रते श्राद्धे नराधिप !॥ ४७ ॥
काणाण्डुषण्ढाश्च मण्डाश्च वेदपाठविवर्जिताः ।
नते पूज्या द्विजाः पार्थ! मणिनागेश्वरे शुभे ॥ ४८ ॥
यदीच्छेदूर्ध्वगमनमात्मनः पितृभिः सह ।
सर्वाङ्गरुचिरां धेनु यो दद्यादग्रजन्मने ॥ ४९
स याति परमं लोकं यावदाभूतसंप्लवम् ।
ततः स्वर्गाच्च्युतः सोऽपि जायते विमले कुले ॥ ५० ॥
ये पश्यन्ति परं भक्त्या मणिनागेश्वरं नृप !।
न तेषां जायते वंशे पन्नगानां भयं नृप !॥ ५१ ॥
पन्नगः शङ्कते तेषां मणिनागप्रदर्शनात् । सौपर्णरूपिणस्ते वै दृश्यन्ते नागमण्डले
फलानि चैवदानानांश्रृणुष्वाऽथनृपोत्तम । अन्नंसंस्कारसंयुक्तं ये ददन्तेनरोत्तमाः
तोयं शय्यां तथा छत्रं कन्यां दासीं सुभाषिणीम् ।
पात्रे देयं यतो राजन्यदीच्छेच्छ्रेय आत्मनः ॥ ५४ ॥
सुरभीणि च पुष्पाणि गन्धवस्त्राणि दापयेत् ।

दीपं धान्यं गृहं शुभ्रं सर्वोपस्करसंयुतम् ॥ ५१ ॥
येऽददन्नेपरं भक्त्या ते व्रजन्ति त्रिविष्टपम् । मणिनागे नृपश्रेष्ठ यश्चदानप्रदीयते
तस्य दानस्य भावेन स्वर्गे वासो भवेद्ध्रुवम् ।
पातकानि प्रणश्यन्ति आमपात्रे यथा जलम् ॥ ५७ ॥
नर्मदातोयसंसिद्धभोज्य विप्रेश्वरातिथ । सोऽपिपापैर्विनिर्मुक्त क्रीडते देवतैः सह
ततः स्वर्गच्युतानां हि लक्षणं प्रवदाम्यहम् ।
दीर्घायुषो नीरोगाश्च पुत्रधनवन्त सुशोभना ॥ ५९ ॥
सर्वव्याधिविनिर्मुक्ता सुतभृत्यैः समन्विता ।
त्यागिनो भोगसंयुक्ता धर्माख्यानरता सदा ॥ ६० ॥
देवद्विजगुरोर्भक्तास्तीर्थसेवापरायणा ।
मातापितृपरा नित्यं द्रोहकार्यविवर्जिता ॥ ६१ ॥
एभिरेवगुणैर्युक्ता येनरा पाण्डुनन्दन । सत्यलोकस्य गतास्ते याना स्वर्गवासं प्रयान्ति
सर्वतीर्थवरं तीर्थं मणिनागं नृपोत्तम । तीर्थाख्यानमिदं पुण्यं यश्चैवशृणुयादपि
सोऽपि पापैर्विनिर्मुक्त शिवलोके महीयते । न विप्रमते तेषां विचरन्ति यथेच्छया
भाद्रपदा च यत्सृष्ट्वापुण्यं सूर्यस्यदर्शने । तत्फलं समवाप्नोति आख्यानश्रवणेन तु

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे मणिनागेश्वरतीर्थमाहात्म्यवर्णननाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

# त्रिसप्ततितमोऽध्यायः

## गोपारेश्वरमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

नर्मदादक्षिणे कूले तीर्थं परमशोभनम्। सर्वपापहरं पार्थ! गोपारेश्वरमुत्तमम्
गोदेहान्निःसृतं लिङ्गं पुण्यं भूमितले नृप!॥ १॥

युधिष्ठिर उवाच

गोदेहान्निः सृतं कस्माल्लिङ्गं पापक्षयङ्करम्।
दक्षिणे नर्मदाकूले मणिनागसमीपतः॥
संक्षेपात्कथ्यतां विप्र! गोपारेश्वरसम्भवम्॥ २॥

श्रीमार्कण्डेय उवाच

कामधेनुस्तपस्तत्र पुरा पार्थ चकार ह। ध्यायते परया भक्त्या देवदेवं महेश्वरम्
तुष्टस्तस्या जगन्नाथःकपिलायामहेश्वरः। निःसृतो देहमध्यात्तुअच्छेद्यःपरमेश्वरः
तुष्टो देवि! जगन्मातः कपिले परमेश्वरि। आराधनं कृतंयस्मात्तद्वदाऽऽशुशुभानने

सुरभ्युवाच

लोकानामुपकाराय सृष्टाऽहं परमेष्ठिना।
लोककार्याणि सर्वाणि सिद्ध्यन्ति मत्प्रसादतः॥ ६॥
लोकाः स्वर्गं प्रयास्यन्ति मत्प्रसादेन शङ्कर!।
तीर्थे त्वं भव मे शम्भो! लोकानां हितकाम्यया॥ ७॥
तथेति भगवानुक्त्वा तीर्थे तत्रावसन्मुदा।
तदाप्रभृति तत्तीर्थं विख्यातं वसुधातले।
स्नानेनैकेन राजेन्द्र! पापसङ्घं व्यपोहति॥ ८॥
गोपारेश्वरगोदानं यस्तु भक्त्या च कारयेत्।

योग्ये द्विजोत्तमे देया योग्या धेनुः सकाञ्चना ॥

सवत्सा तरुणी शुभ्रा चतुर्क्षीरासवस्त्रका । कृष्णपक्षे चतुर्दश्यामष्टम्यावाप्रदापयेत्
सर्वेषुचैव मासेषुकार्त्तिके चविशेषतः । दापयेत्परयाभक्त्या द्विजेस्वाध्यायतत्परे
विधिना चप्रदद्याद्योविधिनायस्तुगृह्णते । तावुभौपुण्यकर्माणौप्रेक्षकःपुण्यभाजनम्
पिण्डदानप्रकुर्याच प्रेतानामक्तिसंयुतः । पिण्डेनैकेनराजेन्द्र प्रेतायान्तिपरागतिम्
भक्त्या प्रणाम रुद्रस्य ये कुर्वन्ति दिनेदिने । तेषांपापंप्रलीयेतभिन्नपात्रेजलं यथा
तत्र तीर्थे तुयो राजन्वृषभ च समुत्सृजेत् । पितरश्चोद्धृतास्तेनशिवलोकेमहीयते

युधिष्ठिर उवाच

वृषोत्सर्गे कृते तात फलं यज्जायते नृणाम् । तत्सर्वंकथयस्वाशु प्रयत्नेन द्विजोत्तम

श्रीमार्कण्डेय उवाच

सर्वलक्षणसम्पूर्णे वृषे चैव तु यत्फलम् । तदहं सम्प्रवक्ष्यामि शृणुष्व धर्मनन्दन ॥

कार्त्तिके चैव वैशाखे पूर्णिमायां नराधिप ।

रुद्रस्य सन्निधौ भूत्वा शुचिः स्नातो जितेन्द्रियः ॥ १८ ॥

वृषस्यैवसमुत्सर्गं कारयेत्तीर्थमाहरः । सान्निध्येकारयेत्सुम्बवत्सोवहिलकाःशुभाः
कृत्वा ॥ विप्रमुत्थाय सर्वलक्षणसंयुतः । प्रीयतांचमहादेवो ब्रह्मा विष्णुर्महेश्वरः
वृषभे रोमसङ्ख्या या सर्वाङ्गेषु नराधिप । तावद्वर्षप्रमाणं तु शिवलोके महीयते
शिवलोके वसित्वा ॥ पश्चान्मर्त्येषु जायते । कुले महतिसम्भूतिर्धनधान्यसमाकुले

नीरोगो रूपवांश्चैव विद्याढ्यः सत्यवाक्शुचिः ।

गोपारेश्वरमाहात्म्यं मया ख्यातं युधिष्ठिर ॥

गोदेहान्निःसृतं लिङ्गं नर्मदादक्षिणे तटे ॥ २३ ॥

इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे गोपारेश्वरमाहात्म्यवर्णननाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

# चतुःसप्ततितमोऽध्यायः

## गौतमेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

रेवाया उत्तरे कूले तीर्थं परमशोभनम्। सर्वपापहरं मर्त्ये नाम्ना वै गौतमेश्वरम्

स्थापितं गौतमेनैव लोकानां हितकाम्यया।

स्वर्गसोपानरूपं तु तीर्थं पुंसां युधिष्ठिर !॥ २ ॥

तत्र गच्छ परंभक्त्यायत्रदेवोजगद्गुरुः। पातकस्यविनाशार्थं स्वर्गवासप्रदस्तथा

सौभाग्यवर्द्धनंतीर्थं जयदं दुःखनाशनम्। पिण्डदानेन चैकेन कुलानामुद्धरेत्त्रयम्

यत्किञ्चिद्‌ दीयते भक्त्या स्वल्पं वा यदि वा बहु।

तत्सर्वं शतसाहस्रमाज्ञया गौतमस्य हि ॥ ५ ॥

तीर्थानां परमं तीर्थं स्वयं रुद्रेण भाषितम् ॥ ६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे गौतमेश्वरतीर्थमाहात्म्यवर्णनंनाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## पञ्चसप्ततितमोऽध्यायः

### शङ्खचूडतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

नर्मदादक्षिणे कूले तीर्थं परमशोभनम् । शङ्खचूडस्य नाम्ना वै प्रसिद्धं भूमिमण्डले
शङ्खचूड स्वयं तत्र ह्यस्थित पाण्डुनन्दन । वैनतेयभयात्पार्थ सुखद नर्मदातटे
तत्र तीर्थे तु यो भक्त्या शुचिर्भूत्वा समाहित ।
स्नापयेच्छङ्खचूडं तु क्षीरक्षौद्रेण सर्पिषा ॥ ३ ॥
रात्रौजागरणकुर्याद्देवस्याग्रे नराधिप । पञ्चिभक्तेनसपूज्यब्राह्मणाञ्छसितव्रतान्
गोप्रदाने द्विजेन्द्रोऽय सर्वपापक्षयङ्कर ॥ ४ ॥
तस्मिस्तीर्थे तु य पार्थ सर्पदंशात्प्रमुच्यते । सयातिपरमलोकं शङ्करस्यवचोयथा
इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्या संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे शङ्खचूडतीर्थमाहात्म्यवर्णननाम पञ्चसप्ततितमोऽध्याय ॥ ७५ ॥

---

## षट्सप्ततितमोऽध्याय

### पारेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेत्तु राजेन्द्र पारेश्वरमनुत्तमम् । पराशरो महात्मा वै नर्मदायास्तटे शुभे
तपश्चचार विपुल पुत्रार्थं पाण्डुनन्दन । हिमवद्दुहिता तेन गौरी नारायणी नृप
तोषिता परया भक्त्यानर्मदोत्तरके तटे । तस्य तुष्टा महादेवी शङ्करार्द्धाङ्गधारिणी
भोभोऋषिवर श्रेष्ठ तुष्टाऽहं तव भक्तित । वरं याचयमेविप्र पराशर महामते ॥

पराशर उवाच

परितुष्टाऽसि मे देवियदिदेयोवरोमम । देहि पुत्रं भगवतिसत्यशौचगुणान्वितम्

वेदाभ्यसनशीलं हि सर्वशास्त्रविशारदम् ।

तीर्थं चाऽत्र भवेद् देवि! सन्निधानवरेण तु ॥ ८ ॥

लोकोपकारहेतोश्च स्थीयतां गिरिनन्दिनि !। पराशराभिधानेन नर्मदादक्षिणेतटे

श्रीदेव्युवाच

एवं भवतु ते विप्र! तत्रैवान्तरधीयत । पराशरोमहात्मावै स्थापयामास पार्वतीम्

शङ्करं स्थापयामास सुरासुरनमस्कृतम् । अच्छेद्यमप्रतर्क्यं च देवानां तुदुरासदम्

पराशरो महात्मा वै कृतार्थो ह्यभवन्नृप !॥ १० ॥

तत्र तीर्थे तु यो भक्त्या शुचिः प्रयतमानसः ।

स्त्र्यथवा पुरुषो वाऽपि कामक्रोधविवर्जितः ॥ ११ ॥

माघे चैत्रेऽथ वैशाखेश्रावणे नृपनन्दन !। मासिमार्गशिरे चैव शुक्लपक्षे तुसर्वदा

तत्र गत्वा शुभे स्थाने नर्मदादक्षिणे तटे ॥ १३ ॥

उपोष्य परया भक्त्या व्रतमेतत्समाचरेत् ।

रात्रौ जागरणं कृत्वा दीपदानं स्वशक्तितः ॥ १४ ॥

गीतं नृत्यं तथा वाद्यं कामक्रोधविवर्जितः ।

प्रभाते विमले प्राप्ते द्विजाः पूज्याः स्वशक्तितः ॥ १५ ॥

संपूज्य ब्राह्मणान्पार्थ धनदानहिरण्यतः । वस्त्रेण छत्रदानेनशय्याताम्बूलभोजनैः

प्रीणयेन्नर्मदातीरे ब्राह्मणाञ्छंसितव्रतान् । श्राद्धं कार्यं नृपश्रेष्ठआमैः पक्वैर्जलेनच

स्त्रीणां चैव तुशूद्राणामामश्राद्धं प्रशस्यते । आमंचतुर्गुणंदेयं ब्राह्मणानांयुधिष्ठिर

वेदोक्तेनविधानेन द्विजाः पूज्याः प्रयत्नतः । हस्तमात्रैः कुशैश्चैवतिलैश्चैवाक्षतैर्नृप

विप्रा उदङ्मुखाः कार्याः स्वयं वै दक्षिणामुखः ।

दर्भेषु निक्षिपेदन्नमित्युच्चार्य द्विजाग्रतः ॥ २० ॥

प्रेता यान्तु परेलोके तीर्थस्याऽस्य प्रभावतः । पापं मेप्रशमं यातुएतुवृद्धिं शुभंसदा

वृद्धिं यातु सदा यशो ज्ञानिवर्गो द्विजोत्तम । एवमुच्चार्य विप्राय दानं देयं स्वशक्तितः
गोभूतिलहिरण्यादि पात्रे यत्नस्वशक्तितः । दातव्यं पाण्डवश्रेष्ठ पारेश्वरवराश्रमे
ये शृण्वन्ति परं भक्त्या मुच्यन्ते सर्वपातकैः ॥ २५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे पारेश्वरतीर्थमाहात्म्यवर्णननाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

## सप्तसप्ततितमोऽध्यायः

### भीमेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

भीमेश्वरं ततो गच्छेत्सर्वपापक्षयङ्करम् । सेवितं ऋषिसङ्घैश्च भीमसेनवरं शुभम् ॥
तत्र तीर्थे तु यः स्नात्वा सोपवासो जितेन्द्रियः ।
जपेदेकाक्षरं मन्त्रमूर्ध्वबाहुर्दिवाकरे ॥ २ ॥

तस्य जन्मार्जितं पापं तत्क्षणादेव नश्यति । सप्तजन्मार्जितं पापं गायत्र्या नश्यते ध्रुवम् दशभिर्जन्मभिर्जातं शतेन तु पुराकृतम् । सहस्रेण त्रिजन्मोत्थं गायत्री हन्ति किल्बिषम् द्विविधं लौकिकं चापि आर्ष्यं जन्म नरेश्वर । तत्क्षणाद्दहते सर्वं तृणं तूलं यथानलः न देवत्वमाश्रित्य कदाचित्पापमाचरेत् । अज्ञानान्नश्यते क्षिप्रं नोत्तरं तु कदाचन तत्र तीर्थे तु यो दानं शक्तिमाश्रित्य चाचरेत् । तदक्षय्यफलं सर्वं जायते पाण्डुनन्दन

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे भीमेश्वरतीर्थमाहात्म्यवर्णननाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

# अष्टसप्ततितमोऽध्यायः

## नारदेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्रनारदेश्वरमुत्तमम् । तीर्थानां परमं तीर्थं निर्मितं नारदेन तु ॥

युधिष्ठिर उवाच

नारदेन मुनिश्रेष्ठ कस्मात्तीर्थं विनिर्मितम् । एतदाख्याहिमे सर्वंप्रसन्नोयदिसत्तम!

श्रीमार्कण्डेय उवाच

परमेष्ठिसुतः पार्थ!नारदो मुनिसत्तमः । रेवायाश्चोत्तरे कूले तपस्तेन पुरा कृतम् ॥

नवनाडीनिरोधेन काष्ठावत्यां गतेन च । तोषितः पशुभर्त्ता वै नारदेन युधिष्ठिर !

ईश्वर उवाच

तुष्टोऽहं तव विप्रेन्द्र! योगिनाथ अयोनिज !। वरंप्रार्थय मे वत्स यत्ते मनसिवर्त्तते

नारद उवाच

त्वत्प्रसादेन मे शम्भो योगश्चैव प्रसिध्यतु । अचलातेभवेद्भक्तिः सर्वकालं ममैव तु

स्वेच्छाचारी भवे देव वेदवेदाङ्गपारगः । त्रिकालज्ञोजगन्नाथगीतज्ञोऽहं सदा भवे

दिनेदिने यथा युद्धं देवदानवमानुषैः । पातालेमर्त्यलोके वा स्वर्गे वाऽपि महेश्वर

पश्येयं त्वत्प्रसादेन भवन्तं पार्वतीं तथा । तीर्थं लोकेषुविख्यातं सर्वपापक्षयङ्करम्

ईश्वर उवाच

एवं नारद! सर्वं तु भविष्यति न संशयः । चिन्तितंमत्प्रसादेर्नासद्धयतेनात्रसंशयः

स्वेच्छाचारो भवेर्वत्स स्वर्गे पातालगोचरे।
मर्त्ये वा भ्रम वै योगिन्न केनाऽपि निवार्यसे ॥ ११ ॥
सप्त स्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशतिः ।
ताना एकोनपञ्चाशत्प्रसादान्मे तव ध्रुवम् ॥ १२ ॥

मम प्रियङ्कर दिव्य नृत्यगीत भविष्यति। कलि च पश्यसे नित्य देवदानवकिन्नरैः त्वत्तीर्थं भूतले पुण्य म प्रसादाद्भविष्यति। वेदवेदाङ्गतत्त्वज्ञो ह्यगेरज्ञानकोविद ॥

एकस्त्वमसि नि सङ्गो मत्प्रसादेन नारद ॥ १४ ॥

इत्युक्त्वान्तर्दधे देवो नारदस्तत्र शूलिनम्।

स्थापयामास राजेन्द्र सर्वसत्त्वोपकारकम् ॥ १५ ॥

पृथिव्यामुत्तम तीर्थं निर्मितं नारदेन तु। तत्र तीर्थे नृपश्रेष्ठ यो गच्छेद्विजितेन्द्रिय

मासि भाद्रपदे पार्थ कृष्णपक्षे चतुर्दशी।

उपोष्य परया भक्त्या रात्रौ कुर्वीत जागरम् ॥ १७ ॥

छत्र तत्र प्रदातव्य ब्राह्मणे शुभलक्षणे। शक्तितस्तु हुता येषै तेषा श्राद्ध प्रदापयेत् ॥

ते यान्ति परम लोक पिण्डदानप्रभावत ॥ १८ ॥

कपिलातत्प्रदातव्यापितॄनुद्दिश्यभारत। इत्युच्चार्यद्विजेदेव्यायान्तु ते परमागतिम्

अस्य श्राद्धस्य भावेन ब्राह्मणस्यप्रसादत। नमदातोयभावेनन्यायार्जितधनस्यच

तेषा चैव प्रभावेण प्रेता यान्तु परा गतिम् ॥ २० ॥

इत्युच्चार्य द्विजे देया दक्षिणा च स्वशक्तित।

हविष्यान्न विशालाक्षि द्विजाना चैव दापयेत् ॥ २१ ॥

दीपं भक्त्या प्रदातव्य नृत्य गीत च कारयेत्।

अथात्र तेन वै सर्व य करोतीश्वरात्मिने ॥ २२ ॥

स याति रुद्रसान्निध्यमिति रुद्र स्वयं जगौ।

विद्यादानेन चैकेन अक्षया गतिमाप्नुयात् ॥ २३ ॥

धूवहास्तत्रदातव्याभूमि सस्यवती नृप। चित्रभानु शुभैर्मन्त्रै प्रीणयेत्तत्रभक्तित

आज्येन सुप्रभूतेन होमद्रव्येणभारत। ये यजन्ति सदा भक्त्या त्रिकालनृत्यमेवच

तीर्थे नारदनामाख्ये रेवायाश्चोत्तरे तटे। चित्रभानुमुखादेवा सर्वदेवमयो ह्यग्नि

अग्निना प्रीणिता सर्वे तस्मात्प्रीत्योस्म हुताशन।

---

* प्रीतय —प्रीणनीय —इत्यर्थ।

पूजिते हव्यवाहे तु दारिद्र्यं नैव जायते ॥ २७ ॥
धनेन विपुला प्रीतिर्जायते प्रतिजन्मनि । कुलीनाश्च सुवेषाश्च सर्वकालं धनेन तु
प्लवो नदीनां पतिरङ्गनानां राजा च सद्वृत्तरतः प्रजानाम् ।
धनं नराणामृतवस्तरूणां गतं गतं यौवनमानयन्ति ॥ २९ ॥
धनदत्वं धनेशेन तस्मिंस्तीर्थे ह्युपार्जितम् । यमेनच यमत्वं हि इन्द्रत्वंचैववज्रिणा
अन्यैरपि महीपालैः पार्थिवत्वमुपार्जितम् ।
नारदेश्वरमाहात्म्याद्ध्रुवो निश्चलतां गतः ॥ ३१ ॥
सर्वतीर्थवरं तीर्थं निर्मितं नारदेन तु । पृथिव्यां सागरान्तायां रेवायाश्चोत्तरे तटे
तद्वरं सर्वतीर्थानां महापातकनाशनम् ॥ ३२ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे नारदेश्वरतीर्थमाहात्म्यवर्णनंनामाष्टसप्ततितमोऽध्यायः ॥७८॥

---

## एकोनाशीतितमोऽध्यायः

### दधिस्कन्दमधुस्कन्दतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र! तीर्थद्वयमनुत्तमम् । दधिस्कन्दंमधुस्कन्दं सर्वपापक्षयङ्करम्
दधिस्कन्दे नरः स्नात्वा यस्तु दद्याद्द्विजे दधि ।
उपतिष्ठेत्ततस्तस्य सप्तजन्मनि भारत !॥ २ ॥
न व्याधिर्न जरा तस्य न शोको नैव मत्सरः ।
दशचन्द्रशतं यावज्जायते विमले कुले ॥ ३ ॥
मधुस्कन्देऽपि मधुना मिश्रितान्यस्तिलान्ददेत् ।
नाऽसौ वैवस्वतं देवं पश्येद्वै जन्मसप्ततिम् ॥ ४ ॥

मधुनासह सम्मिश्र पिण्डयस्तुप्रदापयेत् । तस्यपीत्रप्रपौत्रेभ्योदारिद्यनैवजायते
दधिमि 'सहसमिश्र पिण्ड यस्तु प्रदापयेत् ।
तस्मिंस्तीर्थे नर स्नात्वा विधिवद्दक्षिणामुख ॥ ६ ॥
पिता पितामहश्चैव तथैव प्रपितामह ।
द्वादशाब्दानि तुष्यन्ति नाऽत्र कार्या विचारणा ॥ ७ ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे दधिस्कन्दमधुस्कन्दतीर्थमाहात्म्यवर्णन नामैकोनाशीतितमोऽध्याय ॥ ७९ ॥

---

## अशीतितमोऽध्यायः

### नन्दिकेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र नन्दिकेश्वरमुत्तमम् । यत्रसिद्धो महानन्दीतत्तेसर्वंवदाम्यहम्
रेवाया पुरत कृत्वा पुरा नन्दीगणेश्वर । तपस्तप्त्वत्रयं कुर्वंस्तीर्थात्तीर्थंजगाम ह
दधिस्कन्द मधुस्कन्द यावत्स्थित्वा तु गच्छति ।
तावत्तुष्टो महादेवो नन्दिनाथमुवाच ह ॥ ३ ॥
ईश्वर उवाच
भोभो प्रसन्नो नन्दीश वरवृणुयथेप्सितम् । तपसातेनतुष्टोऽह तीर्थयात्राकृतेन ते ॥
नन्दीश्वर उवाच
न चाऽहं कामये वित्त न चाऽह कुलसन्ततिम् ।
मुक्त्वा न कामये काम तव पादाम्बुजात्परम् ॥ ५ ॥
कृमिकीटपतङ्गेषु तिर्यग्योनि गतस्य वा ।

जन्म जन्मान्तरेऽप्यस्तु भक्तिस्त्वयि ममाऽचला ॥ ६ ॥
तथेत्युक्त्वा महादेवः परया कृपया नृप !।
गृहीत्वा तं करे सिद्धं जगाम निलयं हरः ॥ ७ ॥
तस्मिंस्तीर्थे तु यः स्नात्वा भक्त्या त्र्यक्षं प्रपूजयेत् ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ८ ॥
तत्र तीर्थे तु यः स्नात्वा प्राणत्यागं करोति चेत् ।
शिवस्याऽनुचरो भूत्वा मोदते कल्पमक्षयम् ॥ ९ ॥
ततः कालेन महता जायते विमले कुले । वेदवेदाङ्गतत्त्वज्ञो जीवेच्च शरदां शतम्
एतत्तेकथितंतात!तीर्थमाहात्म्यमुत्तमम् । दुर्लभं मर्त्यसञ्ज्ञस्य सर्वपापक्षयंकरम्
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे नन्दिकेश्वरतीर्थमाहात्म्यवर्णनं नामाशीतितमोऽध्यायः ॥८०॥

---

## एकाशीतितमोऽध्यायः

### वरुणेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महाराज वरुणेश्वरमुत्तमम् । यत्र सिद्धो महादेवो वरुणो नृपसत्तम
पिण्याकशाकपर्णैश्च कृच्छ्रचान्द्रायणादिभिः ।
आराध्य गिरिजानाथं ततः सिद्धिं परां गतः ॥ २ ॥
तत्र तीर्थे तु यः स्नात्वा सन्तर्प्य पितृदेवताः ।
पूजयेच्छङ्करं भक्त्या स याति परमां गतिम् ॥ ३ ॥
कुण्डिकांवर्द्धनीं वाऽपि महद्वा जलभाजनम् । अन्नेनसहितंपार्थतस्यपुण्यफलंशृणु
यत्फलं लभतेमर्त्यःसत्रेद्वादशवार्षिके ।।तत्फलंसमवाप्नोतिनाऽत्रकार्याविचारणा
सर्वेषामेव दानानामन्नदानं परंस्मृतम् । सद्यःप्रीतिकरंतोयमन्नंच नृपसत्तम !॥ ६॥

तत्र तीर्थे मृतानां तु नराणां भावितात्मनाम् ।
वरुणस्य पुरे वासो यावदाभूतसंप्लवम् ॥ ७ ॥
पश्चात्पूर्णे ततः काले मर्त्यलोके प्रजायते । अन्नदानप्रदो नित्यं जीवेद्वर्षशतं नरः ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे वरुणेश्वरतीर्थमाहात्म्यवर्णननामैकाशीतितमोऽध्यायः ॥ ८१ ॥

## द्व्यशीतितमोऽध्यायः

### दधिस्कन्दादिपञ्चतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल वह्नितीर्थमनुत्तमम् । यत्र सिद्धो महातेजास्तपः कृत्वा हुताशनः
सर्वभक्ष्यः कृतो योऽसौ दण्डके मुनिना पुरा ।
नर्मदातटमाश्रित्य पूतो जातो हुताशनः ॥ २ ॥
तत्र तीर्थे तु यः स्नात्वा पूजयित्वा महेश्वरम् ।
अग्निप्रवेशं कुरुते स गच्छेदग्निसाम्यताम् ॥ ३ ॥
भक्त्या स्नात्वा तु यस्तत्र तर्पयेत्पितृदेवताः ।
अग्निष्टोमस्य यज्ञस्य फलमाप्नोत्यसंशयम् ॥ ४ ॥
तस्यैवाऽनन्तरं राजन्कौबेरं तीर्थमुत्तमम् । कुबेरो यत्र संसिद्धो यक्षाणामधिपः पुरा
तत्र तीर्थे नरः स्नात्वा समभ्यर्च्य जगद्गुरुम् ।
उमया सहितं भक्त्या सर्वपापैः प्रमुच्यते ॥ ६ ॥
तत्र तीर्थे तु यः स्नात्वा दद्याद्विप्राय काञ्चनम् ।
नाभिमात्रे जले तिष्ठन् लभेतार्बुदं फलम् ॥ ७ ॥
दधिस्कन्दे मधुस्कन्दे नन्दीशे वरुणालये ।

आग्नेये यत्फलंतात स्नात्वा तत्फलमाप्नुयात् ॥ ८ ॥
ते वन्द्या मानुषे लोके धन्याःपूर्णमनोरथाः । यैस्तुदृष्टंमहापुण्यंनर्मदातीर्थपञ्चकम्
ते यान्ति भास्करे लोके परमे दुःखनाशने । भास्करादैश्वरेलोकेचैश्वरादनिवर्त्तकेः
नीयतेसपरेलोकेयावदिन्द्राश्चतुर्द्दश । ततःस्वर्गाच्च्युतोमर्त्यो राजाभवतिधार्मिकः
सर्वरोगविनिर्मुक्तोभुनक्तिसचराचरम् । विष्णुश्च देवता येषांनर्मदातीर्थसेविनाम्
अखण्डितप्रतापास्ते जायन्ते नाऽत्र संशयः ।
गङ्गा कनखले पुण्या कुरुक्षेत्रे सरस्वती ॥ १३ ॥
ग्रामे वा यदिवाऽरण्ये पुण्यासर्वत्रनर्मदा । रेवातीरेवसेन्नित्यं रेवातोयंसदापिबेत्
स स्नातः सर्वतीर्थेषुसोमपानंदिनेदिने । गङ्गाद्याःसरितःसर्वाःसमुद्राश्चसरांसिच
कल्पान्ते सङ्क्षयं यान्ति न मृता तेन नर्मदा ॥ १५ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्ताखण्डे रेवाखण्डे दधिस्कन्दादिपञ्चतीर्थमाहात्म्यवर्णनंनाम द्व्यशीतितमोऽध्यायः

---

## त्र्यशीतितमोऽध्यायः

### हनूमन्तेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महाराज तीर्थं परमशोभनम् । ब्रह्महत्याहरं प्रोक्तं रेवातटसमाश्रयम् ॥
हनूमताभिधं ह्यत्र विद्यते लिङ्गमुत्तमम् ॥ १ ॥

युधिष्ठिर उवाच

हनूमन्तेश्वरं नाम कथं जातं वदस्व मे । ब्रह्महत्याहरं तीर्थं रेवादक्षिणसंस्थितम्

श्रीमार्कण्डेय उवाच

साधुसाधु महाबाहो! सोमवंशविभूषण !।

गुह्याद् गुह्यतरं तीर्थं नाख्यातं कस्यचिन्मया ॥ ३ ॥
तव स्नेहात्प्रवक्ष्यामि पीडितो वार्द्धकेन तु । पूर्वं जातं महद्युद्धं रामरावणयोरपि
पुलस्त्यो ब्रह्मणः पुत्रो विश्रवास्तस्य वै सुतः ।
रावणस्तेन संजातो दशास्यो ब्रह्मराक्षसः ॥ ५ ॥
त्रैलोक्यविजयीभूतः प्रसादाच्छूलिनः स च ।
गीर्वाणा विजिताः सर्वे रामस्य गृहिणी हृता ॥ ६ ॥
वारितः कुम्भकर्णेन सीता मोचय मोचय । विभीषणेन वै पापो मन्दोदर्या पुनः पुनः
त्वं जितः कार्तवीर्येण रेणुकेयेन सोऽपि च । स रामो राममद्रेण तस्य सङ्ख्ये कथं जयः
रावण उवाच
वानरैश्च नरैर्ऋक्षैर्वराहैश्च निरायुधैः । देवासुरसमूहैश्च न जितोऽहं कदाचन ॥
श्रीमार्कण्डेय उवाच
सुग्रीवहनुमद्भ्यां च कुमुदेनाङ्गदेन च । वानरैरन्यैः सहायैश्च रामचन्द्रेण वै जितः
रामचन्द्रेण पौलस्त्यो हतः सङ्ख्ये महाबलः । वनभङ्गहताः शूरा समं जम्बुमालिना च
रावणस्य सुतो जघ्ने हनुमानक्षकुमारकः । आयामोरक्षसां भीमं सपिष्टो वानरेण तु
एवं रामायणे वृत्ते सीतामोक्षे कृते सति । अयोध्यां तु गते रामे हनुमान्स महाकपिः
कैलासाख्यं गतः शैलं प्रणामाय महेशितुः ।
तिष्ठतिष्ठेत्यसौ प्रोक्तो नन्दिना वानरोत्तमः ॥ १४ ॥
ब्रह्महत्यायुतस्त्वं हि राक्षसानां वधेन हि । मेरवस्य समानूनं नद्रष्टव्यस्त्वया कपे
हनुमानुवाच
नन्दिनाथं हरं पृच्छ पातकस्योपशान्तिदम् ।
पापोऽहं प्लवगो यस्मात्सञ्जातं कारणान्तरात् ॥ १६ ॥
नन्द्युवाच
रुद्रदेहोद्भवाः किं ते न श्रुता भूतले स्थिता । श्रवणाज्जन्मजनितं द्विगुणं कीर्तनाद्व्रजेत्
त्रिंशज्जन्मार्जितं पापं न श्येद्रेवावगाहनात् । तस्मात्त्वं नर्मदातीरं गत्वाचर तपो महत्

गन्धवाहसुतोऽप्येवंनन्दिनोक्तंनिशम्य च । प्रयातोनर्मदातीरमौर्व्यादक्षिणसङ्गमम्
दध्यौ सुदक्षिणे देवं विरूपाक्षंत्रिशूलिनम् । जटामुकुटसंयुक्तंव्यालयज्ञोपवीतिनम्
भस्मोपचितसर्वाङ्गं डमरुस्वरनादितम् । उमार्द्धाङ्गहरंशांतंगोनाथासनसंस्थितम्
वत्सरान्सुबहून्यावदुपासाञ्चक्र ईश्वरम् । तावत्तुष्टो महादेव आजगामसहोमया
उवाच मधुरां वाणीं मेघगम्भीरनिस्वनाम् ।
साधुसाध्वित्युवाचेशः कष्टं वत्स त्वया कृतम् ॥ २३ ॥
नचपूर्वंत्वयापापंकृतंरावणसङ्क्षये । स्वामिकार्यरतस्त्वंहिसिद्धोऽसिममदर्शनात्
हनुमांश्च हरं दृष्ट्वा उमार्द्धाङ्गहरं स्थितम् ।
साष्टाङ्गं प्रणयोऽवोचज्जय शम्भो! नमोऽस्तु ते ।
जयाऽन्धकविनाशाय जय गङ्गाशिरोधर !॥ २५ ॥
एवं स्तुतो महादेवो वरदो वाक्यमब्रवीत् । वरं प्रार्थय मे वत्स प्राणसम्भवसम्भव

श्रीहनूमानुवाच

ब्रह्मरक्षोवधाज्जाता मम हत्या महेश्वर । न पापोऽहंभवेदेव युष्मत्सम्भाषणेक्षणात्

ईश्वर उवाच

नर्मदातीर्थमाहात्म्याद्धर्मयोगप्रभावतः । मन्मूर्त्तिदर्शनात्पुत्र निष्पापोऽसिनसंशयः
अन्यच्च ते प्रयच्छामि वरं वानरपुङ्गव !। उपकारायलोकानां नामानितव मारुते
हनूमानञ्जनिसुतोवायुपुत्रोमहाबलः । रामेष्टःफाल्गुनोगोत्रःपिङ्गाक्षोऽमितविक्रमः
उदधिक्रमणश्रेष्ठो दशग्रीवस्य दर्पहा । लक्ष्मणप्राणदाता च सीताशोकनिवर्त्तनः
इत्युक्त्वाऽन्तर्दधेदेव! उमयासह शङ्करः । हनूमानीश्वरंतत्र स्थापयामासभक्तितः
आत्मयोगबलेनैव ब्रह्मचर्यप्रभावतः । ईश्वरस्य प्रसादेन लिङ्गं कामप्रदं हि तत् ॥
अच्छेद्यमप्रतर्क्यं च विनाशोत्पत्तिवर्जितम् ॥ ३३ ॥

श्रीमार्कण्डेय उवाच

हनूमन्तेश्वरे पुत्र! प्रत्यक्षप्रत्ययं शृणु । यद्वृत्तं द्वापरस्यादौ त्रेतान्ते पाण्डुनन्दन
सुपर्वा नाम भूपालो बभूव वसुधातले ।

तस्य राज्ञः सदा सौख्यं नरा दीर्घायुषः सदा ॥ ३५ ॥
स पुत्रधनसंयुक्तश्चारोपद्रववर्जितः । शतबाहुर्बभूवाऽस्य पुत्रो भीमपराक्रमः ॥
आसक्तोऽसौ सदा कालं पापधर्मैर्नरेश्वरः ।
अटाट्यत धरा सर्वा पर्वतांश्च वनानि च ॥ ३७ ॥
यथार्थं मृगयूथानामागतो विन्ध्यपर्वतम् ।
तरुजालसमाकीर्णे हस्तियूथसमाचिते ॥ ३८ ॥
सिंहचित्रकशोभाढ्ये मृगवाराहसङ्कुले । क्रीडित्वा सवने राजा नर्मदामागत क्वचित् ॥
हनूमन्तवने प्राप्तः शतक्रोशप्रमाणके । चिञ्चिणावनशोभाढ्ये कदम्बतरुसङ्कुले ॥
निम्बपालाशजम्बीरैः करञ्जखदिरैस्तथा ।
पाटलैर्बदरैर्युक्ते शमीतिन्दुकशोभितम् ॥ ४१ ॥
मृगयूथैः समाच्छन्नं शिखण्डिस्वरनादितम् ।
पारावतचकोराद्यैः समन्तात्स्वरशोभितम् ॥ ४२ ॥
शरत्कालेऽगमद्राजा वहुले चाऽश्विनस्य स ।
वनमध्ये गतोऽद्राक्षीद् भ्रमन्तं पिङ्गलद्विजम् ॥ ४३ ॥
पुस्तिकाकरसंस्थं च पप्रच्छ नृपो द्विजम् ॥ ४४ ॥

शतबाहुरुवाच

एकाकी त्वं वने कस्माद् भ्रमसे पुस्तिकाकर ।
इतस्ततोऽपि संपश्यन्कथयस्व द्विजोत्तम ॥ ४५ ॥

ब्राह्मण उवाच

कान्यकुब्जात्समायातः प्रेषितो राजकन्यया ।
अस्थिक्षेपाय वै राजन्हनूमन्तेश्वरे जले ॥ ४६ ॥

राजोवाच

अस्थिक्षेपो जले कस्माद्धनूमन्तेश्वरे द्विज ।
क्रियते केन कार्येण साश्चर्यं कथ्यतां मम ॥ ४७ ॥

सुपर्वणः सुतो यानं त्यक्त्वा भूमौ प्रणम्य च ।

कृत्वाञ्जलिपुटोभूत्वाब्राह्मणायनरेश्वर ! । समस्तं कथयामासवृत्तान्तंस्वं पुरातनम्

ब्राह्मण उवाच

शिखण्डीनाम राजाऽस्ति कान्यकुब्जे प्रतापवान् ।

अपुत्रोऽसौ महीपालः कन्या जाता मनोरथैः ॥ ४६ ॥

जातिस्मरा शुभाचैङ्गी नर्मदायाः प्रभावतः ।

पित्रा च सैकदा कन्या विवाहाय प्रजल्पिता ॥ ५० ॥

अनित्ये पुत्रि! संसारे कन्यादानं ददाम्यहम् ।

श्वः कृत्यमद्य कुर्वीत पूर्वाह्णे चाऽपराह्णिकम् ॥

न हि प्रतीक्षते मृत्युः कृतं चास्य न चाकृतम् । ॥ ५१ ॥

कन्योवाच

इच्छेयं यत्र काले हि तत्र देया त्वया पितुः ।

पुत्रीवाक्यादसौ राजा विस्मितो वाक्यमब्रवीत् ॥ ५२ ॥

शिखण्ड्युवाच

कथ्यतां मे महाभागे! साश्चर्यं भाषितं त्वया ।

पितुर्वाक्येन सा वाला उत्तमा ह्यागतान्तिकम् ॥ ५३ ॥

कथयामास यद्वृत्तं हनूमन्तेश्वरे नृप । कलापिनी ह्यहं तात युता भर्त्रावसं तदा

रेवौर्व्यासंगमान्तिस्था रेवायादक्षिणेतटे । हनूमन्तवनेपुण्येविक्रीडाहं यदृच्छया

भर्तृयुक्ता च संखुनारजन्यां सरलेनगे । आगतालुब्धकास्तत्र क्षुधार्त्तावनमुत्तमम्

भर्तृयोगयुता पापैर्दृष्टाऽहंवधचिन्तकैः । पाशबन्धंसमादाय बद्धाहं स्वमिनासह

ग्रीवां ते मोटयामासुः पिच्छाच्छोटनकं कृतम् ।

हुताशनमुखे तैस्तु सह कान्तेन लुब्धकैः ॥ ५४ ॥

परिभर्ज्यावयोर्मांसं भक्षयित्वा यथेप्सितः ।

सुप्ताः स्वस्थेन्द्रिया रात्रौ सा गता शर्वरी क्षयम् ॥ ५६ ॥

प्रभाते मासशेषश्च जम्बुकैर्भ्रं भ्रयातिमि ।
मच्छरीरोद्भवं चास्थि स्नायुमांसेन चावृतम् ॥ ६० ॥
गृहीत चार्तिनैकेन चाकाशात्पतित तदा ।
त मांसभक्षण दृष्ट्वा परे पक्षिण आगता ॥ ६१ ॥
दृष्ट्वा पक्षिसमूहं तु अस्थिखण्डं व्यसर्जयत् ।
विहगाना समस्ताना धावतां चैव पश्यताम् ॥ ६२ ॥
पतित नर्मदातोये हनूमन्तेश्वरे नृप । मदीयमस्थिखण्ड च पतित नर्मदाजले ॥६३
तस्यतीर्थस्यपुण्येनजाताऽहपुत्रिका तव । भूपकन्यात्वहजातापूर्णचन्द्रनिभानना
जातिस्मरानरेन्द्रस्यमजाताभवत कुले । तस्माद्विवाहं नेच्छामिममभर्तानृपोत्तम
विपने वर्ततेऽद्यापि शकुन्तमृगजातिषु ।
तस्यास्थिशेष राजेन्द्र तस्मिंस्तीर्थे भविष्यति ॥ ६६ ॥
तत्क्षेपणार्थं वै तात प्रेष्याऽद्य द्विजोत्तमम् । एतत्ते सर्वमाख्यात कारणनृपसत्तम
मद्वर्त्ता विपने स्थाने शकुन्तमृगजातिषु । यदि प्रेरयसे तात कश्चित्त्वं नर्मदातटे
तस्याहं कथयिष्यामि स्थानैश्चिह्नैश्चलक्षितम् ।
शिपपिण्डकाऽप्यहं तत्र ह्याहूतो ह्यवनीपते ॥ ६६ ॥
द्वास्याभिर्विंशतिग्रामान्गच्छत्वं नर्मदातटे । प्रेरणमेप्रतिज्ञातमल्पस्यापीडितैनतु
कन्योवाच
गच्छ त्वं नर्मदापुण्यांसर्वपापक्षयङ्करीम् । आग्नेय्यांसोमनाथस्यहनूमन्तेश्वरपर
अक्षयरोहेन रेवाया विस्तीर्णो वटपादप । करञ्ज कटह्वैव सन्निधाने वटान्य च
न्यग्रोधमूलमाश्रित्ये सूक्ष्माण्यस्थीनि द्रक्ष्यसि ।
समृद्य तानि संगृह्य गच्छ रेवां द्विजोत्तम ॥ [illegible] ॥
आश्विनस्याऽसित पक्षे त्रिपुरारेस्तु वै तिथौ ।
स्नाप्य त्रिशूलिनं भक्त्या रात्रौ त्वं कुरु जागरम् ॥ ७४ ॥
क्षिपे प्रभात तानि त्वं नाभिमात्रजलस्थित ।

इत्युच्चार्य द्विजश्रेष्ठ! विमुक्तिस्तस्य जायताम् ॥ ७५ ॥
क्षिप्त्वाऽस्थीनि पुनः स्नानं कर्तव्यं स्वघनाशनम् ।
एवं कृते तु राजेन्द्र! गतिस्तस्य भविष्यति ॥ ७६ ॥
कथितं कन्यया यच्च तत्सर्वं मुक्तिकारणम् ।
आगतोऽहं नृपश्रेष्ठ! तीर्थेऽत्र दुरितापहे ॥ ७७ ॥
सोऽभिज्ञानंततोदृष्ट्वानीत्वाऽस्थीनिनरेश्वरः! पूर्वोक्तेनविधानेनप्राक्षिपंनर्मदाम्भसि
पुष्पवृष्टिःपपाताऽऽशु साधुसाध्विति पाण्डव !।
विमानं च ततो दिव्यमागतं वर्हिणस्तदा ॥ ७९ ॥
दिव्यरूपधरो भूत्वा गतो नाके कलापवान् ।
एवं तु प्रत्ययं दृष्ट्वा हनूमन्तेश्वरे नृप ॥ ८० ॥
चकारानशनं विप्रः शतबाहुश्च भूपतिः । शोषयामासतुस्तौ स्वमीश्वराराधनेरतौ
ध्यायन्तौ तस्थतुर्देवं शतबाहुद्विजोत्तमौ । मासार्धेनमृतोराजा शतबाहुर्महामनाः
किङ्किणीजालशोभाढ्यं विमानं तत्रचागतम् । साधुसाधुनृपश्रेष्ठविमानारोहणंकुरु

शतबाहुरुवाच

नायामि स्वर्गमार्गात्र विप्रो यावन्न संस्थितः ।
उपदेशप्रदो मह्यं गुरुरूपी द्विजोत्तमः ॥ ८४ ॥

अप्सरस ऊचुः

लोभावृतो ह्ययं विप्रो लोभात्पापस्य संग्रहः ।
हनूमन्तेश्वरे राजन्! ये मृताः सत्त्वमास्थिताः ॥ ८५ ॥
ते यान्ति शाङ्करेलोके सर्वपापक्षयङ्करे । नैवपापक्षयश्चास्य ब्राह्मणस्य नरेश्वर !॥
गृहं च गृहिणीचित्तेब्राह्मणस्य प्रवर्त्तते । शतबाहुस्ततो विप्रमुवाच विनयान्वितः
त्यजमूलमनर्थस्यलोभमेनंद्विजोत्तम । इत्युक्त्वास्वयंयौराजास्वर्गंकन्यासमावृतः
दिनैः कैश्चिद्गतो विप्रः स्वर्गं वैतालिकैर्वृतः ।
वहौ च काशीराजस्य पुत्रस्तीर्थप्रभावतः ॥ ८९ ॥

आत्मानं कन्यया दत्तं पूर्वजन्म व्यचिन्तयन् ।
सा च तं प्रौढमालोक्य पितुराज्ञामवाप्य च ॥
स्वयम्वरे स्वभर्तारं लेभे साध्वी नृपात्मजम् ॥ ८० ॥

श्रीमार्कण्डेय उवाच

एतद्वृत्तान्तमभवत्तस्मिंस्तीर्थे नृपोत्तम । एतस्मात्कारणाभीष्टयताथमैतत्सदाद'
अष्टम्यां चतुर्दश्यां सर्वकालं नरेश्वर । विशेषाच्चादिनैमासि कृष्णपक्षेचतुर्दशी
स्नापयेदीश्वरं भक्त्या क्षीरक्षीरेण सर्पिषा ।
दध्ना च खण्डयुक्तेन कुशतोयेन वै पुनः ॥ ८३ ॥
श्रीखण्डेन सुगन्धेन गुण्ठयेच्च महेश्वरम् । ततः सुगन्धपुष्पैश्च बिल्वपत्रैश्च पूजये
मुचुकुन्दैश्च कुन्दैश्च जातीकाशकुशोद्भवैः । उन्मत्तमुनिपुष्पैश्च पुष्पैस्तत्कालसम्भ
अर्चयेत्परया भक्त्या हनूमन्तेश्वरं शिवम् । पुनः दापयेद्दीपं तैलेन तद्भावत
श्राद्धं च कारयेत्तत्र ब्राह्मणैर्वेदपारगैः । सर्वलक्षणसम्पूर्णैः कुलीनैर्गृहपालकै
तर्पयेद् ब्राह्मणान् भक्त्या वसनान्नहिरण्यतः ।
नरकस्था दिवं यान्तु प्रोच्येति प्रणमेद् द्विजान् ॥ ८८ ॥
पतितान्वर्जयेत् विप्रान्वृषली यस्य गेहिनी । स्ववृषश्चापि दिवस्थवृषैरन्यैर्नृ याथ
वृषलीं तां पितुर्गेहे न शूद्री वृषली भवेत् । ब्रह्महत्या सुरापानं गुरुदारनिषेवणं
सुवर्णहरणन्यासं मित्रद्रोहोद्भवं तथा । नश्यते पातकं सर्वमित्येवं शङ्करोऽब्रवीत्

श्रीमार्कण्डेय उवाच

वाक्प्रलापेन भो वत्स बहुनोक्तेन किं मया । सर्वपातकसंयुक्तो दद्याद्दानं द्विजन्मं
गोदानञ्च प्रकर्त्तव्यमस्मिंस्तीर्थे विशेषतः ।
गोदानं हि यतः पार्थ सर्वदानाधिकं स्मृतम् ॥ १०२ ॥
मघदेवमया गावः सर्वदेवास्तदात्मका । शृङ्गाग्रेषु महीपाल शक्रो वसति नित्यश
उरः स्कन्दः शिरो ब्रह्मा ललाटे वृषभध्वजः । चन्द्रार्कौ लोचने देवी जिह्वायां च सरस्वती
मरुद्गणाः सदा साध्या यस्या दत्ता नरेश्वर ।

हुङ्कारे चतुरो वेदान्विद्यात्साङ्गपदक्रमान् ॥ १०५ ॥
ऋषयो रोमकूपेषु ह्यसङ्ख्यातास्तपस्विनः ।
दण्डहस्तो महाकायः कृष्णो महिषवाहनः ॥ १०६ ॥
यमः पृष्ठस्थितो नित्यं शुभाशुभपरीक्षकः ।
चत्वारः सागराः पुण्याः क्षीरधाराः स्तनेषु च ॥ १०७ ॥
विष्णुपादोद्भवा गङ्गा दर्शनात्पापनाशिनी ।
प्रस्रावे संस्थिता यस्मात्तस्माद्वन्द्या सदा बुधैः ॥ १०८ ॥
लक्ष्मीश्च गोमये नित्यं पवित्रा सर्वमङ्गला ।
गोमयालेपनं तस्मात्कर्त्तव्यं पाण्डुनन्दन ॥ १०९ ॥
गन्धर्वाप्सरसोनागाः खुराग्रेषु व्यवस्थिताः ।
पृथिव्यां सागरान्तायां यानि तीर्थानि भारत ॥
तानि सर्वाणि जानीयाद्गोर्गव्यं तेन पावनम् ॥ ११० ॥

युधिष्ठिर उवाच

सर्वदेवमयी धेनुर्गीर्वाणाद्यैरलङ्कृता । एतत्कथयमे तात कस्माद्गोषु समाश्रिताः

श्रीमार्कण्डेय उवाच

सर्वदेवमयो विष्णुर्गावो विष्णुशरीरजाः ।
देवास्तद्दुभयात्तस्मात्कल्पिताविविधा जनैः ॥ ११२ ॥
श्वेता वा कपिला वापि क्षीरिणी पाण्डुनन्दन ।
सवत्सा च सुशीला च सितवस्त्राऽवगुण्ठिता ॥ ११३ ॥
कांस्यदोहनिका देया स्वर्णशृङ्गी सुभूषिता ।
हनूमन्तेश्वरस्याऽग्रे भक्त्या विप्राय दापयेत् ॥ ११४ ॥

नियमस्थेनसा देयास्वर्गमानन्त्यमिच्छता । असमर्थाययेदद्युर्विष्णुलोकेप्रयान्तिते
असौलोकेच्युतोराजन्भूतले द्विजमन्दिरे । कुशलोजायतेपुत्रोगुणविद्याधनर्द्धिमान्
सर्वपापहरं तीर्थं हनूमन्तेश्वरंनृप ॥ शृण्वन्विमुच्यते पापाद्वर्णसङ्करसम्भवात् ॥

दूरस्थश्चिन्तयन्पश्यन्मुच्यते नाऽत्र संशयः ॥ ११८ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे हनुमन्तेश्वरतीर्थमाहात्म्यवर्णनं नाम
त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

## चतुरशीतितमोऽध्यायः

### कपितीर्थरामेश्वरलक्ष्मणेश्वरकुम्भेश्वरमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
कैलासे पृच्छते भक्त्या षण्मुखाय शिवोदितम् ॥ १ ॥

ईश्वर उवाच

पूर्वं त्रेतायुगे स्कन्द हतो रामेण रावणः । चतुर्दश तदा कोट्यो निहता ब्रह्मरक्षसाम्
हतेषु तेषु वै तत्र रक्षणाय दिवौकसाम् । महानन्दस्तदा जातस्त्रिषु लोकेषु पुत्रक
ततः सीतां समासाद्य समयानरपुङ्गवैः । रामोऽप्ययोध्यामायातो भरतेन कृतोत्सवः
तस्मै समर्पयामास स राज्यं लक्ष्मणाग्रज ॥ ४ ॥
तस्मिन्प्रशासति ततो राज्यं निहतकण्टकम् ।
कृतकार्योऽथ हनुमान्कैलासमगात्पुरा ॥ ५ ॥
ततो नन्दीप्रतीहारो रुद्धाश्रममपि तं कपिम् । नचसङ्गमयामास रुद्रेणाऽघौघहारिणा
तेन पृष्टस्तदा नन्दी किं मया पातकं कृतम् ।
येन रुद्रवपुः पुण्यं न पश्याम्यम्बिकान्वितम् ॥ ७ ॥

नन्द्युवाच

त्वयाऽवतरणं चक्रे [illegible] याऽपि हि कृतं पापमुपभोगेन शाम्यति

हनुमानुवाच

किं मयाऽकारि तत्पापं नन्दिन्देवार्थकारिणा ।
राक्षसाश्च हता दुष्टा विप्रयज्ञाङ्गघातिनः ॥ ९ ॥
ततस्तदालापकुतूहली हरो निजांशभाजं कपिमुग्रतेजसम् ।
उवाच द्वारान्तरदत्तदृष्टिः पुरः स्थितं प्रेक्ष्य कपीश्वरं पुनः ॥ १० ॥

ईश्वर उवाच

गङ्गा गया कपे! रेवा यमुना च सरस्वती । सर्वपापहरा नद्यस्तासु स्नानं समाचर
नर्मदादक्षिणे कूले तीर्थं परमशोभनम् । सोमनाथसमीपस्थं तत्र त्वं गच्छ वानर
तत्र स्नात्वा महापापं गमिष्यति ममाऽऽज्ञया ।
उत्पत्य वेगाद्धनुमाञ्छ्रीरेवादक्षिणे तटे ॥ १३ ॥
जगाम सुमहानादस्तपश्चक्रे सुदुष्करम् । तस्य वै तप्यमानस्य रक्षोवधकृतं तमः
विलीनं पार्थ कालेन कियतेशप्रसादतः । ततो देवैः समं देवस्तत्तीर्थमगमद्धरः ॥
कपिमालिङ्गयामास वरं तस्मैप्रदत्तवान् । अद्यप्रभृति ते तीर्थंभविष्यति न संशयः
कपितीर्थं ततो जातं तस्थौ तत्र स्वयं हरः । हनूमन्तेश्वरोनाम्नासर्वहत्याहरस्तदा
तत्र तीर्थे तु यः स्नात्वा भक्त्या लिङ्गं प्रपूजयेत् ।
सर्वपापानि नश्यन्ति हरस्य वचनं यथा ॥ १८ ॥
तत्राऽस्थीनि विलीयन्ते पिण्डदानेऽक्षया गतिः ।
यत्किञ्चिद्दीयते तत्र तद्धि कोटिगुणं भवेत् ॥ १९ ॥
हनुमानप्ययोध्यायां रामंद्रष्टुमथाऽगमत् । चकार कुशलप्रश्नंस्वस्वरूपंन्यवेदयत्

श्रीराम उवाच

कुर्वतोदेवकार्यं तेममकार्यंच्च कुर्वतः । ततोऽहमपिपापीयांस्तपस्तप्स्याम्यसंशयम्
तत्रैव दक्षिणे कूले रेवायाः पापहारिणि । चतुर्विंशतिवर्षाणि तपस्तेपेऽथराघवः
ज्योतिष्मतीपुरीसंस्थः श्रीरेवास्नानमाचरन् ।

स्थापयामासतुर्लिङ्गं तौ तदा रामलक्ष्मणौ । प्रभावात्सत्यतपसो रेवातीरे महामती
निष्पापनौ तदा वीरौ जग्मतू रामलक्ष्मणौ ॥ २४ ॥
ततस्तदा देवपुरोगमो हरो गतो हि वै पुण्यमुनीश्वरैः सह ।
आगत्य तीर्थं च वरं ददौ तदा निजां कलां तत्र विमुच्य तीर्थे ॥ २५ ॥
मुनिभिः सर्वतीर्थानां क्षिप्तं कुम्भोदकं भुवि ।
एकत्व लिङ्गनामाथ कलाकुम्भस्तथाऽभवत् ॥ २६ ॥
कुम्भेश्वर इति ख्यातस्तदा देवगणार्चितः ।
रामोऽपि पूजयामास तल्लिङ्गं देवसेवितम् ॥ २७ ॥
ततो वरं ददौ देवो रामकीर्त्यभिवृद्धये । चतुर्विंशतिमे वर्षे रामो निष्पापतां गतः
यदा कन्यागतः पङ्गुर्गुरुणा सहितो भवेत् । तद्देवदेवयात्रेयमिति देवा जगुर्मुदा ॥
यथा गोदावरीतीर्थे सर्वतीर्थफलं भवेत् । तथात्र रेवास्नानेन लिङ्गानां दर्शनेन च नाम्
करिष्यन्त्यत्र ये श्राद्धं पितॄणां नर्मदातटे । कुम्भेश्वरसमीपस्थास्तत्फलं शृणु पाण्डुव
यावन्तो रोमकूपाः स्युः शरीरे सर्वदेहिनाम् । तावद्वर्षप्रमाणेन पितॄणामक्षया गतिः
पृथिव्यां देवताः सर्वाः सर्वतीर्थानि यानि तु ।
लभन्ते तत्फलं सर्वा लिङ्गत्रयविलोकनात् ॥ ३३ ॥
अपुत्रो लभते पुत्रं निर्धनो धनमाप्नुयात् । सरोगो मुच्यते रोगाद्वाऽऽत्रकायाधिकारणात्
सिंहराशिगते जीवे यत्स्याद्गोदावरीफलम् ।
तद्द्वादशगुणं स्कन्द कुम्भेश्वरसमीपतः ॥ ३५ ॥
ये जानन्ति न पश्यन्ति कुम्भशम्भुमुमापतिम् ।
नर्मदादक्षिणे कूले तेषां जन्म निरर्थकम् ॥ ३६ ॥
यथा गोदावरीयात्राकृतं रामुनिशासनात् । चतुर्विंशतिमे वर्षे तथैव देवभाषितम्
यावच्चन्द्रश्च सूर्यश्च यावद्वै दिवि तारकाः । तावत्तदक्षयं दानं रेवाकुम्भेश्वरान्तिके
महादानानि देयानि तत्र लोकैर्विचक्षणैः । गोदानं प्रशंसन्ति सौवर्णं राजतं तथा
[illegible] मुच्यते पातकैस्तथा ।

स्नानेन किं पुनः स्कन्द ब्रह्महत्यां व्यपोहति ॥ ४० ॥

तत्र तीर्थेतुयःस्नात्वाश्राद्धं कुर्याद्युधिष्ठिर । एकोत्तरंकुलशतमुद्धरेच्छिवशासनात्

यानि कानि च तीर्थानि चासमुद्रसरांसि च ।

शिवलिङ्गार्चनस्येह कलां नार्हन्ति षोडशीम् ॥ ४२ ॥

एवं देवा वरं दत्त्वाहरीश्वरपुरोगमाः । स्वस्थानमगमन्पूर्वमुक्त्वातन्नामचोत्तमम्

तीर्थस्याऽस्य वरं दत्वा स रामो लक्ष्मणाग्रजः ।

अयोध्यां प्रविवेशाऽसौ निष्पापो नर्मदाजलात् ॥ ४४ ॥

सौवर्णीं च ततः कृत्वा सीतां यज्ञं चकार सः ।

अनुमन्त्र्य मुनींल्लोकान्देवताश्च निजं कुलम् ॥ ४५ ॥

पुरा त्रेतायुगे जातं तत्तीर्थं स्कन्दनामकम् ।

नियमेन ततो लोकैः कर्त्तव्यं लिङ्गदर्शनम् ॥ ४६ ॥

तावत्पापानि देहेषु महापातकजान्यपि । यावन्नप्रेक्षते जन्तुस्तत्तीर्थं देवसेवितम्

ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।

ज्योतिष्मतीपुरीसंस्थं ये द्रक्ष्यंति हरं परम् ॥ ४८ ॥

तस्मान्मोहं परित्यज्य जनैर्गन्तव्यमादरात् ।

तीर्थाऽशेषफलावाप्त्यै तीर्थं कुम्भेश्वराह्वयम् ॥ ४९ ॥

मार्कण्डेय उवाच

श्रुत्वेति शम्भुवचसा स षडाननोऽथ नत्वा पितुःपदयुगाम्बुजमादरेण ।

सम्प्राप्य दक्षिणतटं गिरिशात्मजल्याःकीशाग्र्यरामकलशाख्यशिवान् ददर्श

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे रेवाखण्डे कपितीर्थरामेश्वरलक्ष्मणेश्वरकुम्भेश्वरमाहात्म्यवर्णनंनाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥

# पञ्चाशीतितमोऽध्याय.

## सोमनाथतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्रनर्मदाया पुरातनम् । ब्रह्महत्याहरतीर्थंवाराणस्यासमहितन्

युधिष्ठिर उवाच

आश्चर्यं कथ्यता ब्रह्मन्यदद्भुतनमद्वातटे । वाराणस्या सम कस्मादेतत्कथयमे प्रभो
निमग्नो दु खससारे हृतराज्यो द्विजोत्तम ।
युष्मद्वाणीजलस्नातो निर्दुःख सह यान्धवैं ॥ ३ ॥

श्रीमार्कण्डेय उवाच

साधुसाधु महाबाहोसोमवशाविभूषण । पृष्टोऽस्मितुल भतीर्थं गुह्याद्गुह्यतरपरम्
आदौ पितामहस्तावत्समस्तजगत प्रभु ।
मनसा तस्य सञ्जाता दशैव ऋषिपुङ्गवाः ॥ ५ ॥
मरीचिमत्र्यङ्गिरसौ पुलस्त्य पुलह क्रतुम् । प्रचेतस वसिष्ठ च भृगु नारदमेव च
अष्टौ प्राचेतस दक्ष महातेजा प्रजापति ।
दक्षस्याऽपि तथा जाता पञ्चाशद् दुहिता स्त्रिय ॥ ७ ॥
ददौ स दश धर्माय कश्यपाय त्रयोदश । तथैव स महाभाग सप्तविंशतिमिन्दवे
रोहिणी नाम या तासामभीष्टा साऽभवद्विधो ।
दोषात्तु कर्मणा कृत्वा शप्तो दक्षेण चन्द्रमा ॥ ६ ॥
क्षयरोग्यभवच्चन्द्रो दक्षस्याथ प्रजापते । सच शापप्रभावेणनिस्तेजाश्चार्थरीपति
गत पितामह सोमो वेपमानोऽमृतांशुमान् ।
पद्मयोने नमस्तुभ्य वेदगर्भ नमोऽस्तु ते ॥
[illegible] ॥ ११ ॥

ब्रह्मोवाच

निस्तेजाः शर्वरीनाथ कलाहीनश्च दृश्यसे । उद्विग्नमानसस्तात सञ्जातश्केनहेतुना

सोम उवाच

दक्षशापेन मे ब्रह्मन्निस्तेजस्त्वंजगत्पते । निर्हारश्चाऽस्यशापस्यकथ्यतांमेपितामह

ब्रह्मोवाच

सर्वत्र सुलभा रेवा त्रिषु स्थानेषु दुर्लभा । ओङ्कारेऽथभृगुक्षेत्रेतथाचैवौर्विसङ्गमे
तत्र गच्छ क्षपानाथयत्र रेवान्तरं तटम् । त्वरितोऽसौ गतस्तत्रयत्ररेवौर्वसङ्गमः

काष्ठावस्थः स्थितः सोमो दध्यौ त्रिपुरवैरिणम् ।
यावद्वर्षशतं पूर्णं तावत्तुष्टोमहेश्वरः ॥ १६ ॥
प्रत्यक्षः सोमराजस्य वृषासन उमापतिः ।
साष्टाङ्गं प्रणिपत्योच्चैर्जय शम्भो! नमोऽस्तुते ॥ १७ ॥
जय शङ्कर! पापहराय! नमोजय ईश्वर ते जगदीश! नमः ।
जय वासुकिभूषणधार! नमो जय शूलकपालधराय नमः ॥ १८ ॥
जय अन्धकदेहविनाश! नमो जय दानववृन्दवधाय नमः ।
जय निष्कलरूप! सकलाय नमो जय काल कामदहाय नमः ॥ १६ ॥
जय मेचककण्ठधराय नमो जय सूक्ष्मनिरञ्जनशब्द! नमः ।
जय आदिरनादिरनन्त! नमो जय शङ्कर! किङ्करमीश भज ॥ २० ॥

एवं स्तुतोमहादेवःसोमराजेनपाण्डव । तुष्टस्तस्य नृपश्रेष्ठ! शिवयाशङ्करोऽब्रवीत्

ईश्वर उवाच

वरं प्रार्थय मे भद्र! यत्ते मनसि वर्त्तते । साधुसाधुमहासत्त्व तुष्टोऽहं तपसा तव

सोम उवाच

दक्षशापेन दग्धोऽहं क्षीणसत्वो महेश्वर । शापस्योपशमं देव कुरु शर्म मम प्रभो !॥

ईश्वर उवाच

तव भक्तिगृहीतोऽहमुमया सह तोषितः ।

स्त्र्युवाच

सन्देशं श्रूयतां विप्र! यदि गच्छसि सङ्गमे ।
मद्भर्त्ता तिष्ठते तत्र शीघ्रमेव विसर्जय ॥ ४१ ॥
एकाकिनी च ते भार्या तिष्ठते वनमध्यगा । इत्याकर्ण्यगतोविप्र सङ्गमे सुरदुर्लभे
वृक्षच्छायान्वितः कण्वो ब्राह्मणेनाऽवलोकितः ।
उवाच तं प्रति तदा वचनं ब्राह्मणोत्तमः ॥ ४३ ॥

ब्राह्मण उवाच

वनान्तरे मया दृष्टा बाला कमललोचना । रक्ताम्बरधरा तन्वी रक्तचन्दनचर्चिता
रक्तमालया सुशोभाढ्या पाशहस्तामृगेक्षणा ।
वृक्षारूढाऽवदद्वाक्यं मद्भर्त्ताप्रेष्यतामिति ॥ ४५ ॥

कण्व उवाच

कस्मिन्स्थानेतु विप्रेन्द्रविद्यते मृगलोचना । कस्यसाकेनकार्येणत्वंमेनद्वदाशु मे

ब्राह्मण उवाच

सङ्गमादर्द्धकोशे सा उद्यानान्तेहिविद्यते । वचनाद्ब्राह्मणस्यैतानज्ञानापार्थिवेनतु
तदा स कण्वभूपालः स्वकं दूतं समादिशत् ।

कण्व उवाच

गच्छ त्वं पृच्छतां तां काऽऽगता क्व गमिष्यसि ।
प्रेषितस्त्वरितो दूतो गतो नारीसमीपतः ॥ ४८ ॥
वृक्षस्थां ददृशे बालामुवाच नृपसत्तम !।
मन्नाथः पृच्छति त्वां तु काऽसि त्वं क्व गमिष्यसि ॥ ४६ ॥

कन्योवाच

गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम् ।
इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ ५० ॥
ब्रह्महत्याचसञ्जाता मृगरूपधरद्विजात् । मयायुक्तोऽपितेराजामुक्तस्तीर्थप्रभावतः

नबोधयेद्दीपंनृत्यंगीतंच कारयेत्।सोमवारे तथाऽष्टम्यांप्रमातेपूजयेद्द्विजान्
जितक्रोधानात्मवतः परनिन्दाविवर्जितान्।
सर्वांश्चिराञ्च्छस्तान् स्वदारपरिपालकान्॥ ६८॥
यत्रीपाठमात्रांश्च विकर्मविरतान्सदा। पुनर्भूर्वृषली शूद्री घरेयुर्यस्य मन्दिरे॥
दूरतोऽसौ द्विजस्त्याज्य आत्मनः श्रेय इच्छता।
हीनाङ्गाऽनतिरिक्तांगान्येषां पूर्वापरं न हि॥ ७०॥
यज्ञे श्राद्धे तथा दाने दूरतस्तान्विवर्जयेत्।
आयसीतरुणीतुल्या द्विजाः स्वाध्यायवर्जिताः॥ ७१॥
आत्मानं सह याज्येन पातयन्ति न संशयः।
शाल्मलीनावतुल्याः स्युः षट्कर्मनिरता द्विजाः॥ ७२॥
तारंचतथाऽऽत्मानंतारयन्तितरन्ति च। श्राद्धंसोमेश्वरेपार्थ!यःकुर्याद्गतमत्सरः
प्रेतास्तस्य हि सुप्रीता यावदाभूतसम्प्लवम्।
अन्नं वस्त्रं हिरण्यं च यो दद्यादग्रजन्मने॥ ७४॥
स यातिशाङ्करेलोक इतिमेसत्यभाषितम्। हयंयोयच्छते तत्र सम्पूर्णंतरुणंसितम्
रक्तं वा पीतवर्णं वा सर्वलक्षणसंयुतम्। कुङ्कुमेन विलिप्ताङ्गावग्रजन्महयावपि॥
स्रग्दामभूषितौ कार्यौ सितवस्त्रावगुण्ठितौ।
अद्भिः प्रदीयतां स्कन्धे मदीये हयमारुह॥ ७७॥
आरूढे ब्राह्मणेब्रूयाद्भास्करःप्रीयतामिति। स यातिशाङ्करंलोकंसर्व्वपापविवर्जितः
उपरागे तु सोमस्य तीर्थं गत्वा जितेन्द्रियः।
सत्यलोकाच्च्युतश्चाऽपि राजा भवति धार्मिकः॥ ७९॥
तस्यवासःसदाराजन्न नश्यति कदाचन। दीर्घायुर्जायते पुत्रो भार्या च वशवर्तिनी
जीवेद्वर्षशतंसाग्रं सर्वदुःखविवर्जितः। सोपवासोजितक्रोधो धेनुं दद्याद्द्विजन्मने
सवत्सां क्षीरसंयुक्तां श्वेतवस्त्रावलोकिताम्।
शबलां पीतवर्णाञ्च धूम्रां वा नीलकर्बुराम्॥ ८२॥

कपिला चा सवत्सां च घण्टाभरणभूषिताम् ।
रूप्यखुरां कांस्यदोहां स्वर्णशृङ्गीं नरेश्वर ॥ ८३ ॥
श्वेतयाघ्रद्भतेयशोरत्नामोमाम्यचाद्दिनी । शथलापीतवर्णाभ दुःखघ्न्यीमसत्रकीर्तिने
कपिलानाशयेत्पाप सप्तजन्मसमुद्भवम् । सत्यलोकमवाप्नोति गोप्रदाता नरेश्वर ॥
पक्षान्तेऽयव्यतीपाते च पूर्णारविसङ्क्रमे । दिनक्षये गजच्छाया ग्रहणेभास्करस्य च
ये मजन्ति महात्मान मद्दमेसुरदुर्लभे । मृदावगुण्ठयित्वागानुघाटमामसङ्गमेविशेन
हृद्यान्तजले आप्यमाणायामोऽयचात्नृप । भायर्जावैष्णर्वाचैयमौरीशैवायद्दुच्छया
तेऽपि पापैः प्रमुच्यन्त इत्येवं शङ्करोऽब्रवीत् ॥ ८८ ॥
जगतीं सोमनाथस्य यस्तु कुर्यात्प्रदक्षिणाम् ।
प्रदक्षिणीकृता तेन ससद्वीपा वसुन्धरा ॥ ८९ ॥
ब्रह्महत्या सुरापानगुरुदारनिषेवणम् । भ्रूणहा स्वर्णहर्ता च मुच्यन्तेनाऽनन्यशय
तीर्थाख्यानमिदं पुण्यं यः शृणोति जितेन्द्रियः ।
व्याधितो मुच्यते रोगी चारोगी सुखमाप्नुयात् ॥ ९१ ॥
यत्ते सन्दर्शते येन शृणु तन्मे युधिष्ठिर ।
नैकोऽपि नृप लोकेऽस्मिन्भ्रूणहत्या सुदुस्त्यजा ॥ ९२ ॥
किन्तु षड्विंशति पार्थ प्राप या क्षणदाकर ।
सोऽपि तीर्थमिदं प्राप्य तपस्तप्त्वा सुदुश्चरम् ॥ ९३ ॥
विमुक्त सर्वपापेभ्य शीतरश्मिरभू मुनी । श्रूयतेनृपर्पौराणीगतयागीनामहर्विभि
र्विङ्ग प्रतिष्ठितःसोकदशाभ्रूणहन भवेत् । यत्नोर्मिङ्गत्रयंसोम स्थापयामासमारत
वैयोरिमङ्गमे हाय द्वितीयभृगुकच्छके । तत सिद्धि परा प्राप्यप्रभासे तृतीयकम्
इति ते कथितं सर्वं तीर्थमाहात्म्यमुत्तमम् ।
धर्म्यं यशस्यमायुष्यं स्वर्ग्यं सद्बुद्धिवर्धनम् ॥ [illegible] ॥
पुत्रार्थी लभते पुत्रान्निष्कामः स्वर्गमाप्नुयात् ।
मुच्यते सर्वपापेभ्यस्तीर्थं कृत्वा परं नृप ॥ ९८ ॥

एतत्ते सर्वमाख्यातं सोमनाथस्य यत्फलम्।
श्रुत्वा पुण्यमवाप्नोति स्नात्वा याऽर्णी नसंशयः ॥ ६६ ॥

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे सोमनाथतीर्थमाहात्म्यवर्णनंनाम पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

# षडशीतितमोऽध्यायः

## पिङ्गलेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महाराज पिङ्गलावर्त्तमुत्तमम्। सङ्गमस्य समीपस्थं रेवाया उत्तरेतटे
हव्यवाहेन राजेन्द्र! स्थापितः पिङ्गलेश्वरः ॥ १ ॥

युधिष्ठिर उवाच

हव्यवाहेन भगवन्नीश्वरःस्थापितःकथम्। एतदाख्याहि मेसर्वंप्रसादाद्वक्तुमर्हसि

मार्कण्डेय उवाच

शम्भुना ऽनसाराजंस्तर्पितोहव्यवाहनः। प्राप्तलोक्येनरौद्रेणगौर्याक्रीडनचेतसा
हव्यवाहमुखे क्षिप्तं रुद्रेणामिततेजसा। रुद्रस्य रेतसा दग्धस्तीर्थयात्राकृतादरः॥
सागरांश्च नदीर्गत्वाक्रमाद्रेवां समागतः। चचारपरयाभक्त्याध्यानमुग्रं हुताशनः
वायुभक्षः शतं साग्रं यावत्तेपे हुताशनः। तावत्तुष्टो महादेवो वरदो जातवेदसः॥
सन्निधौ समुपेत्याथ वचनं चेदमब्रवीत्॥ ६॥

ईश्वर उवाच

वरं वृणीष्व हव्याश! यत्ते मनसि वर्तते ॥ ७ ॥

वह्निरुवाच

नमस्ते सर्वलोकेश! उग्रमूर्ते नमोऽस्तु ते। रेतसा तव सन्दग्धःकण्ठीजातो महेश्वर

कृपा कुरु महादेव मम रोग विनाशय ॥ ८ ॥

ईश्वर उवाच

हव्यवाह भवारोगो मत्प्रसादाच्च मत्परम् ।
अवनीर्थे कृतस्नान स्वरूप प्रतिपत्स्यसे ॥ ९ ॥

इत्युक्त्वा च महादेवस्तत्रैवान्तरधीयत । अनन्तरहव्यवाह स्नात्वा रेवाजलेश्वरे
तदैवरोगनिर्मुक्तोऽभवद्दिव्यस्वरूपवान् । स्थापयामासदेवेशमग्निः पिङ्गलेश्वरम्
नाम्नालम्पूजयामासगुणवस्तुतिभिर्मुदा । ततोजगामदेवेश स्व देवानां हव्यवाहन
हव्यवाहेन भूपैव स्थापित पिङ्गलेश्वर । जितक्रोधो हि यस्तत्र उपवाससमाचरेत्

अतिरात्रफलं तस्य अन्ते रुद्रत्वमाप्नुयात् ।
गुणान्विताय विप्राय कपिलां तत्र भारत ॥ १४ ॥
अलङ्कृत्य नियतात्मा च शक्त्याऽलङ्कारभूषिताम् ।
य प्रयच्छति राजेन्द्र स गच्छेत्परमां गतिम् ॥ १५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे पिङ्गलेश्वरतीर्थमाहात्म्यवर्णननाम षडशीतितमोऽध्याय ॥ ८६ ॥

---

## सप्ताशीतितमोऽध्याय

### ऋणत्रयमोचनतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल तीर्थं परमशोभनम् । स्थापितमुनिमुख्यैश्च ब्रह्मवंशसमुद्भवै
ऋणमोचनमित्याख्यं रेवातटसमाश्रितम् । यत्रस्नानमनुष्ठाय कन्यानयनिस्तृदेवता

देवे पितृमनुष्येभ्य ऋणमात्मकृत च यत् ।
मुच्यते तत्क्षणान्मर्त्य स्नातो वै नर्मदाजले ॥ ३ ॥

त्यक्तं दुरितं तत्र दृश्यते फलकृपनः । तत्र तीर्थं तु यो राजन्नेकभक्तो जितेन्द्रियः
स्नात्वा दानं च वै दद्याद्वंशं द्विरिलायतिम् ।
ऋणत्रयविनिर्मुक्तो नात्र कार्या विचारणा ॥ ५ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां पञ्चमेऽवन्तीखण्डे रेवाखण्डे
रेवाखण्डेऋणत्रयमोचनतीर्थमाहात्म्यवर्णनंनामसप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

# अष्टाशीतितमोऽध्यायः

## कपिलेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तस्यैवानन्तरंपार्थ कापिलंतीर्थमाश्रयेत् । स्थापितं कपिलेनैवसर्वपातकनाशनम् ॥ १ ॥
अष्टम्यां च सिते पक्षे चतुर्दश्यां नरेश्वर ॥
स्नापयेत्परया भक्त्या कपिलाक्षीरसर्पिषा ॥ २ ॥
श्रीखण्डेन सुगन्धेन गुण्ठयेत्महेश्वरम् । ततःसुगन्धपुष्पैश्चधूपैश्चनृपसत्तम ॥ ३ ॥
येऽर्चयन्ति जितक्रोधा न ते यान्ति यमालयम् ।
असिपत्रवनं घोरं यमचुल्ली सुदारुणा ॥ ४ ॥
दृश्यते नैव विद्वद्भिः कपिलेश्वरपूजनात् ।
स्नात्वा रेवाजले पुण्ये भोजयेद्ब्राह्मणाञ्छुभान् ॥ ५ ॥
गोप्रदानेन वस्त्रेण तिलदानेन भारत । छत्रशय्या प्रदानेन राजा भवति धार्मिकः ॥ ६ ॥
तीव्रतेजाविशोकश्चजीवत्पुत्रःप्रियम्वदः । शत्रुवर्गोनतस्यस्यात्कदाचित्पाण्डुनन्दन ॥ ७ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे कपिलेश्वरतीर्थमाहात्म्यवर्णनंनामाऽष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

## एकोननवतितमोऽध्यायः

### पूतिकेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र पूतिकेश्वरमुत्तमम् । नर्मदादक्षिणेकूले सर्वपापक्षयङ्करम्
स्थापितं जाम्बवन्तेन लोकानां तु हितार्थिना ।
राजा प्रसेनजिन्नाम तस्या वक्षस्थलान्मणी ॥ २ ॥
समुत्क्षिप्ते तु तेनैव सपूतिरभवद्व्रण । तत्र तीर्थं तपस्तस्या निर्व्रण समजायत
तेन तत्स्थापितं लिङ्गं पूतिकेश्वरमुत्तमम् । यस्तत्रमनुजोभक्त्यास्नायाद्गतमत्सरः
सर्वान्कामानवाप्नोति सम्पूज्य परमेश्वरम् ।
कृष्णाष्टम्यां चतुर्दश्यां सर्वकाल नराधिप ॥
येऽर्चयन्ति सदा देव ते न यान्ति यमालयम् ॥ ५ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे पूतिकेश्वरतीर्थमाहात्म्यवर्णनं नामैकोननवतितमोऽध्यायः ॥८९॥

---

## नवतितमोऽध्यायः

### जलशायितीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

रेवायाउत्तरेकूलेवैष्णवं तीर्थमुत्तमम् । जलशायीति वै नाम विख्यातं वसुधातले
दानवानां वधं कृत्वा सुप्तस्तत्र जनार्दनः । चक्रं प्रक्षालितंतत्र देवदेवेन चक्रिणा
सुदर्शनं च निष्पापं रेवाजलसमाश्रयात् ॥ २ ॥

युधिष्ठिर उवाच

चक्रतीर्थं समाचक्ष्व मुनिसङ्घैश्च वन्दितम् ।
विष्णोः प्रभावमतुलं रेवायाश्चैव यत्फलम् ॥ ३ ॥

श्रीमार्कण्डेय उवाच

साधुसाधु महाप्राज्ञ! विरक्तस्त्वं युधिष्ठिर !।
गुह्याद्गुह्यतरं तीर्थं निर्मितं चक्रिणा स्वयम् ॥ ४ ॥
तत्तेहं सम्प्रवक्ष्यामि कथां पापप्रणाशिनीम् ।
आसीत्पुरा महादैत्यस्तालमेघ इति श्रुतः ॥ ५ ॥

तेनदेवा जिताःसर्वेहृतराज्यानराधिप । यज्ञभागान्स्वयंभुङ्क्तेअहंविष्णुर्नसंशयः
धनदस्य हृतं वित्तं हृतः शक्रस्य वारणः । इन्द्राणीं वाञ्छतेपापो ह्यरत्नंरवेरपि
तालमेवभयात्पार्थरविरुद्राःसवासवाः । यमःस्कन्दोजलेशोऽग्निर्वायुर्देवोधनेश्वरः
सवाक्पतिमहेशाश्चनष्टचित्ताःपितामहम् । गतादेवाब्रह्मलोकं तत्र दृष्ट्वापितामहम्
तुष्टुवुर्विविधैः स्तोत्रैर्वागीशप्रमुखाः सुराः । गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे
दृष्ट्वा देवान्निरुत्साहान्विवर्णानवनीपते । प्रसादाभिमुखोदेवः प्रत्युवाचदिवौकसः

ब्रह्मोवाच

स्वागतं सुरसङ्घस्यकान्तिर्नष्टापुरातनी । हिमक्लिष्टप्रभावेणज्योतींषीवमुखानिवः
प्रशमादर्चिषामेतदनुद्गीर्णं सुरायुधम् ।
वृत्रस्य हन्तुः कुलिशं कुण्ठितश्रीव लक्ष्यते ॥ १३ ॥
किं चायमरिदुर्वारः पाणौ पाशः प्रचेतसः ।
मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः ॥ १४ ॥

कुबेरस्य मनः शल्यं शंसतीव पराभवम् । अपविद्धगतो वायुर्भग्नशाख इवद्रुमः ॥
यमोऽपि विलिखन्भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघोऽपि निर्वाणालातलाघवम् ॥ १६ ॥
अमी च कथमादित्याः प्रतापक्षतिशीतलाः ।

चिरन्यस्ता इव गता प्रभामालोकनीयताम् ॥ १७ ॥
तदद्भुत यस्मा किमिति प्रार्थयध्वं समागता ।
किमागमनकृत्यं वो ब्रूत निःसंशयं सुरा ॥ १८ ॥
मयि दृष्टिर्हि लोकानां रक्षा युष्मास्वयस्थिता ।
ततो मन्दानिलोद्धूतकमलाकरशोभिना ॥ १९ ॥
गुरुः नेत्रसहस्रेण प्रेरयामास वृत्रहा । स द्विजेन्द्र हरध्वंसु सहस्रनयनाधिकम् ॥
वाचस्पतिरुवाचेदं प्राञ्जलिर्जलशायिनम् ।
युष्मदंशोद्भवस्तात तारकेयो महाबल ॥ २१ ॥
उपतापयते देवान्धूमकेतुरिवोच्छ्रित । तेन देवगणाः सर्वे दुःखिता दानवेन च ॥२२
तारकेयो दैत्यपतिः सर्वान्नो बाधते यतः ।
तस्मात्त्वां शरणं प्राप्ता शरणं नो विधे भव ॥ २३ ॥
ततः प्रसन्नो भगवान्नैवास्नानर्थादश ॥ २४ ॥

ब्रह्मोवाच

तारकेयेण या सृष्टे यन्नी मैन सम सुरा । विनाशमाधवदेवेतस्माद्योमे मैयद्वामय
ततः सुरगणाः सर्वे विरञ्चिप्रमुखा नृप । क्षीरोदप्रस्थिता सर्वे दुःखितास्तमवैरिणः
त्वरिता प्रस्थिता द्रुतं वैशान दृष्टुकाम्यया ।
क्षीरोदं सागरं गत्वाऽस्तुवस्ते जलशायिनम् ॥ २७ ॥

देवा ऊचुः

जगदादिरनादिस्त्वं जगदन्तोऽप्यनन्तकः ।
जगन्मूर्तिरमूर्तिस्त्वं जय गीर्वाणपूजित ॥ २८ ॥
जय क्षीरोदशयन जय लक्ष्म्या सदावृत । जय दानवनाशाय जय देवकिनन्दन
जय शङ्खगदापाणे जय चक्रधरप्रभो । इति देवस्तुतिं श्रुत्वा प्रबुद्धो जलशाय्यथ
उवाच मधुरां वाणीं मेघगम्भीरनिस्वनाम् ।
किमर्थं बोधितो ब्रह्मन्समर्थैर्यैः सुरासुरैः ॥ ३१ ॥

ब्रह्मोवाच

तालमेघभयात्कृष्ण! सम्प्राप्ता तव मन्दिरम् ।
न वध्यः कस्यचित्पापतालमेघो जनार्दन !॥ ३२ ॥
त्वमेव जहि तं दुष्टं मृत्युं यास्यति नान्यथा ॥ ३३ ॥

श्रीकृष्ण उवाच

स्वस्थानं गम्यतां देवाः स्वकीयां लभत प्रजाम् ।
दुष्टात्मानं हनिष्यामि तालमेघं महाबलम् ॥ ३४ ॥
स्थानं ब्रुवन्तु मे देवा! वसेद्यत्र स दानवः ॥ ३५ ॥

देवा ऊचुः

हिमाचलगुहायां सवसते दानवेश्वरः । चतुर्विंशतिसाहस्रैः कन्याभिःपरिवारितः
तुरङ्गैः स्यन्दनैः कृष्ण! सङ्ख्या तस्य न विद्यते ।
नटा नानाविधास्तत्र असङ्ख्यातगुणा हरे !॥ ३७ ॥
द्विरदाः पर्वताकारा हयाश्च द्विरदोपमाः । महाबलो वसेत्तत्र गीर्वाणभयदायकः
श्रुत्वादेवोवचस्तेषांदेवानामातुरात्मनाम् । अचिन्तयद्गरुत्मन्तंशत्रुसङ्घविनाशनम्
चक्रं करेण संगृह्य गदाचक्रधरः प्रभुः । शार्ङ्गं च मुशलं सीरं करैर्गृह्य जनार्दनः ॥
आरूढः पक्षिराजेन्द्रं वधार्थं दानवस्य च । दानवस्य पुरेपेतुरुत्पाता घोररूपिणः
गोमायुर्गृध्रमध्ये तु कपोतैः सममाविशत् । विनापातेनतस्यैव ध्वजदण्डःपपातह
सर्पमूषकयोर्युद्धं तथा केसरिनागयोः । उन्मार्गाःसरितस्तत्रावहन्रक्तविमिश्रिताः
अकालतरुपुष्पाणि दृश्यन्ते स्म समन्ततः ॥ ४३ ॥
ततः प्राप्तोजगन्नाथो हिमवन्तंनगेश्वरम् । पाञ्चजन्यश्च सहसा पूरितः पुरसन्निधौ
तेन शब्देन महता ह्यारूढो दानवेश्वरः ।
उवाच च तदा वाक्यं तालमेघो महाबलः ॥ ४५ ॥

तालमेघ उवाच

कोऽयं मृत्युवशं प्राप्तो ह्यज्ञात्वा मम विक्रमम्

धुन्धुमाराज्ञया ह्याशु स्वसैन्यपरिवारित ॥ ४८ ॥
बलादानय त बद्ध्वा मसाग्रे बाहुशालिनम् ॥ ४७ ॥

धुन्धुमार उवाच

आनयामि न सदेह सुरोयक्षोऽयकिंकर । स्वस्यन्दने समायुक्तैगजवाजिभटै सह
हृष्टस्ततो जगयोनि सुपर्णस्थो महाबल । शृयतागृह्यतामेवंत्युक्तास्तेनकिंकरा
चतुर्दिशु प्रधावन्त इतश्चेतश्च सर्वत । सुपर्णेनाऽग्निरूपेण दग्धास्ते शलभा यथा
धुन्धुमारोऽपिकृष्णेनशरघातेन ताडित । हतोवक्षस्थले पापोमृतायस्योरथोपरि
हाहाकार तत सर्वे दानवाश्चक्रुरातुरा । तालमेघस्तत क्रुद्धोरथारूढो विनिर्गत
ददर्श केशव पार्थ शङ्खचक्रगदाधरम् ॥ ५२ ॥

तालमेघ उवाच

धन्यै ते दानवा कृष्ण ये हता समरे त्वया ।
हिरण्यकशिपुप्रख्या न पुमासो हि तेऽच्युत ॥ ५३ ॥
इत्युक्त्वा दानव पार्थ ! वर्षयामास सायकै ।
दानवस्य शरान्मुक्तारछेदयामास केशव ॥ ६४ ॥
गरमानवधीत्सैन्यमवध्य यत्सुरासुरै ।
कृष्णेन द्विगुणास्तस्य प्रेषिता स्वशिलीमुखा ॥ ५ ॥
द्विगुण द्विगुणीकृत्य प्रेषयामास दानव ।
तानप्यष्टगुणै कृष्णश्छादयामास सायकै ॥ ५६ ॥
तत क्रुद्धेन दैत्येन ह्याग्नेय बाणमुत्तमम् ॥ ५७ ॥

वारुण प्रेषयामास ह्याग्नेय शमित तत । वारुणेनैववायव्य तालमेघो व्यमर्जय्
सार्पं चैवहृषीकेशोवायव्यस्यप्रशान्तये । नारसिंह नृसिंहोऽपिप्रेषयामासपाण्डव
नारसिंह ततो दृष्ट्वातालमेघोमहायश । उत्तीर्य स्यन्दनाच्छीघ्रगृहीत्वाथखड्गचर्मणी
कृष्ण त्वा प्रेषयिष्यामि यममार्गं सुदारुणम् ।
इत्युक्त्वा दानव पार्थ आगत केशवं प्रति ॥ ६१ ॥

खड्गेनाताडयद्दैत्यो गदापाणिंजनार्द्दनम् । मण्डलाग्रं ततो गृह्य केशवोहृष्टमानसः
जघनोरःस्थले पार्थ तालमेघं महाहवे । जनार्द्दनस्तदा दैत्यंदैत्यो हरिमहन्मृधे ॥
जनार्द्दनस्ततः क्रुद्धस्तालमेघाय भारत !। अमोघं चक्रमादाय मुक्तं तस्यच मूर्द्धनि
निपपातशिरस्तस्यपर्वताश्चचकम्पिरे । समुद्राःक्षुभिताःपार्थनद्यउन्मार्गगामिनीः
पुष्पवृष्टिं ततो देवा मुमुचुः केशवोपरि । अवध्यः सुरसङ्घानां सूदितः केशवत्वया

स्वस्थाश्चैव ततो देवास्तालमेघे निपातिते ।
जनार्द्दनोऽपि कौन्तेय! नर्मदातटमाश्रितः ॥ ६७ ॥

क्षीरोदां नर्मदांमत्वाअनन्तभुजगोपरि । लक्ष्म्यासमन्वितःकृष्णोनिलीनश्चोत्तरेतटे

चक्रं विभीषणं मर्त्ये ज्वालामालासमन्वितम् ।
पतितं नर्मदातोये जलशायिसमीपतः ॥ ६६ ॥

निर्द्धूतकल्मषं जातं नर्मदातोययोगतः । तालमेघवधोत्पन्नं यत्पापं नृपनन्दन !॥
तत्सर्वंक्षालितं सद्योनर्मदाम्भसि भारत !। तदाप्रभृतिलोकेऽस्मिञ्जलशायीमहीपते
चक्रतीर्थं वदन्त्यन्येकेचित्कालाघनाशनम् । विख्यातं भारते वर्षेनर्मदायां महीपते

तत्तीर्थस्य प्रभावोऽयं श्रूयतामवनीपते !।
यथाऽनन्तो हि नागानां देवानां च जनार्द्दनः ॥ ७३ ॥
मासानां मार्गशीर्षोऽस्ति नदीनां नर्मदा यथा ।
मासि मार्गशिरे पार्थ! ह्येकादश्यां सितेऽहनि ॥ ७४ ॥
गत्वा यो मनुजो भक्त्या कामक्रोधविवर्जितः ।
वैष्णवीं भावनां कृत्वा जलेशं तु व्रजेत वै ॥ ७५ ॥

एकभुक्तं च नक्तं चतथैवाऽयाचितं नृप । उपवासं तथा दानंब्राह्मणानांचभोजनम्
करोति च कुरुश्रेष्ठ! नसयातियमालयम् । यमलोकभयाद्भीतायेलोकाःपाण्डुनन्दन
तेपश्यन्तुश्रियःकान्तंनागपर्यंकशायिनम् । गोपीजनसमावृत्तंयोगनिद्रांसमाश्रितम्

विश्वरूपं जगन्नाथं संसारभयनाशनम् ॥ ७८ ॥

स्नापयेत्परया भक्त्याक्षौद्रक्षीरेण सर्पिषा । खण्डेनतोयमिश्रेणजगद्योनिंजनार्द्दनम्

स्नाप्यमान च पश्यन्ति ये लोका गतमत्सरा ।
ते यान्ति परम लोक सुरासुरनमस्कृतम् ॥ ८० ॥

घृतेन बोधयेद्दीपमथवा तैलपूरितम् । रात्रौ जागरण कृत्वा देवस्याग्रे विमत्सरा

ये कथा वैष्णवीं भक्त्या शृण्वन्ति च तपोत्तम ।
ब्रह्महत्यादिपापानि नश्यन्ते नाऽत्र संशय ॥ ८२ ॥
प्रदक्षिणन्ति ये भक्त्या जलशायिजगद्गुरुम् ।
प्रदक्षिणीकृता तैस्तु सप्तद्वीपा वसुन्धरा ॥ ८३ ॥

तत प्रभाते विमले पितृन्सन्तर्पयेज्जले । श्राद्धं च ब्राह्मणैस्तत्र योग्यैः पाण्डवमानद

स्वदारनिरतै शान्तै परदारविवर्जकै । वेदाभ्यसनशीलैश्च स्वकर्मनिरतै शुभै
नित्य यजनशीलैश्च विमत्स्यापरिवारकै ।
श्रद्धया कारयेच्छ्राद्ध यदीच्छेच्छ्रेय आत्मन ॥ [illegible] ॥
ते धन्या मानवे लोके धन्या हि भुवि मानवा ।
ये वसन्ति सदाकाल पादपद्माश्रया हरे ॥ ८७ ॥
जलशाय प्रपश्यन्ति प्रत्यक्ष सुरनायकम् ।
पक्षोपवास पाराक व्रत चान्द्रायण शुभम् ॥ ८८ ॥

मासोपवासमुग्र च षष्ठान्नपक्षमव्रतम् । तत्तत्सर्वतुल्य स्यात्सोऽक्षयागतिमाप्नुयात्

श्रीमार्कण्डेय उवाच

अत पर प्रवक्ष्यामि तिलधेनोश्च यत्फलम् ।
यथा यस्मिन्यत्र दया दाने तस्या शुभ फलम् ॥ ९० ॥

एतत्कथान्तरपुण्यमपेद्वैपायनात्पुरा । श्रुत हि नैमिषे पुण्ये नारदाद्यैरनेकधा ॥

इद परममायुष्यमङ्गल्यकीर्तिवर्द्धनम् । विप्राणाश्रावयन्विद्वान्स दानन्त्यसमश्नुते

बहुभ्यो नप्रदेयानि गौर्गृह शयनस्त्रिय । विभक्तदक्षिणा ह्येता दातारस्तारयन्ति च

एकमेव प्रदातव्य न बहूना युधिष्ठिर । सा च विक्रयसापधा दहत्यासप्तम कुलम्

तिला श्वेतास्तिला कृष्णास्तिला गोमूत्रसन्निभा ।

तिलानां तु विचित्राणां धेनुं वत्सं च कारयेत् ॥ ९५ ॥
यथालाभा तु सर्वेषां चतुर्द्रोणा तु गौः स्मृता ।
द्रोणस्य वत्सकः कार्यो बहुना वाऽपि कामतः ॥ ९६ ॥
यस्मिन्देशे तु यन्मानं विषये वा विचारितम् ।
तेन मानेन तां कुर्वन्नक्षयं फलमश्नुते ॥ ९७ ॥
सुखपूर्वं शुचौ भूमौ पुष्पधूपाक्षतैस्तथा । कर्णाभ्यांरत्नेदातव्ये दीपौनेत्रद्वये तथा
श्रीखण्डसुरभिस्थाप्यंताभ्यां चैवतुकाञ्चनम् । उद्ध्र्वमधुनतंदेयंकुर्यात्सर्परोमकम्
कम्बलेकम्बलंदद्याच्छ्रोण्यां मधुघृनंतथा । यवसं पायसंदद्याद्घृतं क्षौद्रसमन्वितम्
स्वर्णशृङ्गीरूप्यशिफारुक्मलांगूलसंयुता । रत्नपृष्ठातुदातव्याकांस्यपात्रावदोहिनी
यत्स्याद्बाल्यकृतं पापं यद्वा कृतमजानता ।
वाचा कृतं कर्मकृतं मनसा यद्विचिन्तितम् ॥ १०२ ॥
जले निष्ठीवितं चैव मुशले वापि लङ्घितम् ।
वृषलीगमनञ्चैव गुरुदारनिषेवणम् ॥ १०३ ॥
कन्याया गमनञ्चैव सुवर्णस्तेयमेव च । सुरापानं तथा चान्यत्तिलधेनुःपुनातिहि
अहोरात्रोपवासेनविधिवत्तां विसर्जयेत् । या सा यमपुरेघोरे नदीवैतरणीस्मृता
वालुकाऽयोऽश्मस्थला च पच्यतेयत्रदुष्कृती । अवीचिर्नरकोयत्रयत्रयामलपर्वतौ
यत्र लोहमुखाःकाका यत्र श्वानो भयङ्कराः । असिपत्रवनञ्चैवयत्रसाकूटशाल्मली
तान्सुखेन व्यतिक्रम्य धर्मराजालयं व्रजेत् । धर्मराजस्तु तं दृष्ट्वा सूनृतं वक्तिभारत
विमानमुत्तमं योग्यं मणिरत्नविभूषितम् । अत्रारुह्य नरश्रेष्ठ! प्रयाहि परमां गतिम्
मा च चाटु भटे देहि नैव देहि पुरोहिते ।
मा च काणे विरूपे च न्यूनाङ्गे न च देवले ॥ ११० ॥
अवेदविदुषे नैव ब्राह्मणे सर्वविक्रये । मित्रघ्ने च कृतघ्ने च मन्त्रहीने तथैव च ॥
वेदान्तगाय दातव्या श्रोत्रियाय कुटुम्बिने । वेदान्तगसुते देयाश्रोत्रिये गृहपालके
सर्वाङ्गरुचिरे विप्रे सद्वृत्ते च प्रियम्वदे ।

पूर्णिमायां तु माघस्य कार्त्तिक्यामथ भारत ॥ ११३ ॥
वैशाख्यां मार्गशीर्ष्यां चाऽऽषाढ्यां चैत्र्यामथाऽपि वा ।
अयने विषुवे चैव व्यतीपाते च संक्रमे ॥ ११४ ॥
षडशीतिमुखे पुण्ये छायायां कुञ्जरस्य वा ।
एष ते कथितः कल्पस्तिलधेनोर्मयाऽनघ ॥ ११० ॥
प्रयान्ति वैष्णवं लोकं दत्त्वा पादं यमोपरि ।
प्राणत्यागात्परं लोकं वैष्णवं नात्र संशयः ॥
भित्त्वाऽथ भास्करं यान्ति नाऽत्र कार्या विचारणा ॥ ११६ ॥
एतत्ते सर्वमाख्यातं चक्रतीर्थफलं नृप ।
यच्छ्रुत्वा मानवो भक्त्या सर्वपापैः प्रमुच्यते ॥ ११७ ॥

इति श्रीस्कान्दमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे जलशाय्यादितीर्थमाहात्म्यवर्णनं नाम
नवतितमोऽध्यायः ॥ ९० ॥

---

## एकनवतितमोऽध्यायः

### चण्डादित्यतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल तीर्थं परमपावनम् ।
चण्डादित्यं नृपश्रेष्ठ स्थापितं चण्डमुण्डयोः ॥ १ ॥
आस्तां पुरा महादैत्यौ चण्डमुण्डौ सुदारुणौ ।
नर्मदातीरमाश्रित्य चेरतुर्विपुलं तपः ॥ २ ॥
ध्यायन्तौ भास्करं देवं तमोनाशं जगत्त्रये । तुष्टस्तत्तपसा देवः सहस्रांशुरुवाच ह

 

साधुसाध्विति तौ पार्थ नर्मदायाः शुभे तटे । वरं प्रार्थयतौ वीरौ यथेष्टं चेतसेप्सितम्
चण्डमुण्डावूचतुः
अजेयौ सर्वदेवानां भूयास्वावां समाहितौ । सर्वरोगैः परित्यक्तौ सर्वकालं दिवाकर
एवमस्त्विति तौ प्राह भास्करो वारितस्करः ।
इत्युक्त्वान्तर्दधे भानुर्दैत्याभ्यां तत्र भास्करः ॥ ६ ॥
स्थापितः परया भक्त्या तं गच्छेदात्मसिद्धये ।
गीर्वाणांश्च मनुष्यांश्च पितॄंस्तत्राऽपि तर्पयेत् ॥ ७ ॥
स वसेद्भास्करे लोके विरञ्चिदिवसं नृप । घृतेन बोधयेद्दीपं षष्ठ्यां स च नरेश्वर
मुच्यते सर्वपापैस्तु प्रतियाति पुरं रवेः ॥ ८ ॥
उत्पत्तिं चण्डभानोर्यः शृणोति भरतर्षभ । विजयी स सदा नूनमाधिव्याधिविवर्जितः
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे चण्डादित्यतीर्थमाहात्म्यवर्णनं नामैकनवतितमोऽध्यायः ॥९१॥

---

# द्विनवतितमोऽध्यायः

## यमहास्यतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच
ततो गच्छेत्तु राजेन्द्र यमहास्यमनुत्तमम् । सर्वपापहरं तीर्थं नर्मदातटमाश्रितम् ॥
युधिष्ठिर उवाच
यमहास्यं कथं जातं पृथिव्यां द्विजपुङ्गव ॥ एतत्सर्वं समाख्याहि परं कौतूहलं हि मे
श्रीमार्कण्डेय उवाच
साधुसाधु महाप्राज्ञ पृष्टोऽहं नृपनन्दन । स्नानार्थं नर्मदां पुण्यामागतस्ते पिता पुरा
रजकेन यथा धौतं वस्त्रं भवति निर्मलम् । तथाऽसौ निर्मलो जातो धर्मराजो युधिष्ठिर

स पश्यन्निर्मलं देहं हसन्नोवाच विस्मितः ॥ ५ ॥

यम उवाच

मत्पुरकथमायान्तिमनुजा पापकृ हिता । स्नानेनैकेनरेवाया प्राप्यनेवैष्णवम्पदम्
समर्था ये न पश्यन्ति रेवा पुण्यजलां शुभाम् ।
यान्त्यन्धेस्ते समा ज्ञेया मृते पशुभिरेव वा ॥ ७ ॥
समर्था ये न पश्यन्ति रेवां पुण्यजलां नदीम् ।
एतस्मात्कारणाद्राजन्हसितो लोकशासन ॥ ८ ॥
स्थापयित्वायमस्तत्रदेवस्वर्गंजगाम ह । यमहासेश्वरे राजञ्जितक्रोधोजितेन्द्रिय
विशेषाश्चाऽऽश्विनेमासि कृष्णपक्षे चतुर्दशीम् ।
उपोष्य परया भक्त्या सर्वपापैः प्रमुच्यते ॥ १० ॥
रात्रौ जागरणंकुर्याद्दीपं देवस्य बोधयेत् । मुनेनचैवराजेन्द्र शृणुतत्राऽस्तियत्फलम्
मुच्यते पातकैः सर्वैरगम्यागमनोद्भवैः । अभक्ष्यभक्षणोद्भूतैरपेयापेयजैरपि ॥ १२॥
अवाद्यवाहितैर्यत्स्यादद्दोह्यदोहनैर्यथा । स्नानमात्रेणतत्सर्वंयातिपापान्यनेकधा
यमलोकं न वीक्षेत मनुजः स कदाचन । पितृणां परमं गुह्यमिदं भूमौ नरेश्वर ॥
दद्तामक्षयं सर्वं यमहास्ये न संशय । अमावास्याञ्जितक्रोधोयस्तुपूजयतेद्विजान्
हिरण्यभूमिदानेन तिलदानेन भूयसा । कृष्णाजिनप्रदानेन तिलधेनुप्रदानतः ॥
विधानोक्त द्विजाग्र्याय ये प्रदास्यन्ति भक्तितः ।
हयं वा कुञ्जरं वाऽथ धूम्रौ सीरसुतौ ॥ १७ ॥
कन्यां वसुमतीं गां वा महिषीं वा पयस्विनीम् ।
ददते ये नृपश्रेष्ठ नोपसर्पन्ति ते यमम् ॥ १८ ॥
यमोऽपिभवतिप्रीत प्रतिजन्मयुधिष्ठिर । यमस्यवाहोमहिषो महिष्यस्तस्यमातरः
तासादानप्रभावेणयम प्रीतोभवेद्ध्रुवम् । नाऽसौयममवाप्नोतियदिपापैः समावृत
एतस्मात्कारणाद्दत्तमहिषीदानमुत्तमम् । तस्याःशृङ्गे जल्कायें धूम्रवस्त्रानुवेष्टिता
आयसस्य खुरा कार्यास्ताम्रपृष्ठा सुभूषिताः ।

लवणाचलं पूर्वस्यामाग्नेय्यां गुडपर्वतम् ॥ २२
कार्पासं याम्यभागं तु नवनीतं तु नैर्ऋते ।
पश्चिमे सप्तधान्यानि वायव्ये तन्दुलाः स्मृताः ॥ २३ ॥

सौम्ये तु काञ्चनं दद्यादीशाने घृतमेव च । प्रददौ यमराजो मे प्रीयतामित्युदीरयन्.
इत्युच्चार्य द्विजस्याग्रे यमलोकं महाभयम् । असिपत्रवनं घोरं यमचुल्लीन्सुदारुणा
रौद्रावैतरणी चैव कुम्भीपाको भयावहः । कालसूत्रो महाभीमस्तथायमलपर्वतौ

क्रकचं तैलयन्त्रं च श्वानो गृध्राः सुदारुणाः ।
निरुच्छ्वासा महानादा भैरवो रौरवस्तथा ॥ २७ ॥
एते घोरा याम्यलोके श्रूयन्ते द्विजसत्तम ॥
त्वत्प्रसादेन ते सौम्यास्तीर्थस्याऽस्य प्रभावतः ॥ २८ ॥
दानस्याऽस्य प्रभावेण यमराजप्रसादतः ।
नरकेऽहं न यास्यामि द्विज! जन्मनि जन्मनि ॥ २६ ॥
यमहास्यस्य चाख्यानमिदं शृण्वन्ति ये नराः ।
तेऽपि पापविनिर्मुक्ता न पश्यन्ति यमालयम् ॥ ३० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे यमहास्यतीर्थमाहात्म्यवर्णनंनाम द्विनवतितमोऽध्यायः ॥ ९२ ॥

---

# त्रिनवतितमोऽध्यायः

## कल्होडीतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तनो गच्छेत्तु राजेन्द्र कल्होडीतीर्थमुत्तमम् ।
विख्यातं भारते लोके गङ्गाया पापनाशनम् ॥ १ ॥
दुर्लभं मनुजै पार्थ रेवातटसमाश्रितम् । प्रार्थिता पापनाशाय ऊषरं पुष्करं तथा
तत्तु तीर्थमिदं पुण्यमित्येवं शूलिनोवच । जाह्नवी पशुरूपेण तत्र रुद्रार्थमागता
अतस्तद्विश्रुतंलोके कल्होडीतीर्थमुत्तमम् । निराहारस्थितस्तत्र पूर्णिमायायुधिष्ठिर
रजस्तमस्तथा क्रोध दम्भ मात्सर्यमेव च ।
यत्नात्त्यजति य पार्थ तेनाप्त मोक्षजं फलम् ॥ ५ ॥
पयसास्नापयेद्देवं त्रिमधुयुक्तं च घृतं तथा । पयोगोसम्भव सद्य स्वर्गस्थाजीवपुत्रियां
कृष्णा तत्ताम्रे पात्रे क्षौद्रेण चैव योजिते ।
ॐ नम श्रीशिवायेति स्नानं देवस्य कारयेत् ॥ ७ ॥
स याति त्रिदशस्थानं नाकस्त्रीभि समावृत ।
यस्तत्र विधिवत्स्नात्वा दानं प्रेतेषु यच्छति ॥ ८ ॥
शुक्ला गा दापयेत्तत्र प्रीयन्ता मे पितामहा । ब्राह्मणेश्रोत्रियसम्पन्नेस्वदारनिरतेसदा
सवत्सा घण्टासंयुक्ता हिरण्योपरि संस्थिताम् ।
सत्त्वयुक्तो ददद्राजञ्छाम्भव लोकमाप्नुयात् ॥ १० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्या संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे कल्होडीतीर्थमाहात्म्यवर्णनं नाम त्रिनवतितमोऽध्याय ॥९३॥

———

# चतुर्नवतितमोऽध्यायः

## नन्दिकेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तस्यैवानन्तरंराजन्नन्दितीर्थं व्रजेच्छुभम् । सर्वपापहरंपुंसां नन्दिनानिर्मितम्पुरा
पापौघहतजन्तूनां मोक्षदं नर्मदातटे । अहोरात्रोपितो भूत्वा नन्दिनाथे युधिष्ठिर
पञ्चोपचारपूजायामर्चयेन्नन्दिकेश्वरम् । रत्नानि चैव विप्रेभ्यो यो दद्याद्धर्मनन्दन!

स याति परमं स्थानं यत्र वासः पिनाकिनः ।
सर्वसौख्यसमायुक्तोऽप्सरोभिः सह मोदते ॥ ४ ॥

इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे
रेवाखण्डे नन्दिकेश्वरतीर्थमाहात्म्यवर्णनं नाम
चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

---

# पञ्चनवतितमोऽध्यायः

## नारायणीतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र! बदर्याश्रममुत्तमम् । सर्वतीर्थवरं पुण्यं कथितं शम्भुना पुरा

यश्चैव भारतस्यार्थे तत्र सिद्धः किरीटभृत् ।
भ्राता ते फाल्गुनो नाम विद्धयेनं नरदैवतम् ॥ २ ॥

नरनारायणौ द्वौ तावागतौ नर्मदातटे । ध्यानंतस्यैव यो राजन्भक्तिमान्वैजनार्दने
समम्पश्यति सर्वेषु स्थावरेषु चरेषु च । ब्राह्मणं श्वपचं चैव तत्र प्रीतो जनार्द्दनः

पैशाचस्य पदस्य कौन्तेय मयि भाऽऽमनि नान्तरम् ।
नरनारायणाभ्यां हि कृतं बदरिकाश्रमम् ॥ ५ ॥
स्थापितं शङ्करस्तत्र लोकानुग्रहकारणात् ।
त्रिमूर्तिस्थापिते लिङ्गे स्वर्गमार्गानुमुक्तिदम् ॥ ६ ॥
तत्र गत्वा शुचिर्भूत्वा एकरात्रोपवासकृत् ।
रजस्तमस्तथा त्यक्त्वा सात्त्विकं भावमाश्रयेत् ॥ ७ ॥

रात्रौ जागरणं कृत्वामधुमास्याश्विने । मयचाश्च चतुर्दश्यामुमीपसीकरातं

आश्विनस्य विशेषेण कथितं तव पाण्डव ।
स्नापयेत्परया भक्त्या क्षीरेण मधुना सह ॥ ६ ॥

दध्नाशाकरया युक्तं घृतेन समन्दनम् । पञ्चामृतमिदंपुण्यं स्नापयेदुरमभाव

स्नाप्यमानं शिवं भक्त्या वीक्षते यो विमत्सरः ।
तस्य पापं शिवोपास्ते शक्रलोके न संशयः ॥ ११ ॥
शाठ्येनाऽपि नमस्कारः प्रयुक्तः शूलपाणिने ।
संसारमूलबन्धानामुद्वेष्टनकरो हि यः ॥ १२ ॥

तैनार्थीत धूत तन तिनसवमनुष्ठितम् । येनोंनमःशिवायेतिमन्त्राभ्यासःस्थिरीकृ

यः पुनः स्नापयेद् भक्त्या एकभक्तो जितेन्द्रियः ।
तस्याऽपि यत्फलं पार्थ वक्ष्ये तत्क्लेशतस्तव ॥ १४ ॥
पाडितो वृद्धभावेन तव भक्त्या वदाम्यहम् ।
ते यान्ति परमं स्थानं भित्त्वा भास्करमण्डलम् ॥ १५ ॥
संसारे सर्वसौख्यानां निलयास्ते भवन्ति च ।
आश्चर्यं ज्ञातिवर्गाणां धर्माणां निलयास्तु ते ॥ १६ ॥

सन्पन्नाःसर्वकामैस्तेपृथिव्यांपृथिवीपते । श्राद्धतत्रैव यः कुर्यात्तमदोदकमिश्रित
योगैश्च ब्राह्मणैं राजन्कुलीनैर्वेदपारगैः । सुरूपैश्च सुशीलैश्च स्वदारनिरतैः शुभैः
आयदेशप्रसूतैश्च रूपैश्चैव सुरूपिभिः । कारयेत्पिण्डदानं वै भास्करेकुतपस्थि

पितॄणांपरमंलोकंयदीच्छेद्धर्मनन्दन । वर्जयेत्तान्प्रयत्नेन काणान्दुष्टांश्चदाम्भिकान्
पुरुषान्क्रूरषण्ढांश्च ब्राह्मणानां च निन्दकान् ।
एतांश्च वर्जयेद्विप्रान्यदीच्छेच्छ्रेय आत्मनः ॥ २१ ॥
तस्मात्सर्वप्रयत्नेनयोग्यंविप्रंसमाश्रयेत् । नरकान्मोचयेत्प्रेतान्कुम्भीपाकपुरोगमान्
मोक्षो भवति सर्वेषां पितॄणां नृपनन्दन ॥
विप्रेभ्यः काञ्चनं दद्यात्प्रीयतां मे पितामहः ॥ २३ ॥
अन्नं च दापयेत्तत्रभक्त्या वस्त्रं च भारत । गां वृषंमेदिनीं दद्याच्छत्रंशस्तंनृपोत्तम!
स पुमान्स्वर्गमाप्नोति इत्येवं शङ्करोऽब्रवीत् ।
प्राणत्यागं तु यः कुर्याच्छिखिना सलिलेन वा ॥ २५ ॥
अनाशकेन वा भूयः स गच्छेच्छिवमन्दिरम् ।
नरनारायणीतीरे देवद्रोण्यां च यो नृप !॥ २६ ॥
स वसेदीश्वरस्याग्रे यावदिन्द्राश्चतुर्दश ।
पुनः स्वर्गाच्च्युतः सोऽपि राजा भवति वीर्य्यवान् ॥ २७ ॥
सर्व्वैश्वर्यगुणैर्युक्तः प्रजापालनतत्परः । ततः स्मरति तत्तीर्थं पुनरेवाऽऽगमिष्यति
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे नारायणीतीर्थमाहात्म्यवर्णनं नाम
पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

ऐकात्म्य पश्य कौन्तेय' मयि चाऽऽत्मनि नान्तरम् ।
नरनारायणाख्या हि कृत बदरिकाश्रमम् ॥ ५ ॥
स्थापित शङ्करस्तत्र लोकानुग्रहकारणात् ।
त्रिमूर्त्तिस्थापित लिङ्ग स्वर्गमार्गानुमुक्तिदम् ॥ ६ ॥
तत्र गत्वा शुचिर्भूत्वा शकेरात्रोपवासरत्र् ।
रजस्तमस्तथा त्यक्त्वा सात्त्विक भावमाश्रयेत् ॥ ७ ॥

रात्रौ जागरण कृत्वामधुमासाष्टमीदिने । अथवाच चतुर्द्दश्यामुभौपक्षौचकारये

आश्विनस्य विशेषेण कथित तव पाण्डव ।
स्नापयेत्परया भक्त्या क्षीरेण मधुना सह ॥ ९ ॥

दध्नाशर्करया युक्त घृतेन समलङ्कृतम् । पञ्चामृतमिदपुण्य स्नापयेद्वृषभध्वज

स्नाप्यमान शिव भक्त्या वीक्षते यो विमत्सर ।
तस्य पाप विशोपान्ते शक्रलोके न सशय ॥ ११ ॥
शाठ्येनाऽपि नमस्कार प्रयुक्त शूलपाणिने ।
ससारमूलबद्धानामुद्वेष्टनकरो हि य ॥ १२ ॥

तेनाधीत श्रुत तेन तेनसर्वमनुष्ठितम् । येनोंनम शिवायेतिमन्त्राभ्यास स्थिरीकृ

य पुन स्नापयेद्व भक्त्या पकभक्तो जितेन्द्रिय ।
तस्याऽपि यत्फल पार्थ वक्ष्ये तल्लेशतस्तव ॥ १४ ॥
पीडितो वृद्धभावेन तव भक्त्या वदाम्यहम् ।
ते यान्ति परमं स्थान भित्त्वा भास्करमण्डलम् ॥ १५ ॥
ससारे सर्वसौख्याना निलयास्ते भवन्ति च ।
आश्रयं ज्ञातिवर्गाणा धर्माणा निलयास्तु ते ॥ १६ ॥

सम्पन्ना सर्वकामैस्तेपृथिव्यापृथिवीपते । श्राद्धतत्रैव य कुर्यात्नर्मदोदकमिश्रित

योग्यैश्च ब्राह्मणै राजन्कुलीनैर्वेदपारगै । सुरूपैश्च सुशीलैश्च स्वदारनिरतै शुभै

आर्यदेशप्रसूतैश्च स्वरूपैश्चैव सुरूपिभि । कारयेत्पिण्डदान वै भास्करेकुलपस्थिर

पितॄणांपरमंलोकंयदीच्छेद्धर्मनन्दन । वर्जयेत्तान्प्रयत्नेन काणान्दुष्टांश्चदाम्भिकान्
पुरुषान्क्रूरषण्ढांश्च ब्राह्मणानां च निन्दकान् ।
एतांश्च वर्जयेद्विप्रान्यदीच्छेच्छ्रेय आत्मनः ॥ २१ ॥
तस्मात्सर्वप्रयत्नेनयोग्यंविप्रंसमाश्रयेत् । नरकान्मोचयेत्प्रेतान्कुम्भीपाकपुरोगमान्
मोक्षो भवति सर्वेषां पितॄणां नृपनन्दन !।
विप्रेभ्यः काञ्चनं दद्यात्प्रीयतां मे पितामहः ॥ २३ ॥
अन्नं च दापयेत्तत्रभक्त्या वस्त्रं च भारत । गां वृषंमेदिनीं दद्याच्छत्रंशस्तंनृपोत्तम!
स पुमान्स्वर्गमाप्नोति इत्येवं शङ्करोऽब्रवीत् ।
प्राणत्यागं तु यः कुर्याच्छिखिना सलिलेन वा ॥ २५ ॥
अनाशकेन वा भूयः स गच्छेच्छिवमन्दिरम् ।
नरनारायणीतीरे देवद्रोण्यां च यो नृप !॥ २६ ॥
स वसेदीश्वरस्याग्रे यावदिन्द्राश्चतुर्दश ।
पुनः स्वर्गाच्च्युतः सोऽपि राजा भवति वीर्य्यवान् ॥ २७ ॥
सर्व्वैश्वर्यगुणैर्युक्तः प्रजापालनतत्परः । ततः स्मरति तत्तीर्थं पुनरेवाऽऽगमिष्यति

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे नारायणीतीर्थमाहात्म्यवर्णनं नाम
पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

# सप्तनवतितमोऽध्यायः

## व्यासतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेन्महीपालव्यासतीर्थमनुत्तमम् । दुर्ल्लभंमनुजैःपुण्यमन्तरिक्षेव्यवस्थितम्

युधिष्ठिर उवाच

कस्माद्वै व्यासतीर्थं तदन्तरिक्षे व्यवस्थितम् ।
एतदाख्याहि संक्षेपात्त्यज ग्रन्थस्य विस्तरम् ॥ २ ॥

श्रीमार्कण्डेय उवाच

साधुसाधुमहाबाहो धर्मवान्साधुवत्सल । स्वकर्मनिरतः पार्थतीर्थयात्राकृतादरः

दुर्ल्लभं सर्वजन्तूनां व्यासतीर्थं नरेश्वर । पीडितोवृद्धभावेन अकल्पोऽहंनृपात्मज

विसञ्ज्ञो गतवित्तस्तु सञ्जातः स्मृतिवर्जितः ।
गुह्याद् गुह्यतरं तीर्थं नाऽऽख्यातं कस्यचिन्मया ॥ ५ ॥

कलिस्तत्रैव राजेन्द्र न विशेद् व्याससंश्रयात् ।
अन्तरिक्षे तु सञ्जातं रेवायाश्चेष्टितेन तु ॥ ६ ॥

विरिञ्चिर्नैव शक्नोति रेवाया गुणकीर्त्तनम् ।
कथं ज्ञास्याम्यहं तात रेवामाहात्म्यमुत्तमम् ॥ ७ ॥

व्यासतीर्थंविशेषेण लवमात्रं ब्रवीम्यतः । प्रत्यक्षः प्रत्ययो यत्र दृश्यतेऽद्यकलौयुगे

विहङ्गोगच्छतेनैवभिरवाशूलंसुदारुणम् । तस्योत्पत्तिसमासेनकथयामिनृपात्मज

आसीत्पूर्वंमहीपालमुनिर्मान्यःपराशरः । तेनात्युग्रंतपश्चीर्णं गङ्गाम्भसिमहाफलम्

प्राणायामेन सन्तस्थौप्रविष्टोजाह्नवीजले । पूर्णेद्वादशमेवर्षे निष्क्रान्तोजलमध्यतः

भिक्षार्थी सञ्चरेद् ग्रामं नावा यत्रैव तिष्ठति ।
तत्र तेन परा दृष्टा बाला चैव मनोहरा ॥ १२ ॥

ता दृष्ट्वा स च कामार्त उवाच मधुरं तदा।
मां नयस्व पर पारं काऽसि त्व मृगलोचने ॥ १३ ॥
नायामन्द्रे नदीतीरे मम चित्तप्रमाथिनि। एवमुक्ता तु सा तेन प्रणम्यऽर्षिपुङ्गवा
कथयामास धाऽऽत्मानं दृष्ट्वा च काममोहितम्।
कैवर्तानां गृहे दासी कन्याऽहं छिन्नसत्तम ॥ १५ ॥
नावा नरक्षणार्थाय आदिष्टा स्वामिना विभो।
मया विप्रपित्र कृतमदोष क्षन्तुमर्हसि ॥ १६ ॥
एवमुक्तस्तथा सोऽथ क्षणं ध्यात्वाऽब्रवीद्विजम् ॥ १७ ॥
पराशर उवाच
भद्रहामत्रन्याद्वैनपज्ञातामिनन्मयम्। कैवर्तपुत्रिका न त्वराजकन्याऽसिसुन्दरि
कन्योवाच
क पिता कथ्यता ब्रह्मन्कस्या वा हृदरोद्भवा।
कस्मिन्वंशे प्रसूताऽहं कैवर्ततनया कथम् ॥ १९ ॥
पराशर उवाच
कथयामि समस्तं कथया पूर्वमशेषत। वसुनामेतिभूपाल सोमवंशविभूषण ॥
जम्बूद्वीपाधिपो भद्र शत्रूणां भयवर्धन। शतानि सप्तभार्याणां पुत्राणाचदशैवतु
धर्मेण पाल्येल्लोकानीशवत्पूज्यते सदा।
म्लेच्छानामन्यावियेयाश्च क्षीरद्वीपनिवासिन ॥ २२ ॥
तैषामुत्पादनाथाययथावृत्यसागरम्। सयुक्त पुत्रभृत्यैर्धर्षयिष्यमिहति स्थिते
समरते समारब्धम्लेच्छैश्चवसुनासह। जिताम्लेच्छा समस्तास्ते वसुनामृगलोचने
वरदास्ते कृतास्तेन सपुत्रबलवाहना। प्रजाना तस्य साराज्ञा तयमातामृगेक्षणे
प्रवासस्थे महीपाले सञ्जाता सा रजस्वला।
नारीणां तु सदाकाले मन्मथो ह्यधिको भवेत् ॥ २५ ॥
विशेषेण ऋतौ काले भिद्यन्ते कामसायकैः।

मन्मथेन तु सन्तप्ताऽचिन्तयत्सा शुभेक्षणा ॥ २७ ॥
दूतं वै प्रेषयामास वसुराज्ञः समीपतः । आहूतः सत्वरं दूत! गच्छत्वं नृपसन्निधौ
दूत उवाच
परतीरं गतो देवि वसुराजाऽरिशासनः । तत्र गन्तुमशक्येत जलयानैर्विना शुभे
तानि यानानि सर्वाणि गृहीतानि परे तटे ।
दूतवाक्येन सा राज्ञी विषण्णा कामपीडिता ॥ ३० ॥
तत्सखी तामुवाचाऽथ कस्मात्त्वं परितप्यसे ।
स्वलेखः प्रेष्यतां देवि ! शुकहस्ते यथार्थतः ॥ ३१ ॥
समुद्रं लङ्घयित्वा तु शकुन्ता यान्ति सुन्दरि !।
सखिवाक्येन सा राज्ञी स्वस्था जाता नराधिप !॥ ३२ ॥
व्याहृतोलेखकस्तत्रलिखलेखं ममाज्ञया । त्वद्धीनासत्यभामाद्यवसोराजन्नजीवति
ऋतुकालोऽद्यसञ्जातो लिखलेखं तु लेखक !। लिखितेभूर्जपत्रे तु लेखे वै लेखकेनतु
शुकः पञ्जरमध्यस्थ आनीतोऽद्यैव सन्निधौ ॥ ३५ ॥
सत्यभामोवाच
नीत्वालेखं गच्छशीघ्रंवसुराज्ञःसमीपतः । शकुनिःप्रणतोभूत्वागृहीत्वालेखमुत्तमम्
उत्पत्य सहसाराजञ्जगामाऽऽकाशमण्डलम् । ततःपक्षीगतःशीघ्रंवसुराजसमीपतः
क्षिप्ते लेखेशुकेनैव सत्यभामाविसर्जिते । वसुराज्ञा ततो लेखोगृह्यहस्तेऽवधारितः
लेखार्थं चिन्तयित्वातुगृह्यवीर्यं नरेश्वरः । अमोघंपुटिकांकृत्वाप्रतिलेखेनमिश्रितम्
शुकस्य सोऽर्पयामास गच्छराज्ञीसमीपतः । प्रणम्यवसुराजानं वीजंगृह्योत्पपातह
समुद्रोपरि सम्प्राप्तः शुकः श्येनेन वीक्षितः ।
सामिषं तं शुकं ज्ञात्वा श्येनस्तमभ्यधावत ॥ ४१ ॥
हतश्चञ्चुप्रहारेण शुकः श्येनेन भारत! । मूर्च्छया तस्यतद्वीजंपतितंसागराम्भसि
मत्स्येन गिलितंतच्च वीजंवसुमहीपतेः । कन्यामत्स्योदरेजातातेन वीजेन सुन्दरि
प्राप्तोऽसौ लुब्धकैर्मत्स्य आनीतः स्वगृहं ततः ।

नाम्ना योजनगन्धेति द्वितीयं सत्यवत्यपि ॥ ५६ ॥
शन्तनुर्नाम राजा यः स ते भर्त्ता भविष्यति ।
प्रथमा महिषी तस्य सोमवंशविभूषणा ॥ ६० ॥
गच्छत्वंस्वाश्रयंशुभ्रे पूर्वरूपेणसंस्थिता । माविषादंकुरुष्वाऽत्रदूष्णं ज्ञानस्यमेवलम्
इत्युक्त्वा प्रययौ विप्रः सा बाला पुत्रमाश्रिता ।
नत्वोचे मातरं भक्त्या साष्टाङ्गं विनयानतः ॥ ६२ ॥
क्षम्यतां मातरुक्तं मे प्रसादः क्रियतामपि । ईश्वराराधने यत्नंकरिष्याम्यहमम्बिके
ततः सा पुत्रवाक्येन विषण्णा वाक्यमब्रवीत् ॥ ६४ ॥

योजनगन्धोवाच

मा त्यक्त्वा गच्छ वत्साद्य मातरं मामनागसम् ।
त्वद्वियोगेन मे पुत्र! पञ्चत्वं भाव्यसंशयम् ॥ ६५ ॥
नास्ति पुत्रसमः स्नेहो नास्ति मातृसमं कुलम् ।
नाऽस्ति सत्यपरो धर्मो नानृतात्पातकं परम् ॥ ६६ ॥
बालभावे मयाजात आधारःकिलजायसे । न मे भर्त्ता नमेपुत्रःपश्यकर्मविडम्बनम्

व्यास उवाच

मा विषादं कुरुष्वान्तः सत्यमेतन्मयेरितम् ।
आपत्कालेऽस्मि ते देवि ! स्मर्त्तव्यः कार्यसिद्धये ॥ ६८ ॥
आपद्भ्यस्तारयिष्यामि श्रूयतां मे दुरुत्तरम् ।
इत्युक्त्वा प्रययौ व्यासः कन्या साऽपि गता गृहम् ॥ ६६ ॥
पराशरसुतस्तत्र विषण्णो वनमध्यतः । त्रेतायुगावसाने तु द्वापरादौ नरेश्वर ॥
व्यासार्थं चिन्तयामासुर्देवाःशक्रपुरोगमाः । आख्यातोनारदेनैवपुत्रःपराशरस्यसः
कैवर्तपुत्रिकाजातो जाह्नुजह्नुसुतातटे । ततोनारदवाक्येन आगताः सुरसत्तमाः
रामः पितामहः शक्रो मुनिसङ्घैः समावृताः ।

पुत्रो जातो ह्यपुत्रस्य पराशरसुतस्य च । देवैर्वर्द्धापितः सर्वैर्विरिञ्चेन्द्रपुरोगमैः

पुत्रजन्मन्यथाजग्मुर्वशिष्ठाद्या मुनीश्वराः । तीर्थयात्राप्रसङ्गेन पराशरपुरोगमाः ॥

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोङ्गिराः ।

यमापस्तम्बसम्वर्त्ता कात्यायनबृहस्पती ॥ ९१ ॥

एवमादिसहस्राणिलक्षकोटिशतानिच । सशिष्याश्चमहाभागानर्मदातटमाश्रिताः

व्यासाश्रमे शुभे रम्ये सन्तुष्टा आययुर्नृप ।

दृष्ट्वा तान्सोऽपि विप्रेन्द्रानभ्युत्थानकृतोद्यमः ॥ ९३ ॥

पितुःपूर्वंप्रणम्याऽदौसर्वेषांचयथाविधि । आसनानिददौभक्त्यापाद्यमर्घ्यंयथेप्सित

कृताञ्जलिपुटोभूत्वावाक्यमेतदुवाचह । उद्धतोऽहं नसन्देहोयुष्मत्सम्भाषणार्चनात्

आरण्यानि च शाकानि फलान्यारण्यजानि च ।

तानि दास्यामि युष्माकं सर्वेषां प्रीतिपूर्वकम् ॥ ९६ ॥

न्यमन्त्रयत तान्सर्वान्प्रत्येकं प्रणिपत्य च । ततस्ते प्रणतं दृष्ट्वा कृष्णद्वैपायनंमुनिम्

वर्द्धयित्वा जयाशीर्भिरवलोक्य परस्परम् । पराशरःसमस्तैश्च वीक्षितोमुनिपुङ्गवैः

उत्तरं दीयतां तात कृष्णद्वैपायनस्य च । एवमुक्तस्तु तैः सर्वैर्भगवान्स पराशरः ॥

प्रोवाच स्वात्मजंव्यासमृषीणां यच्चिकीर्षितम् ॥ ९९ ॥

श्रीपराशर उवाच

नेच्छन्ति दक्षिणे कूले व्रतभङ्गभयादथ । भोजनं भोक्तुकामास्ते श्राद्धेचैवविशेषतः

व्यास उवाच

करोमिभगतामुक्तमत्रैवस्थीयतां क्षणम् । यावत्प्रसाद्यसरितं करोमिविधिमुत्तमम्

एवमुक्त्वा शुचिर्भूत्वा नर्मदातटमास्थितः ।

स्तोत्रं जगाद सहसा तन्निबोध नरेश्वर !॥ १०२ ॥

जय भगवति! देवि! नमो वरदे! जय पापविनाशिनि! बहुफलदे !।

जय शुम्भनिशुम्भकपालधरे! प्रणमामि तु देवनरार्त्तिहरे !॥ १०३ ॥

जय चन्द्रदिवाकरनेत्रधरे! जय पावकभूषितवक्त्रवरे !।

हाहाकारमुखाः सर्वे तत्राऽऽजग्मुः सहस्रशः ॥ ११८ ॥
व्यासमुत्थापयामासुर्वेदव्यसनतत्परम् ।
ब्राह्मणार्थे च संक्लिष्टो नात्महेतोः सरिद्वरे ॥ ११९ ॥
गवार्थे ब्राह्मणार्थे च सद्यः प्राणान्परित्यजेत् ।
एवं सा नर्मदा प्रोक्ता ब्रह्माद्यैः सुरसत्तमैः ॥ १२० ॥
सुशीतलैस्तं बहुभिश्चवातै रेवाऽभिषिञ्चत्स्वजलेन भीता ।
सञ्चेतनः सत्यवतीसुतोऽपि प्रणम्य देवान्सरितं जगाद ॥ १२१ ॥

व्यास उवाच

तीर्थैः समस्तैः किल सेवनाय फलं प्रदिष्टं मम मन्दभाग्यात् ।
यद्देवि पुण्या विफला ममाशा आरण्यपुष्पाणि यथा जनानाम् ॥ १२२ ॥

नर्मदोवाच

यतो यतो मां हि महानुभाव! निनीषते चित्तमिलातलेऽत्र ।
विन्ध्येन सार्द्धं तव मार्गमद्य यास्याम्यहं दण्डधरस्य पृष्ठे ॥ १२३ ॥

एवमुक्तो महातेजाः व्यासः सत्यवतीसुतः ।
दक्षिणे चालयामास स्वाश्रमस्य सरिद्वराम् ॥ १२४ ॥
दण्डहस्तो महातेजा हुङ्कारमकरोन्मुनिः ।
व्यासहुङ्कारभीता सा चलिता रुद्रनन्दिनी ॥ १२५ ॥

दण्डेन दर्शयन्मार्गं देवीतत्र प्रवर्त्तिता । व्यासमार्गं गता देवी दृष्टाशक्रपुरोगमैः
पुष्पवृष्टि ततोदेवा व्यमुञ्चन्तसहकिङ्करैः । प्रोत्फुल्लनयनाजाताःपराशरमुखाद्विजाः
किं कुर्मो ब्रूहि मे पुत्र ! कर्मणा ते स्म रक्षिताः ॥ १२७ ॥

व्यास उवाच

तपश्च विपुलं कृत्वा दानंदत्त्वा महाफलम् । एतदेवनरैः कार्यंसाधूनांयत्सुखावहम्
यदि तुष्टा महाभागअनुग्राह्योह्यहंयदि । तस्मान्ममाश्रमेसर्वैःस्थीयतांनाऽत्रसंशयः
आतिथ्यं शाकपर्णेन रेवामृतविमिश्रितम् । प्रतिपन्नः समस्तैर्वः पराशरमुखैर्मम

स्यातव्यं स्वाश्रम सर्वैं स्वाया उत्तर तटे ॥ १३० ॥

मार्कण्डेय उवाच

स्नानतर्पणनित्यानि कृतानि द्विजसत्तमैः ।
व्यासकुण्डे तथा सन्ध्या होम सर्वं प्रकल्पित ॥ १३१ ॥
श्रीपर्णैर्बिल्वपत्रैश्च जुहुवानाजैर्दसम् । गौतमो भृगुमाण्डव्यौ नारदो लोमशस्तथा
पराशरस्तथा शङ्ख कौशिकश्च्यवनो मुनि ।
पिप्पलादो वसिष्ठश्च नाचिकेतो महातपा ॥ १३३ ॥
विश्वामित्रोऽप्यगस्त्यश्च उद्दालकयमौ तथा ।
शाण्डिल्यो जैमिनि कण्वो याज्ञवल्क्योशनोऽङ्गिरा ॥ १३४ ॥
शातातपो दधीचिश्च कपिलो गालवस्तथा । जैगीषव्यस्तथा दक्षो भरतो मुद्गलस्तथा
कात्यायनो महातेजा सम्वर्त्त शक्तिरेव च ।
मातृकर्णी भरद्वाजो वाल्मिल्यारुणिस्तथा ॥ १३६ ॥
एवमादिसहस्राणि जुहुवानाजैर्दसम् । अग्नमाकरोत्क्षीणाध्यानयोगपरायणा
एकचित्ता द्विजा यत्र चतुर्होममिक्रिया तदा ।
तत समुत्थित लिङ्ग मोक्षद व्याधिनाशनम् ॥ १३८ ॥
अच्छेद्य परम दिव्यङ्दृष्ट्वा व्यासस्तुतोषु च । पुष्पवृष्टिदुर्देवा आशीर्वादा द्विजोत्तमा
साष्टाङ्ग प्रणतो व्यासो देवं दृष्ट्वा त्रिलोचनम् ।
ब्राह्मणान्पूजयामास शाकमूलफलैन च ॥ १४० ॥
पितृपूय द्विजा सर्वे मोनिना पाण्डुनन्दन ।
आशीर्वादास्तत पुण्यान्दत्त्वा विप्रा ययु पुन ॥ १४१ ॥
तदा प्रभृति तत्तीर्थं व्यासाख्य प्रोच्यते बुधै ॥ १४२ ॥

युधिष्ठिर उवाच

व्यासतीर्थस्य यत्पुण्य तत्सर्वं कथयस्व मे ।
स्नानदानविधान च यस्मिन्काले महाफलम् ॥ १४३ ॥

श्रीमार्कण्डेय उवाच

कथयामिसमस्तंतेभ्रातृभिःसहपाण्डव । कार्त्तिकस्यसितेपक्षेचतुर्दश्यांजितेन्द्रियः
उपोष्य यो नरो भक्त्या रात्रौ कुर्वीत जागरम् ।
स्नापयेदीश्वरं भक्त्या क्षौद्रक्षीरेण सर्पिषा ॥ १४५ ॥
दध्ना च खण्डयुक्तेन कुशतोयेन वै पुनः । श्रीखण्डेन सुगन्धेन गुण्ठयेत्परमेश्वरम्
ततः सुगन्धकुसुमैर्बिल्वपत्रैश्च पूजयेत् । मुचुकुन्देन कुन्देन कुशजातीप्रसूनकैः ॥
उन्मत्तमुनिपुष्पैश्च तथान्यैः कालसम्भवैः । अर्चयेत्परयाभक्त्या द्वीपेश्वरमनुत्तमम्
इक्षुगडुकदानेन तुष्यते परमेश्वरः । गडुकाष्टकदानेन पातकं यात्यहोर्जितम् ॥ १४८
मासार्जितं च नश्येत गडुकाष्टशतेन च । षाण्मासिकं सहस्रेण द्विगुणैरब्दिकंतथा
आजन्मजनितं पापमयुतेन प्रणश्यति । द्विगुणैर्नश्यतेव्याधिस्त्रिगुणैःस्याद्धनागमः
षड्गुणैर्जायते वाग्मी सिद्धस्तद्द्विगुणैस्तथा ।
रुद्रत्वं दशलक्षैश्च जायते नाऽत्र संशयः ॥ १५२ ॥
पौर्णमास्यां नृपश्रेष्ठ! स्नानं कुर्वीतभक्तितः । मन्त्रोक्तेन विधानेनसर्वपापक्षयङ्करम्
वारुणंच तथाग्नेयंब्राह्मयं चैवाक्षयङ्करम् । देवान्पितॄन्मनुष्यांश्चविधिवत्तर्पयेद्बुधः
ऋचा ऋग्वेदजं पुण्यं साम्ना सामफलं लभेत् ।
यजुर्वेदस्य यजुषा गायत्र्या सर्वमाप्नुयात् ॥ १५५ ॥
अक्षरं च जपेन्मन्त्रं सौरं वा शिवदैवतम् । अथवावैष्णवंमन्त्रंद्वादशाक्षरसञ्ज्ञितम्
पूजयेद् ब्राह्मणान्भक्त्या सर्वलक्षणलक्षितान् ।
स्वदारनिरतान्विप्रान्दम्भलोभविवर्जितान् ॥ १५७ ॥
भिन्नवृत्तिकरान्पापान्पतितांञ्छूद्रसेवनान् ।
शूद्रीग्रहणसंयुक्तान्वृषली यस्य मन्दिरे ॥ १५८ ॥
परोक्षवादिनो दुष्टान्गुरुनिन्दापरायणान् । वेदद्वेषणशीलांश्चहैतुकान्बकवृत्तिकान्
ईदृशान्वर्जयेच्छ्राद्धे दाने सर्वव्रतेषु च । गायत्रीसारमात्रोऽपिवरंविप्रःसुयन्त्रितः
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी । ईदृशान्पूजयेद्विप्रानन्नदानहिरण्यतः

न तेषां जायते शोको न हानिर्न च दुष्कृतम् । प्रथमंपूजयेत्तत्र लिङ्गं सिद्धेश्वरं ततः

यत्र सिद्धो महाभागा व्यासः सत्यवतीसुतः ।

अस्यैव पूजनात्सिद्धो धारासर्पो महामतिः ॥ १७८ ॥

तत्र तीर्थे तु यो राजन्प्राणत्यागं करोति च ।

सूर्यलोकमसौ भित्त्वा प्रयाति शिवसन्निधौ ॥ १७९ ॥

समाःसहस्राणि च सप्त वै जले दशैकमग्नौ पतने च षोडश ।

महाहवे षष्टिरशीति गोग्रहे ह्यनाशके भारत! चाक्षया गतिः ॥ १८० ॥

पिता पितामहश्चैव तथैवप्रपितामहः । वायुभूतं निरीक्षन्ते ह्यागच्छन्तंस्वगोत्रजम्

अस्मद्गोत्रेऽस्ति कः पुत्रो यो नो दद्यात्तिलोदकम् ।

कार्त्तिक्यां च विशेषेण वैशाख्यां वा तथैव च ॥ १८२ ॥

स्वर्गतिं च प्रयास्यामस्तत्र तीर्थोपसेवनात् ।

एतत्ते कथितं सर्वं द्वीपेश्वरमनुत्तमम् ॥ १८३ ॥

यः पठेत्परया भक्त्या शृणुयात्तद्गतो नृप !।

सोऽपि पापविनिर्मुक्तो मोदते शिवमन्दिरे ॥ १८४ ॥

ऊषरं सर्वतीर्थानां निर्मितं मुनिपुङ्गवैः । कामप्रदं नृपश्रेष्ठ! व्यासतीर्थं न संशयः ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे व्यासतीर्थमाहात्म्यवर्णनं नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥

---

# अष्टनवतितमोऽध्यायः

## प्रभासतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्रप्रभासेश्वरमुत्तमम् । विख्यातंत्रिपुलोकेषुस्वर्गसोपानमुत्तमम्

युधिष्ठिर उवाच

प्रभासं तात! मे ब्रूहि कथंजातंमहाफलम् । स्वर्गसोपानदं द्रश्यंसंक्षेपात्कथयाशुमे

श्रीमार्कण्डेय उवाच

दुर्भगा रविपत्नी च प्रभा नामेति विश्रुता ।
तया चाऽऽराधितः शम्भुरुग्रेण तपसा पुरा ॥ ३ ॥
वायुभक्षा स्थिता वर्षंवर्षंध्यानपरायणा । ततस्तुष्टोमहादेवःप्रभायाःपाण्डुनन्दन

ईश्वर उवाच

कस्मात्त्वंक्लिश्यसे बाले! कथ्यतां यद्विवक्षितम् ।
अहं हि भास्करोऽप्येको नानात्वं नैव विद्यते ॥ ५ ॥

प्रभोवाच

नान्यो दैवः स्त्रियः शम्भो! विना भर्त्रा कथञ्चिद्प्रभो !।
सगुणो निर्गुणो वाऽपि धनाढ्यो वाऽप्यकिञ्चनः ॥ ६ ॥
प्रियो वा यदि वा द्वेष्यःस्त्रीणाम्भर्त्तैव दैवतम् । दुर्भगत्वेनदग्धाहं सखीमध्येसुरेश्वर
भर्त्तुर्यत्दुःखसौख्यास्मि तेन क्लिश्याम्यहं भृशम् ॥ ७ ॥

ईश्वर उवाच

वल्लभा भास्करस्यैव मत्प्रसादाद्भविष्यसि ॥ ८ ॥

पार्वत्युवाच

अप्रमाणं भवद्वाक्यं भास्करोऽपि करिष्यति ।

वृथा क्लेशो भवेदस्याः प्रभायाः परमेश्वर !॥ ६ ॥
उमावाक्यान्महेशान ध्यातस्तिमिरनाशनः ।
आगतो गगनाद्भानुर्नर्मदोत्तररोधसि ॥ १० ॥

भानुरुवाच

आहूतोऽस्मि कथं देव! ह्यवासुरनिषूदन ॥ ११ ॥

ईश्वर उवाच

प्रभां पालय भो भानो! सन्तोषेण परेण हि ॥ १२ ॥

उमोवाच

प्रभायामन्दिरेनित्यंस्थीयतांहिमनाशन । अग्रपत्नीसमस्तानांभार्याणांक्रियतांरवे

भानुरुवाच

एवंदेविकरिष्यामितवाक्यम्वरानने । एतच्छ्रुत्वाप्रभाऽऽहूता प्रत्युवाचमहेश्वरम्

प्रभोवाच

स्वांशेन स्थीयतां देव! मन्मथारे! उमापते !।
एकांशः स्थाप्यतामत्र तीर्थस्योन्मीलनाय च ॥ १५ ॥

श्रीमार्कण्डेय उवाच

सर्वदेवमयं लिङ्गं स्थापितं तत्र पाण्डव! । प्रभासेशइतिख्यातं सर्वलोकेषुदुर्लभम्
अन्यानि यानि तीर्थानि काले तानि फलन्ति वै ।
प्रभासेशस्तु राजेन्द्र सद्यः कामफलप्रदः ॥ १७ ॥
माघमासे सितपक्षे सप्तम्यां च विशेषतः । अश्वं यः स्पर्शयेत्तत्र यथोक्तब्राह्मणेनृप
इन्द्रत्वं प्राप्यते तेन भास्करस्याऽथवा पदम् ।
स्नात्वा परमया भक्त्या दानं दद्याद् द्विजातये ॥ १६ ॥
गोप्रदातालभेत्स्वर्गंसत्यलोकंवरेश्वर । सर्वाङ्गसुन्दरीं शुभ्रां क्षीरिणींतरुणींशुभाम्
सवत्सां घण्टासंयुक्तां कांस्यपात्रावदोहिनीम् ।
ददते ये नृपश्रेष्ठ! न ते यान्ति यमालयम् ॥ २१ ॥

# एकोनशततमोऽध्यायः

## नागेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेन्महीपालनर्मदादक्षिणे तटे । स्थापितंवासुकीशंतु समस्ताघौघनाशनम्

युधिष्ठिर उवाच

कस्माच्च कारणात्तात रेवाया दक्षिणे तटे ।
वासुकीशः स्थापितो वै विस्तराद्वद मे गुरो !॥ २ ॥

श्रीमार्कण्डेय उवाच

एतत्सर्वं समाख्याय नृत्यं शम्भुश्चकार वै ॥ ३ ॥
श्रमादजायत स्वेदो गङ्गातोयविमिश्रितम् ।
पतन्तमुरगोऽश्नाति हरमौलिविनिर्गतम् ॥ ४ ॥
मन्दाकिनी ततः क्रुद्धा व्यालस्योपरि भारत !।
प्राप्नुह्यजगरत्वं हि भुजङ्ग क्षुद्रजन्तुकः ॥ ५ ॥

वासुकिरुवाच

अनुग्राह्योऽस्मिते पापोदुर्नयोऽहंहराद्वृते । त्रैलोक्यपावनीपुण्यासरित्त्वंशुभलक्षणर
संसारच्छेदनकरीह्यार्त्तानामार्त्तिनाशनी । स्वर्गद्वारेस्थितात्वंहिदयांकुरुमयीश्वरि

गङ्गोवाच

कुरुष्व विपुलं विन्ध्यं तपस्त्वं शङ्करं प्रति ।
ततः प्राप्स्यसि स्वं स्थानं पन्नगत्वं ममाज्ञया ॥ ८ ॥

श्रीमार्कण्डेय उवाच

ततोऽसौ त्वरितो विन्ध्यं नागो गत्वा नगं शुभम् ।
तपस्तप्तुं समारेभे शङ्कराराधनोद्यतः ॥ ९ ॥

नित्यं दध्यौ महादेवं भवसंसारमोचनम् । ततो वर्षशतेपूर्णे उपरुद्धो जगद्गुरुः ॥
आगतस्तत्समीपं तु श्लक्ष्णां वाणीमुदाहरत् ॥ १० ॥
वरं वरय मे वत्स पन्नग त्वं कृपाकर ॥ ११ ॥

वासुकिरुवाच

यदि तुष्टोऽसि मे देव वरं दास्यसि शङ्कर । प्रसादात्तव देवेश भूयान्निष्पापतामम
तीर्थं किञ्चित्समाख्याहि सर्वपापप्रणाशनम् ॥ १२ ॥

ईश्वर उवाच

पन्नगत्वमहाभागादौ गच्छ शुभं तीर्थम् । यास्येतस्यास्तटे पुण्ये स्नानं कुरु यथाविधि
इत्युक्त्वान्तर्दधे देवो वासुकिस्त्वरयान्वितः । रूपेणाऽजगरेणैव प्रविष्टो नर्मदाजलम्
मार्गेण तस्य सञ्जातं जाह्नव्या स्रोत उत्तमम् ।
निर्धूतकल्मषः सर्प सञ्जातो नर्मदाजले ॥ १५ ॥
स्थापितः शङ्करस्तत्र नर्मदायां युधिष्ठिर । ततो नागेश्वरं लिङ्गं प्रसिद्धं पापनाशनम्
अष्टम्यां वा चतुर्दश्यां स्नापयेन्मधुना शिवम् ।
विमुक्तकल्मषः सद्यो जायते नात्र संशयः ॥ १७ ॥
अपुत्रा ये नरा पार्थ स्नानं कुर्वन्ति सङ्गमे ।
ते लभन्ते सुतान्पुत्रान्नागतीर्थोपमान्शुभान् ॥ १८ ॥
श्राद्धं तत्रैव यः कुर्यादुपवासपरायणः । कुलं प्रमोचयेत्प्रेतान्नरकात्पृथिवीनन्दन ॥ १९
सर्पाणां च भयं घोरे ज्ञातिवर्गे न जायते । निर्दोषं नन्दते तस्य कुलं नागप्रसादतः
एतत्ते सर्वमाख्यातं तव स्नेहान्नृपोत्तम ॥ २० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्ताखण्डे
रेवाखण्डे नागेश्वरतीर्थमाहात्म्यवर्णननामैकोनशततमोऽध्यायः ॥ ९९ ॥

---

# शततमोऽध्यायः

## मार्कण्डेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल तीर्थं परमरोचनम्। मार्कण्डेशमिति ख्यातं नर्मदादक्षिणेतटे

उत्तमं सर्वतीर्थानां गीर्व्वाणैर्वन्दितं शिवम्।
गुह्याद् गुह्यतरं पुत्र! नाख्यातं कस्यचिन्मया ॥ २ ॥
स्थापितं तु मया पूर्वं स्वर्गसोपानसन्निभम्।
ज्ञानं तत्रैव मे जातं प्रसादाच्छङ्करस्य च ॥ ३ ॥

अन्यस्तत्रैव यो गत्वा द्रुपदामन्तर्जलेजपेत्। स पातकैरशेषैश्च मुच्यतेपाण्डुनन्दन

वाचिकैर्मानसैश्चैव कर्मजैरपि पातकैः।
पिण्डिकां स्थाप्यचण्डम्य याम्यामाशां स संस्थितः ॥ ५ ॥

योजयेच्छूलिनंभक्त्याद्वात्रिंशद्बहुरूपिणम्। देहपातेशिवं गच्छेदितिमेनिश्चयोनृप
आज्येनबोधयेद्दीपमष्टम्यांनिशिभारत। स्वर्गलोकमवाप्नोति इत्येवं शङ्करोऽब्रवीत्
श्राद्धं तत्रैवयोभक्त्याकुर्व्वीतनृपनन्दन। पितरस्तस्यतृप्यन्तियावदाभूतसम्प्लवम्
इङ्गुदैर्बदरैर्बिल्वैरक्षतेनजलेन वा। तर्प्पयेत्तत्र यो वंश्यानाप्नुयाज्जन्मनः फलम् ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे मार्कण्डेश्वरतीर्थमाहात्म्यवर्णनंनाम शततमोऽध्यायः ॥१००॥

# एकाधिकशततमोऽध्यायः

## सङ्कर्षणतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम् । उत्तरे नर्मदाकूले यज्ञवाटस्य मध्यत
सङ्कर्षणमितिख्यातं पृथिव्यां पापनाशनम् । तपश्चीर्णं पुरा राजन्बलभद्रेणतत्र वै
गीर्वाणा अपि तत्रैव सन्निधीकृपनन्दन ॥ उमयासहित शम्भु स्थितस्तत्रैवकेशवः
बलभद्रेणराजेन्द्रप्राणिनामुपकारत । स्थापित परया भक्त्या शङ्कर पापनाशन
यस्तत्र स्नाति वै भक्त्या जितक्रोधो जितेन्द्रिय ।
एकादश्यां सिते पक्षे मधुना स्नापयेच्छिवम् ॥ ५ ॥
श्राद्ध तत्रैव यो भक्त्या पितृणामथ दापयेत् ।
स याति परम स्थान बलभद्रयथो यथा ॥ ६ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे सङ्कर्षणतीर्थमाहात्म्यवर्णननामैकाधिकशततमोऽध्याय ॥ १०१ ॥

---

# द्व्यधिकशततमोऽध्यायः

## मन्मथेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

मन्मथेश ततो गच्छेत्सर्वदेवनमस्कृतम् । स्नानमात्राध्वरो राजन्यमलोकनपश्यति
अनपत्या या च नारी स्नायाद्वैपाण्डुनन्दन । पुत्रसाल्मतेपार्थं सत्यसन्धदृढव्रतम्
तत्र स्नात्वा नरोराजञ्छुचि प्रयतमानस ।
१ ।

उपोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ३ ॥

कामिकं तीर्थराजं तु तादृशं न भविष्यति । त्रिरात्रं कुरुते राजन् स गोलक्षफलं लभेत्
तत्र नृत्यं प्रकर्त्तव्यं तुष्यते परमेश्वरः । गीतवादित्रनिर्घोषै रात्रौ जागरणेन च ॥

पश्यन्त्यां च महादेवो दृष्टो मे मन्मथेश्वरः ।
किं समर्था यमो रुद्रो भद्रो भद्राणि पश्यति ॥ ६ ॥
कामेन स्थापितः शम्भुरेतस्मात्कामदो नृप !।
सोपानः स्वर्गमार्गस्य पृथिव्यां मन्मथेश्वरः ॥ ७ ॥

विशेषश्चात्रसन्ध्यायांश्राद्धदाने च भारत । अन्नदानेनराजेन्द्र !कीर्त्तितंफलमुत्तमम्

एतत्ते सर्वमाख्यातं तव भक्त्या तु भारत !।
पृथिव्यां सागरान्तायां प्रख्यातो मन्मथेश्वरः ॥ ९ ॥

गोदानं पाण्डवश्रेष्ठत्रयोदश्यांप्रकारयेत् । चैत्रेमासिसितेपक्षे तत्रगत्वाजितेन्द्रियः

रात्रौ जागरणं कृत्वा देवस्याग्रे नृपोत्तम !।
दीपं भक्त्या घृतेनैव देवस्याग्रे निवेदयेत् ॥ ११ ॥
स्त्र्यथवा पुरुषो वाऽपि सममेतत्फलं स्मृतम् ॥ १२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे मन्मथेश्वरतीर्थमाहात्म्यवर्णनं नाम
द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

---

## एकाधिकशततमोऽध्यायः

### सङ्कर्षणतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम् । उत्तरे नर्मदाकूले यज्ञवाटस्य मध्यत
सङ्कर्षणमिति ख्यातं पृथिव्यां पापनाशनम् । तपश्चीर्णं पुरा राजन्बलभद्रेण तत्र वै
गीर्वाणा अपि तत्रैव सन्निधीनृपनन्दन ।। उमयासहित शम्भु स्थितस्तत्रैव केशव
बलभद्रेण राजेन्द्र भाविना मुपकारत । स्थापित परया भक्त्या शङ्कर पापनाशन

यस्तत्र स्नाति वै भक्त्या जितक्रोधो जितेन्द्रिय ।
एकादश्यां सिते पक्षे मधुना स्नापयेच्छिवम् ॥ ५ ॥
श्राद्धं तत्रैव यो भक्त्या पितृणामथ दापयेत् ।
स याति परमं स्थानं बलभद्रवचो यथा ॥ ६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे सङ्कर्षणतीर्थमाहात्म्यवर्णनं नामैकाधिकशततमोऽध्यायः ॥ १०१ ॥

---

## द्व्यधिकशततमोऽध्यायः

### मन्मथेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

मन्मथेशं ततो गच्छेत्सर्वदेवनमस्कृतम् । स्नानमात्राद्धरो राजन्यमलोकं न पश्यति
अनपत्या या च नारी स्नायाद्वै पाण्डुनन्दन । पुत्रं सा लभते पार्थ सत्यसन्धं दृढव्रतम्

तत्र स्नात्वा नरो राजञ्छुचि प्रयतमानस ।

उपोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ३ ॥
कामिकंतीर्थराजंतु नादृशं न भविष्यति । त्रिरात्रंकुरुतेराजन् स गोलक्षफलंलभेत्
तत्र नृत्यं प्रकर्त्तव्यं तुष्यते परमेश्वरः । गीतवादित्रनिर्घोषै रात्रौ जागरणेन च ॥
एरण्ड्यां च महादेवो दृष्टोमे मन्मथेश्वरः ।
किं समर्था यमो रुष्टो भद्रो भद्राणि पश्यति ॥ ६ ॥
कामेन स्थापितः शम्भुस्तस्मात्कामदो नृप !।
सोपानः स्वर्गमार्गस्य पृथिव्यां मन्मथेश्वरः ॥ ७ ॥
चित्रैश्चात्रसन्ध्यायांश्राद्धदाने च भारत । अन्नदानेनराजेन्द्र !कीर्त्तितंफलमुत्तमम्
एतत्ते सर्वमाख्यातं तव भक्त्या नु भारत !।
पृथिव्यां सागरान्तायां प्रख्यातो मन्मथेश्वरः ॥ ९ ॥
गोदानं पाण्डवश्रेष्ठत्रयोदश्यांप्रकारयेत् । चैत्रेमासिसितेपक्षे तत्रगत्वाजितेन्द्रियः
रात्रौ जागरणं कृत्वा देवस्याग्रे नृपोत्तम !।
दीपं भक्त्या घृतेनैव देवस्याग्रे निवेदयेत् ॥ ११ ॥
स्त्र्यथवा पुरुषो वाऽपि सममेतत्फलं स्मृतम् ॥ १२ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे मन्मथेश्वरतीर्थमाहात्म्यवर्णनं नाम
द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

— —

## एकाधिकशततमोऽध्यायः

### मङ्कणतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत् राजेन्द्र तीर्थं परमशोभनम् । उत्तरे नर्मदाकूले पापक्षयं मध्यत
मङ्कणमिति विख्यातं पृथिव्यां पापनाशनम् । तीर्थानां पुरा राजन्मङ्कणेन च वै
शोधिता यदि तत्रैव सन्निधौ नृपनन्दन । उमया सहितः शम्भुः स्थितस्तत्रैव केशव
यन्मङ्कणराजेन्द्रप्राणिनामुपकारक । स्नाति यः परया भक्त्या शङ्करं पापनाशन

यस्तत्र स्नाति वै भक्त्या जितक्रोधो जितेन्द्रियः ।
एकादश्यां सिते पक्षे मधुना स्नापयेच्छिवम् ॥ ५ ॥
श्राद्धं तत्रैव यो भक्त्या पितॄणामथ दापयेत् ।
स याति परमं स्थानं यत्र रुद्रपदो यथा ॥ ६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे मङ्कणतीर्थमाहात्म्यवर्णनंनामैकाधिकशततमोऽध्यायः ॥ १०१ ॥

---

## द्व्यधिकशततमोऽध्यायः

### मन्मथेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

मन्मथेशं ततो गच्छेत्सर्वदेवनमस्कृतम् । स्नानमात्रान्नरो राजन्यमलोकं न पश्यति
अनपत्या या च नारी स्नायाद्दीपाण्डुनन्दन । पुत्रसाप्नोति पार्थ सत्यसन्धद्दुमतम्
तत्र स्नात्वा नरो राजञ्छुचिः प्रयतमानसः ।

पतन्तं रक्षयेद्विप्र महापातकिनं यदि। महाघोरे गता वापि दुष्टकर्मपितामहाः॥
तद्धरन्ति सुपुत्राश्च वैतरण्यां गतानपि।
पुत्रेण लोकाञ्जयति पौत्रेण परमा गतिः॥ १४॥
अथ पुत्रस्य पौत्रेण प्रगच्छेद्ब्रह्म शाश्वतम्।
नास्ति पुत्रसमो बन्धुरिह लोके परत्र च॥ १५॥
अहश्चमध्यरात्रे च चिन्तयानस्यसर्वदा। शुष्यन्तिममगात्राणि ग्रीष्मेनह्युदकंयथा

अनसूयोवाच

यत्त्वया शोचितं विप्र! तत्सर्वं शोचयाम्यहम्।
तवोद्वेगकरं यच्च तन्मे दहति चेतसि॥ १७॥
येन पुत्रा भविष्यन्ति आयुष्मन्तो गुणान्विताः।
तत्कार्यं च समीक्षस्व येन तुष्येत्प्रजापतिः॥ १८॥

अत्रिरुवाच

तपस्तप्तं मया भद्रे जातमात्रेण दुष्करम्। व्रतोपवासनियमैः शाकाहारेणसुन्दरि
क्षीणदेहस्तु तिष्ठामि ह्यशक्तोऽहंमहाव्रते। तेन शोचामिचात्मानंरहस्यंकथितंमया

अनसूयोवाच

भर्तुः पतिव्रतानारीरतिपुत्रविवर्धिनी। त्रिवर्गसाधनासाच श्लाघ्याचविदुषांजने
जपस्तपस्तीर्थयात्रा मृडेज्यामन्त्रसाधनम्।
देवताराधनं चैव स्त्रीशूद्रपतनानि षट्॥ २२॥
ईदृशं तु महादोषं स्त्रीणां तु व्रतसाधने। वदन्ति मुनयः सर्वे यथोक्तं वेदभाषितम्
अनुज्ञाता त्वया ब्रह्मंस्तपस्तप्स्यामि दुष्करम्।
पुत्रार्थित्वं समुद्दिश्य तोषयामि सुरोत्तमान्॥ २४॥

अत्रिरुवाच

साधुसाधु महाप्राज्ञे ममसन्तोषकारिणि। आज्ञाता त्वं महाभद्रेपुत्रार्थंतपआश्रय
देवतानां मनुष्याणां पितॄणामनृणोभवे। नभार्यासदृशो बन्धुस्त्रिपुलोकेषुविद्यते

तेन देवाः प्रशंसन्ति न भार्यासदृशं सुखम् ।
सन्मुखे सन्मुखाः पुत्राः विलोमे तु पराङ्मुखाः ॥ २७ ॥
तेन भार्यां प्रशंसन्ति सदेवासुरमानुषाः । महासने महाप्राज्ञे सत्रयति शुभेक्षणे
तपश्चरस्व शीघ्रं त्वं पुत्रार्थं तु ममाज्ञया ।
एतद्वाक्यावसाने तु भार्याऽङ्ग प्रणताऽब्रवीत् ॥ २८ ॥
त्वत्प्रसादेन विप्रेन्द्र सर्वान्कामानवाप्नुयाम् ।
हंसलीलागति सा च मृगाक्षी वरवर्णिनी ॥ ३० ॥
नियमस्था ततो भूत्वा सम्प्राप्ता नर्मदां नदीम् ।
शिवस्वेदोद्भवां देवीं सर्वपापप्रणाशिनीम् ॥ ३१ ॥
यस्या दर्शनमात्रेण नश्यते पापसञ्चयः । स्नानमात्रेण वै यस्या अश्वमेधफलं लभेत्
ये पिबन्ति महादेवि श्रद्दधाना पयः स्वयम् ।
पयःपानेन तत्तुल्य नाऽत्र कार्या विचारणा ॥ ३२ ॥
ये स्मरन्ति त्रिसंध्यायां योजनानां शतैरपि । मुच्यन्ते सर्वपापेभ्यो रुद्रलोकं प्रयान्ति ते
नर्मदायाः समीपे तु तावुभौ यावदक्षये । न पश्यन्ति यमं तत्र ये स्नाता वरवर्णिनि
ततस्तु गत्वा कूले एरण्ड्याः सङ्गमे शुभे ।
नियमस्था विशालाक्षी शाकाहारेण सुन्दरि ॥ ३६ ॥
तोषयन्ती शीघ्रं देवमच्युतं स्तोत्रैर्व्रतैस्तथा ।
ग्रीष्मेषु च महादेवि पञ्चाग्निं साधयेत्सती ॥ ३७ ॥
वर्षाकाले चार्द्रवासाश्चान्द्रायणानि च ।
हेमन्ते तु ततः प्राप्ते तोयमध्ये वसेत्सदा ॥ ३८ ॥
प्रातःस्नानं ततः सन्ध्या कुशाद्यैर्वितर्पणम् । देवानामर्चनं कृत्वा होमं कुर्याद्यथाविधि
यतते कन्यकांस्तांस्तान्स्नानजाप्यहुतेन च । एवं वर्षशते प्राप्ते रुद्रविष्णुपितामहाः
सम्प्राप्ता द्विजरूपेण तेऽरण्ड्याः सङ्गमे प्रिये ।
पुनः संस्थितास्तस्या वेदमभ्युदीरन्ति च ॥ ४१ ॥

अनसूया जपं त्यक्त्वा निरीक्ष्य तान्मुहुर्मुहुः ।
उत्थिता सा विशालाक्षी अर्घं दत्त्वा यथाविधि ॥ ४० ॥
अद्य में सफलं जन्म अद्य मे सफलं तपः । दर्शनेन तु विप्राणां सर्वपापैः प्रमुच्यते
प्रदक्षिणं ततः कृत्वा साष्टाङ्गं प्रणताऽब्रवीत् ।
कन्दमूलफलं शाकं नीवाराननपि पावनान् ।
प्रयच्छाम्यहमद्यैव मुनीनां भावितात्मनाम् ॥ ४४ ॥

विप्रा ऊचुः

तपसा तु विचित्रेण तपःसत्येनसुव्रते । तृप्ताः स्म सर्वकामैस्तु सुव्रते तवदर्शनात्
अस्माकंकौतुकं जातंतापसेनव्रतेनय ा । स्वर्गमोक्षसुतस्याऽर्थेतपस्तपसिदुष्करम्

अनसूयोवाच

तपसा सिध्यतेस्वर्गस्तपसापरमागतिः । तपसाचार्थकामौचतपसागुणवान्सुतः
तप एव च मे विप्राः सर्वकामफलप्रदम् ॥ ४७ ॥

विप्रा ऊचुः

तन्वी श्यामा विशालाक्षी स्निग्धाङ्गी रूपसंयुता ।
हंसलीलागतिगमा त्वं च सर्वाङ्गसुन्दरी ॥ ४८ ॥
किं च ते तपसा कार्यमात्मानं शोच्यसे कथम् ॥ ४६ ॥

अनसूयोवाच

यदिरुद्रश्च विष्णुश्च स्वयंसाक्षात्पितामहः । गूढरूपधराः सर्वे तच्चिह्नमुपलक्षये ॥
तस्या वाक्यावसाने तु स्वरूपं दर्शयन्ति ते ।
स्वस्वरूपैः स्थिता देवाः सूर्यकोटिसमप्रभाः ॥ ५१ ॥
चतुर्भुजो महादेवि! शङ्खचक्रगदाधरः । अतसीपुष्पवर्णस्तु पीतवासा जनार्दनः
गरुत्मान्वाहनं यस्यश्रियाचसहितोहरिः । प्रसन्नवदनःश्रीमान्स्वयंरूपोव्यवस्थितः
पीतवासा महादेवि! चतुर्वदनपङ्कजः । हंसोपरि समारूढो ह्यक्षमालाकरोद्यतः ॥
आगतो नर्मदातीरे ब्रह्मा लोकपितामहः ।

योऽसौ सर्वजगद्व्यापी स्वयं साक्षान्महेश्वरः ॥ ५५ ॥
वृषभ ॥ समारूढोदशबाहुसमन्वितः । भस्माङ्गरागशोभाढ्य पञ्चवक्त्रस्त्रिलोचनः
जटामुकुटसंयुक्तः इन्दुचन्द्रार्धशेखरः । एवरूपधरो देवः सर्वव्यापी महेश्वरः ॥ ५७
अनसूया निरीक्ष्यैतान्देवाना दर्शनं परम् । वेपमाना ततः साध्वीसुरान्दृष्ट्वा मुहुर्मुहुः
अनसूयोवाच
किंत्वाकारस्वरूपास्तु विष्णुरुद्रपितामहाः । एतद्वेदितुमिच्छामि ह्यशरस्वय तुमे
ब्रह्मोवाच
आगृह्यकागोऽहवस्त्वा आपद्धेय प्रकीर्तिता । वेदरूपो ह्यहंप्रोक्तो येययामि च भूतले
अहं सर्वाणि बीजानि प्राकम्यव्याप्नुदिते रवौ ।
एतद्वै कारणं सर्वं रहस्यं कथितं परम् ॥ ६१ ॥
विष्णुरुवाच
हेमन्तश्च भवेद्विष्णुर्विश्वरूपधराधरम् । पालनाय चलत्सर्वं विष्णोर्माहात्म्यमुत्तमम्
रुद्र उवाच
ग्रीष्मकालोऽहं प्रोक्तः सर्वभूतक्षयङ्करः । कथयामि च तत्सर्वं रुद्ररूपस्तपस्विनि
एवं ब्रह्मा च विष्णुश्च रुद्रश्चैव महाव्रते । त्रयोदेवास्त्रयः सन्ध्यास्त्रयः कालास्त्रयोऽग्नयः
तथा ब्रह्मा च विष्णुश्च रुद्रश्चैकात्मतां गताः ।
वरं वृणुष्व ते भद्रे यस्त्वया मनसेप्सितम् ॥ ६० ॥
अनुसूयोवाच
धन्या पुण्या ह्यहं लोके श्लाघ्या धन्या च सर्वदा ।
ब्रह्मा विष्णुश्च रुद्रश्च प्रसन्नवदना शुभा ॥ ६ ॥
यदि तुष्टास्त्रयो देवा दया कृत्वा ममोपरि ।
अस्मिंस्तीर्थे तु सान्निध्याद्वरदा भवन्तु मे सदा ॥ ६७ ॥
रुद्र उवाच
एवं भवतु तं वाक्यं यत्त्वयाप्रार्थितं शुभे । प्रत्यक्षा वैष्णवीमाया एरण्डीनामनामतः

यस्यादर्शनमात्रेण नश्यतेपापसञ्चयः । चैत्रमासे तु सम्प्राप्तेअहोरात्रोषितो भवेत्
एरण्ड्याः सङ्गमे स्नात्वा ब्रह्महत्यां व्यपोहति ।
रात्रौ जागरणं कुर्यात्प्रभाते भोजयेद् द्विजान् ॥ ७० ॥
यथोक्तेनविधानेनपिण्डंदद्याद्यथाविधि । प्रदक्षिणां ततो दद्याद्धिरण्यं वस्त्रमेव च
रजतं च तथा गावो भूमिदानमथाऽपिवा ।
सर्वं कोटिगुणं प्रोक्तमिति स्वायम्भुवोऽब्रवीत् ॥ ७२ ॥
ये म्रियन्ति नरा देवि! एरण्ड्याः सङ्गमे शुभे । यावद्युगसहस्रंतु रुद्रलोकेवसन्ति ते
अहोरात्रोषितो भूत्वा जपेद्रुद्रांश्च वैदिकान् ।
एकादशैकसञ्ज्ञांश्च स याति परमां गतिम् ॥ ७४ ॥
विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ।
पुत्रार्थी लभते पुत्राँल्लभेत्कामान्यथेप्सितान् ॥ ७५ ॥
एरण्ड्याः सङ्गमे स्नात्वा रेवाया विमले जले ।
महापातकिनो वाऽपि ते यान्ति परमां गतिम् ॥ ७६ ॥

अनसूयोवाच

यदितुष्टास्त्रयोदेवा मम भक्तिप्रचोदिताः । मम पुत्रा भवन्त्वेव हरिरुद्रपितामहाः

विष्णुरुवाच

पूज्या यत्पुत्रतां यान्ति न कदाचित्कृतं मया ।
शुभे ददामि पुत्रांस्ते देवतुल्यपराक्रमान् । रूपवन्तो गुणोपेतान्यज्विनश्चबहुश्रुतान्

अनसूयोवाच

ईप्सितंतच्च दातव्यं यन्मया प्रार्थितंहरे !। नान्यथाचैव कर्त्तव्याममपुत्रैषणा तु या

विष्णुरुवाच

पूर्वं तु भृगुसम्वादे गर्भवासउपार्जितः । । तस्याहं नैवपारंतु नैव पश्यामि शोभने
स्मरमाणः पुरावृत्तं चिन्तयामि पुनः पुनः । एवंसञ्चिन्त्यतेदेवाः पितामहमहेश्वराः
अयोनिजाभविष्यामस्तव पुत्रा वरानने !। योनिवासेमहाप्राज्ञिदेवानैवव्रजन्तिच

सान्निध्यात्सङ्गमे देवि लोकानां तु वरप्रदा ।
वरपदी वैष्णवी माया प्रत्यक्षा त्वं भविष्यसि ॥ ८३ ॥
त्रयो देवा स्थिता पार्थ रेवाया उत्तरे तटे ।
वरप्राप्ता तु सा देवी गता माहेन्द्रपर्वतम् ॥ ८४ ॥

क्षीणाङ्गीशुष्कदेहा च रूक्षकेशा सुदारुणा । कृतयज्ञोपवीतासातपोनिष्ठाशुभेक्षण
शिलातलनिषिण्णोऽसौ दृष्ट कान्तो महायशा ।
दृष्ट्वा चित्तोऽभवद्देवि उत्तिष्ठोत्तिष्ठ साऽब्रवीत् ॥ ८६ ॥

अत्रिरुवाच

साधुसाधु महाप्राज्ञे ह्यनसूये महाव्रते ।
अचिन्त्य गालवादीना वरं प्राप्ताऽसि दुर्लभम् ॥ ८७ ॥

अनसूयोवाच

त्वत्प्रसादेनदेवर्षे वरप्राप्तास्मिदुर्लभम् । तेनदेवा प्रशसन्ति सिद्धाश्चऋषयोऽमला
एवमुक्ता तु सा देवी हर्षेण महता युता । आलोकयेतत कान्तलेनाऽपि शुभदश ना
ईक्षणाच्चैव सधात ललाटे मण्डल शुभम् । नवयोजनसाहस्रमण्डलरश्मिभिवृतम्
कदम्बगोलकाकारत्रिगुण परिमण्डलम् । तस्यमध्ये तु ददेशि पुरुषोदिव्यरूपधृक
हेमवर्णोऽमृतमय सूर्यकोटिसमप्रभ । आद्य पुत्रोऽनसूयाया स्वयसाक्षात्पितामह

चन्द्रमा इतिविख्यात सोमरूपो नृपात्मज ।
इष्टापूर्त च सप्नाति कलाषोडशकेन ॥ ९३ ॥
प्रतिपच्च द्वितीया च तृतीया च महेश्वरि ।
चतुर्थी पञ्चमी चैव अव्यया षोडशी कला ॥ ९४ ॥
चतुर्विधस्य लोकस्य सूक्ष्मो भूत्वा वरानने ।
आप्रीणाति जगत्सर्वं त्रैलोक्य सचराचरम् ॥ ९५ ॥

सर्वे ते ह्युपजीवन्ति हुत दत्त शशिस्थितम् । वनस्पतिगतेसोमे वनवाश्च वरानने
मुञ्जपरगृहे मृदो दहेद्वस्त्रत शुभम् । वनस्पतिगते सोमे यस्तु छिन्द्याद्वनस्पतिन्

तेन पापेन देवेशि! नरा यान्ति यमालयम् ॥ ६७ ॥

वनस्पतिगते सोमे मैथुनं यो निषेवते । ब्रह्महत्यासमं पापं लभते नाऽत्र संशयः ॥

वनस्पतिगते सोमे मन्थानं योऽधिवाहयेत् ।
गावस्तस्य प्रणश्यन्ति याश्च वै पूर्वसञ्चिताः ॥ ९९ ॥
वनस्पतिगते सोमे ह्यध्वानं योऽधिगच्छति ।
भवन्ति पितरस्तस्य तं मासं रेणुभोजनाः ॥ १०० ॥
अमावास्यां महादेवि! यस्तु श्राद्धप्रदो भवेत् ।
अब्दमेकं विशालाक्षि! तृप्तास्तत्पितरो ध्रुवम् ॥ १०१ ॥

हिरण्यं रजतं वस्त्रं यो ददाति द्विजातिषु । सर्वलक्षगुणं देवि लभते नाऽत्रसंशयः
एवं गुणविशिष्टोऽसौ सोमरूपः प्रजापतिः । सञ्जातःप्रथमःपुत्रो ह्यनसूयासुनन्दनः
द्वितीयस्तुमहादेविदुर्वासानामनामतः । सृष्टिसंहारकर्त्ता च स्वयंसाक्षान्महेश्वरः
अग्निमध्यगतोदेवितपस्तपतिदुष्करम् । सोऽपि रुद्रत्वमायातिसम्प्राप्तेभूतविप्लवे

इन्द्रोऽपि शप्तस्तेनैव दुर्वाससा वरानने !।
द्वितीयस्य तु पुत्रस्य सम्भवः कथितो मया ॥ १०६ ॥

दत्तात्रेयस्वरूपेण भगवान्मधुसूदनः । जयद्व्यापी जगन्नाथः स्वयंसाक्षाज्जनार्द्दनः
एते देवास्त्रयः पुत्रा अनसूयाया महेश्वरि । वरदानेन ते देवा ह्यवतीर्णा महीतले
पुत्रप्राप्तिकरंतीर्थं रेवायाश्चोत्तरे तटे । अनसूयाकृतं पार्थ ! सर्वपापक्षयं परम् ॥

श्रीमार्कण्डेय उवाच

आश्चर्यभूतं लोकेऽस्मिन्नर्मदायां पुरातनम् ।
भ्रूणहत्या गतास्तत्र ब्राह्मणस्य नराधिप !॥ ११० ॥

युधिष्ठिर उवाच

इतिहासं द्विजश्रेष्ठ कथयस्व ममाऽनघ । सर्वपापहरंलोके दुःखार्त्तस्यचकथ्यताम्

श्रीमार्कण्डेय उवाच

सुवर्णशिलके ग्रामे गौतमान्वयसम्भवः । कपीचलो महादेवि! भार्यापुत्रसमन्वितः

पमते तत्र गोविन्द सञ्जातो पितुः कुले । पुत्रदारसमोपेतो गृहक्षेत्ररतः सदा ॥
शकटं पूरयित्वा तु काष्ठानामगमद् गृहम् ।
प्रभिन्नानि च काष्ठानि क्षोकार्ता क्षुधयाऽन्वित ॥ ११४ ॥
रिक्तमापन्नतदा पुत्र पितुः शब्दात्समागत ।
न दृष्टवान स पुत्र काष्ठे मध्याह्निकोऽपरा ॥ ११५ ॥
आगमन्त्यचरितो गेहे पिपासार्तो नराधिप ।
शकटं मोच्य मन्दारि सपूर्व रज्जुसंयुतम् ॥ ११६ ॥
आयान्त्यैवयाहृणाचित्ता पगर्यत्तिनी । दृष्टानिपातितपुत्रकाष्ठैर्निर्भिन्नमस्तक
श्रन्तःस्मामा करणं निक्षिप्त कोलिका शिशुम् ।
शुश्रूषते रता माध्वी प्रियस्य च नराधिप ॥ ११८ ॥
मन स्नानादिकं कृत्वा भोजनाच्छयन शुभम् ।
पुत्र पुत्रपना श्रेष्ठा तु स्थापयति सा शनै ॥ ११९ ॥
पदाघातोदितः सुत पुत्र पञ्चत्वमागत । तदा सा दीनवदना रुरोद च मुमोह च
नष्टः त्या नदिन शार्ङ्ग गोविन्दग्रस्तमानस ।
विमिन्नदिति व्योक्त्वा तु पतितो धरणीतले ॥ १२१ ॥
शायनीसुतकेशौतुभूमौनिपतितोनृप । विलपानेघरा नेन्द्रनिश्वासोच्छ्वासितेनच
एक पश्यै ब्राह्मणं पुत्र दृष्ट्वा पतितमातुरम् । सधारयिष्येहृदयं स्फुटितं तव कारणे
स्यक्त मान्न यशो नियमस्तथा कुग्मलतिम् ।
दृष्ट्वा किमनृणीभूतो यास्यामि परमां गतिम् ॥ १२४ ॥
मम वृद्धस्य क्षान्तस्य गतिस्त्वं किल पुत्रक ।
एते मनोरथा सर्वे चिन्तिता चिरश्रा गता ॥ १२५ ॥
इमा तु विकला दीना विहीना सुतबान्धवै ।
रुदन्ती पतिता पाहि मातरं धरणीतले ॥ १२६ ॥
सुत । तेन पुत्र इतिप्रोक्त स्त्वयमेवस्त्वयम्भुवा

अपुत्रस्य गृहं शून्यं दिशः शून्या ह्यबान्धवाः ।
मूर्खस्य हृदयं शून्यं सर्वशून्यं दरिद्रता ॥ १२८ ॥

मृगाऽयं वदतेलोकश्चन्दनंकिल शीतलम् । पुत्रगात्रपरिष्वङ्गश्चन्दनादपि शीतलः
श्मश्रुग्रहणक्रीडन्तंधूलिधूसरिताननम् पुण्यहीनानपश्यन्तिनिजोत्सङ्गसमास्थितम्

दिगम्बरं गतव्रीडं जटिलं धूलिधूसरम् ।
पुण्यहीना न पश्यन्ति गङ्गाधरमिवात्मजम् ॥ १३१
वीणावाद्यस्वरो लोके सुस्वरः श्रूयते किल ।
रुदितं बालकस्यैव तस्मादाह्लादकारकम् ॥ १३२ ॥

मृगपक्षिषु काकेषु पशूनां स्वरयोनिषु । पुत्रं तेषु समस्तेषु वल्लभं ब्रुवते बुधाः ॥

मत्स्याश्चप्रकराश्चैव कूर्मग्राहादयोऽपि वा ।
पुत्रोत्पत्तौ च हृष्यन्ति विपत्तौ यान्ति दुःखिताम् ॥ १३४ ॥

देवगन्धर्वयक्षाश्च हृष्यन्तेपुत्रजन्मनि । पश्चत्वेतेऽपिशोचन्तिमन्दभाग्योऽस्मिपुत्रक
ऋषिमेलापकं चक्रे पुत्रार्थं राघवो नृप । इन्द्रस्थानेस्थितस्तस्यप्रोक्षतेह्यासनंयतः

स्वर्गवासं सुताद्वाह्यं विद्यते न तु पाण्डव ॥
चक्रे दशरथस्तस्मात्पुत्रार्थं यज्ञमुत्तमम् ॥ १३७ ॥
रामोलक्ष्मणशत्रुघ्नौ भरतस्तत्र सम्भवात् ।
कार्त्तवीर्यो जितो येन रामेणाऽमिततेजसा ॥ १३८ ॥

स रामो रामचन्द्रेण अष्टवर्षेण निर्जितः । एकाकिनाहतोवाली प्लवगः शत्रुदुर्जयः
रावणो ब्रह्मपुत्रो यत्त्रैलोक्यं यस्य शङ्कते । हतः स रामचन्द्रेण सपुत्रःसहबान्धवः

एवं पुत्रं विना सौख्यं मर्त्यलोके न विद्यते ।
वंशार्थे मैथुनं यस्य स्वर्गार्थे यस्य भारती ॥ १४१ ॥
मृष्टान्नं ब्राह्मणस्यार्थे स्वर्गं वासं तु यान्ति ते ।
ब्रह्महत्याश्वमेधाभ्यां न परं पापपुण्ययोः ॥ १४२ ॥
पुत्रोत्पत्तिविपत्तिभ्यां न परं सुखदुःखयोः ।

किं ब्रवीर्मामिति भो वत्स' न तु सौख्य सुत विना ॥ १४२ ॥

एव बहुविध दुःख प्रलपित्वापुन पुन । जनैश्चाश्वासितोविप्रो बालगृहाद्बहिर्गत
तत सस्कृत्य त बाल विधिदृष्टेनकर्मणा । समवेतौतुदुःखार्त्तावागतौस्वगृहं पुन
एवगृहागते विप्रेशान्निर्जाता युधिष्ठिर । भूमौ प्रसुप्तो गोविन्द पुत्रशोकेनपीडित

यावन्निरीक्षते भार्या भर्तार दु खपीडितम् ।
कृमिराशिगत सर्व गोविन्द समपश्यत ॥ १४७ ॥
दुःखाद्दु दुःखतरे मग्ना दृष्ट्वा त पातकान्वितम् ।
एव दुःखनिमग्नाया शर्वरी विगता तदा ॥ १४८ ॥
पशुपालस्तु महिषीं मुक्त्वाऽरण्येऽगमद् गृहात् ।
अरण्ये महिषीं सदा रक्षयित्वा गृहागतः ॥ १४६ ॥
विज्ञप्त पशुपालेन गोविन्दो ब्राह्मणोत्तम ।
यावद्गोस्याम्यह स्वामिन्नहिषीस्त्वं च रक्ष से ॥ १५० ॥

तत सत्वरितोविप्रोन्गतामममहिषीप्रति । ततश्चमहिषीपश्येत्पश्चात्क्लेशाभिसन्मुखम्
धावमानश्च विप्रन्तु एरण्डीसद्मे गत । तत प्रविष्टस्तुजले रथैरण्डपोस्तुलगमे

तज्जल पीतमात्र तु त्वरया चातितर्पित ।
अञ्जलमास्सलिलं पीत्वा प्रक्षाल्य नयने शुभे ॥ १५३ ॥

आनगामतत पश्चाद्भुवनदिवसक्षये । भुक्त्वादन्नान्वितोरात्रौगोविन्दशयनयर्यौ
निद्राभिभूत शोकेन धर्मेणैवनुसेदित । पुनस्तस्यार्धरात्रे तु तस्य भार्यायुधिष्ठिर

कृमिभिर्वेष्टित गात्र क्वचित्पश्यत्यवेष्टितम् ।
पुन सा विस्मयाऽविष्टा तस्य भार्या गुणान्विता ॥
उवाच दुःखेन तस्य साध्वमाविष्टचेतसा ॥ १५४ ॥

भार्योवाच

अतीतेपञ्चमेघाहित्विन्धनक्षिपतस्तुते । गृहपश्चाद्गतावालो ह्यज्ञानाद्घातितस्त्वया
मया तन्पातक घोर रहस्य न प्रकाशितम् ।

तेन प्रच्छन्नपापेन दह्यमाना दिवानिशम् ॥ १५८ ॥
न सुखं तव गात्रस्य पश्यामि न हि चात्मनः ।
निद्रा मम शमं याता रतिश्चैव त्वया सह ॥ १५९ ॥
श्रूयते मानवे शास्त्रे श्लोको गीतो महर्षिभिः ।
स्मृत्वा स्मृत्वा तु तं चित्ते परितापो न शाम्यति ॥ १६० ॥
कीर्त्तनान्नश्यते धर्म्मो वर्धतेऽसौ निगूहनात् ।
इह लोके परे चैव पापस्याऽप्येवमेव च ॥ १६१ ॥
एवं सञ्चिन्त्यमानाऽहं स्थिता रात्रौ भयातुरा ।
कृमिराशिगतं त्वां हि कस्याऽहं कथयामि किम् ॥ १६२ ॥
पुनस्त्वंचाऽद्यमेदृष्टोभ्रूणहत्याकृमिश्रितः । कश्चिद्भिन्दन्तितेगात्रंकश्चिन्नष्टाःसमन्ततः
एतत्संस्मृत्य संस्मृत्य विमृशामि पुनः पुनः ।
न जाने कारणं किञ्चित्पृच्छन्त्याः कथयस्व मे ॥ १६४ ॥
तडागं वा सरिद्वाऽपि तीर्थं वा देवतार्च्चनम् ।
यं गतोऽसि प्रभावोऽयं तस्य नाऽन्यस्य मे स्थितम् ॥ १६५ ॥
एवमुक्तस्तुविप्रोऽसौकथयामास भारत । भार्याया यद्दिवावृत्तं शङ्कमानोनृपोत्तम
अद्य[illegible] महिषीसार्थंएरण्डीसङ्गमं गतः । नाभिमात्रे जले गत्वापीतवान्सलिलंबहु
नान्यत्तीर्थं विजानामि सरितं सर एव वा ।
सत्यं सत्यं पुनः सत्यं कथितं तव भामिनि !॥ १६८ ॥
एवं ज्ञात्वा सा सर्वमुपवासकृतक्षणा । सपत्नीको गतस्तत्र सङ्गमे वरवर्णिनि !॥
स्नात्वा तत्र जले रम्ये नत्वा देवं तु भास्करम् ।
स्नापयामास देवेशं शङ्करं चोमया सह ॥ १७० ॥
पञ्चगव्यघृतक्षीरैर्दधिक्षौद्रघृतैर्जलैः । गन्धमाल्यादिधूपैश्च नैवेद्यैश्च सुशोभनैः ॥
पूज्यत्रयीमयंलिङ्गं देवींकात्यायनींशुभाम् । रात्रौजागरणंकृत्वापत्यासहपतिव्रता
ततः प्रभाते विमले द्विजान्सम्पूज्य यत्नतः । गोदानेन हिरण्येन वस्त्रेणान्नेन भारत

गोविन्दं पूजयामास स्वशक्त्या ब्राह्मणान्बहुमान्।
पुनःपापो गृहायात स्वभार्यासहितो नृप ॥ १७५ ॥
एवं यः शृणुते भक्त्या गोविन्दाख्यानमुत्तमम्।
पठते परया भक्त्या श्रूयताम् प्रणश्यति ॥ १७६ ॥
श्रीडने शार्ङ्ग स्नेह यावदाभूतसम्प्लवम्। यच्चैवाप्यमुने मासि मैत्रेया नृपसत्त
नमस्या च मिते पक्षे मोचयात्मो जितेन्द्रिय ।
सान्निध्यं यामनो कृत्वा यो धर्मेच्छिपमन्दिरे ॥ १७७ ॥
ध्यायमाना विश्वार्थ विशुक्लकरसंस्थितम्।
धर्मानुगतिहस्ताग्रं शङ्खचक्रगदाधरम् ॥ १७८ ॥
पक्षिराजसमारूढं त्रैलोक्यवरदायकम्। पितामह ततो ध्यायेद्ब्रह्मरूपं चतुराननम्
मागमं समस्तस्य कमलाकरवासिनम्। योगोपं वमने तत्र विधये स्थानउक्तं
मतः प्रभाते पितृन्तरगम्याच्च नराधिप। ब्राह्मणान्पूजयेद्भक्त्या सर्वदोषविवर्जितान्
मधाययवमसृणान्मषशास्त्रविशारदान्।
घटाम्बामनमाचिन्त्य स्वदारनिरतान्सदा ॥ १८२ ॥
श्राद्धदानेष्वतै याग्यान्ब्राह्मणान्वाण्डुतन्मतं। प्रेतानां पूजन तत्र देवपूर्वं समारभेत्
प्रत्यान्मुख्यन शीघ्रमेण्हया पिण्डतर्पणे ।
स्नानानि तत्र देयानि दानमुख्यानि सर्वदा ॥ १८४ ॥
हिरण्यभूमिकन्याश्च धुर्याहाँ शुभलक्षणौ।
मीनेण माहिनौ पाथ धान्य द्रोणकमण्डल्यया ॥ १८५ ॥
अलङ्कृता सवत्सा च क्षीरिणी तरुणीं सिताम्।
रक्ता वा कृष्णवर्णा वा पाटला कपिला तथा ॥ १८६ ॥
कांस्यदोहनसंयुक्ता रुक्मखुरविभूषणाम्।
स्वर्णशृङ्गीं सवत्सां च ब्राह्मणायोपपादयेत् ॥ १८७ ॥
प्रीयतामे जगन्नाथो हरकृष्णपितामहाः। संसाररक्षणीं देवी सुरभी मां समुद्धरेत

पुत्रार्थं याः स्त्रियःपार्थ! ह्येरण्डीसङ्गमे नृप। स्नाप्यन्तेरुद्रसूक्तैश्चचतुर्वेदोद्भवैस्तथा
चतुर्भिर्ब्राह्मणैःशस्तं द्वाभ्यां योग्यैश्च कारयेत्।
एकेन सार्द्रकुम्भेन दाम्पत्यमभिषेचयेत् ॥ १६० ॥
देवज्ञेनैव चैकेन अथवा सामगेन वा। पञ्चरत्नसमायुक्तं कुम्भे तत्रैव कारयेत्॥
गन्धतोयसमायुक्तं सर्वौषधिविमिश्रितम्। आम्रपल्लवसंयुक्तमश्वत्थमधुकं तथा
गुण्ठितं सितवस्त्रेणसितचन्दनचर्चितम्। सितपुष्पैस्तुसंछन्नंसिद्धार्थकृतमध्यमम्
कांस्यपात्रे तु संस्थाप्य पुत्रार्थी देशिकोत्तमः।
अङ्गलग्नं तु तद्वस्त्रं कटकाभरणं तथा ॥ १९४ ॥
तत्सर्वं मण्डले त्याज्यं सिद्ध्यर्थं चात्मनस्तदा।
प्रणम्य भास्करं पश्चादाचार्यं रुद्ररूपिणम् ॥ १९५ ॥
मधुरं च ततोऽश्नीयाद्देव्याभुवनउत्तमे। फलदानं च विप्राय छत्रं ताम्बूलमेव च
उपानहौ च यानंचसभवेद्दुःखवर्जितः। भास्करे क्रीडतेलोकेयावदाभूतसम्प्लवम्
दानं कोटिगुणं सर्वं शुभं वा यदि वाऽशुभम्।
यथानदीनदाः सर्वे सागरे यान्ति सङ्क्षयम् ॥ १९८ ॥
एवं पापानिनश्यन्तिह्येरण्डीसङ्गमेनृणाम्। समन्ताच्छस्त्रपातेनह्येरण्डीसङ्गमेनृप
भ्रूणहत्यासमं पापं नश्यते शङ्करोऽब्रवीत्।
प्राणत्यागं च यो भक्त्या जातवेदसि कारयेत् ॥ २०० ॥
अनाशकं नृपश्रेष्ठ! जले वा तदनन्तरम्। पञ्चसाहस्रिकं मानं वर्षाणां जातवेदसि
जलेत्रीणिसहस्राण्यनाशकेऽष्टिभुञ्जते। काकाद्यकाःकपोताश्चह्युलूकाःपशवस्तथा
सङ्गमोदकसंस्पृष्टास्ते यान्ति परमां गतिम्।
वृक्षाश्च तत्पदं ज्ञात्वा यां गतिं यान्ति योगिनः ॥ २०३ ॥
एरण्डिका मया देवी दृष्टो मे मन्मथेश्वरः। किंसमर्थोयमोरुष्टोभद्रोभद्राणिपश्यति
मृत्तिकां सङ्गमोद्भूतां ये च गुण्ठन्ति नित्यशः।
भ्रूणहत्यादि पापानि नश्यन्ते नाऽत्र संशयः ॥ २०५ ॥

ततः स्वर्गावतीर्णस्तु जायते विशदे कुले ।
धनधान्यसमोपेतः पुनः स्मरति तज्जलम् ॥ ६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे सुवर्णशिलातीर्थमाहात्म्यवर्णनंनामचतुरधिकशततमोऽध्यायः ॥

---

## पञ्चाधिकशततमोऽध्यायः

### करञ्जतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

करञ्जाख्ये ततो गच्छेत्सोपवासो जितेन्द्रियः ।
तत्र स्नात्वा तु राजेन्द्र! सर्वपापैः प्रमुच्यते ॥ १ ॥

अर्चयित्वामहादेवंदत्त्वादानंतुभक्तितः । सुवर्णंरजतंवाऽपि मणिमौक्तिकविद्रुमान्
पादुकोपानहौ छत्रं शय्यां प्रावरणानि च । कोटिकोटिगुणंसर्वंजायतेनात्रसंशयः

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डेकरञ्जतीर्थमाहात्म्यवर्णनंनाम पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

---

## षडधिकशततमोऽध्यायः

### कामदतीर्थमाहात्म्यवर्णनम्

ततो गच्छेन्महीपाल तीर्थं परमशोभनम् । सौभाग्यकरणंदिव्यं नरनारीमनोरमम्
तत्रयादुर्भगानारीनरोवा नृपसत्तम । स्नात्वाऽर्चयेदुमारुद्रौसौभाग्यंतस्यजायते
तृतीयायामहोरात्रं सोपवासो जितेन्द्रियः ।

सौभाग्यं तस्य विपुलं जायते नाऽत्र संशयः ॥ १८ ॥
अपुत्रो लभते पुत्रमधनो धनमाप्नुयात् ।
राजेन्द्र! कामदं तीर्थं नर्मदायां व्यवस्थितम् ॥ १९ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे रेवाखण्डे कामदतीर्थमाहात्म्यवर्णनंनाम षडुत्तरशततमोऽध्यायः ॥१०६॥

---

## सप्ताधिकशततमोऽध्यायः

### भण्डारीतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत राजेन्द्र !भण्डारीतीर्थमुत्तमम् ।
दरिद्रच्छेदकरणं युगान्येकोनविंशतिः ॥ १ ॥
धनदेन तपस्तस्तप्त्वा प्रसन्ने पद्मसम्भवे । तत्रैव स्वल्पदानेन प्राप्तं वित्तस्यरक्षणम्
तत्र गत्वा तु यो भक्त्या स्नात्वा वित्तं प्रयच्छति ।
तस्य वित्तपरिच्छेदो न कदाचिद्भविष्यति ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे भण्डारीतीर्थमाहात्म्यवर्णनं नाम सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

# अष्टाधिकशततमोऽध्याय

## रोहिणीसोमनाथतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेन्महीपाल रोहिणीतीर्थमुत्तमम् । विख्यातं त्रिषु लोकेषु सर्वपापहरं परम्

युधिष्ठिर उवाच

रोहिणीतीर्थमाहात्म्य सर्वपापप्रणाशनम् ।
श्रोतुमिच्छामि तत्त्वेन तन्मे त्व वक्तुमर्हसि ॥ २ ॥

श्रीमार्कण्डेय उवाच

तस्मिन्नेकार्णवेघोरे नष्टे स्थावरजङ्गमे । उदधौ च शयानस्य देवदेवस्य चक्रिण
नाभौसमुत्थित पद्म रविमण्डलसन्निभम् । कर्णिकाकेसरोपेत पत्रैश्चसमलङ्कृतम्
तत्र ब्रह्मा समुत्पन्नश्चतुर्वदनपङ्कज । किं करोमीति देवेश आज्ञा मे दीयता प्रभो ।
एवमुक्तस्तु देवेश शङ्खचक्रगदाधर । उवाच मधुरा वाणीं तदा देव पितामहम्

सरस्वत्या महाबाहो लोक कुरु ममाज्ञया ।
भूतग्राममशेषस्य उत्पादनविधिक्षयम् ॥ ७ ॥

एतच्छ [illegible] वचन पद्मनाभस्यभारत । चिन्तयामास भगवान्सर्गनिहितकाम्यया
ब्रह्मणे चिन्तिता प्राज्ञा पुलहस्त्य पुलह क्रतु ।
प्राचेतसो वसिष्ठश्च भृगुर्नारद एव च ॥ ९ ॥
जज्ञे प्राचेतसो दक्षो महातेजा प्रजापति ।
दक्षस्यापि तथा जाता पञ्चाशद्दुहितरोऽनघ ॥ १० ॥

ददौ स दश धर्माय कश्यपाय त्रयोदश । तथैव स महाभाग सप्तविंशतिमिन्दवे ॥

रोहिणीनाम या तासां मध्ये तस्य नराधिप ।
अतिष्ट मवनारीणा भर्तुश्चैव विशेषत ॥ १२ ॥

ततः सा परमं कृत्वा वैराग्यं नृपसत्तम !। आगत्य नर्मदानीरे चचार विपुलं तपः॥
एकरात्रैस्त्रिरात्रैश्च षड्द्वादशभिरेव च । पक्षमासोपवासैश्च कर्शयन्ती कलेवरम् ॥

आराधयन्ती सततं महिषासुरनाशिनीम् ।
देवीं भगवतीं तात! सर्वार्त्तिविनिवारणीम् ॥ १५ ॥
स्नात्वा स्नात्वा जले नित्यं नर्मदायाः शुचिस्मिता ।
ततस्तुष्टा महाभागा देवी नारायणी नृप !॥ १६ ॥

प्रसन्ना ते महाभागे व्रतेन नियमेन च । एतच्छ्रुत्वा तु वचनं रोहिणीशशिनःप्रिया

यथा भवामि न चिरात्तथा भवतु मानदे !।
एवमस्त्विति सा चोक्त्वा भवानी भक्तवत्सला ॥ १८ ॥

स्तूयमाना मुनिगणैस्तत्रैवान्तरधीयत । तदाप्रभृतितत्तीर्थं रोहिणीशशिनःप्रिया
सञ्जाता सर्वकालं तु वल्लभा नृपसत्तम !। तत्रतीर्थे तुयानारीनरोवास्नातिभक्तितः

वल्लभा जायते सा तु भर्त्तुर्वै रोहिणी यथा ।
तत्र तीर्थे तु यः कश्चित्प्राणत्यागं करोति वै ॥ २१ ॥
सप्तजन्मानि दाम्पत्यवियोगो न भवेत्क्वचित् ॥ २२ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे रोहिणीसोमनाथतीर्थमाहात्म्यवर्णनं नामाऽ-
ष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

---

# नवाधिकशततमोऽध्यायः

## सेनापुरचक्रतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छन्महीपाल चक्रतीर्थमनुत्तमम् । सेनापुरमितिख्यातं सर्वपापक्षयकरम्
सैनापत्याभिषेकाय देवेदेवेन चक्रिणा । आनीतश्च महासेनो देवैः सेन्द्रपुरोगमैः

दानवाना वधार्थाय जयाय च दिवौकसाम् ।

भूमिदानेन विप्रेन्द्रास्तर्पयित्वा यथाविधि ॥ ३ ॥

शङ्खभेरीनिनादैश्च पटहाना च निस्वनैः । वीणावेणुमृदङ्गैश्च झल्लरीस्वरमङ्गलैः ॥
तत श्रुत्वा स्वन घोरं दानवो बलदर्पितः । कस्नाम विघातार्थमभिषेकस्यचागतः
हस्त्यश्वरथपत्त्यौघैः पूरयन्वै दिशो दश । तत्र तेन महद्युद्ध प्रवृत्त किल भारत

शक्त्यृष्टिपाशमुशलैः खड्गैस्तोमरपट्टिशैः ।

भल्लैः कर्णिकनाराचैः कबन्धपटसङ्कुले ॥ ७ ॥

ततस्तु ता शरव्रातैन्य सेना क्षणेन चापच्युतबाणवातैः ।
विध्वस्तहस्त्यश्वरथान्महात्मा जग्राह चक्र रिपुसङ्घनाशन ॥ ८ ॥
उग्रञ्च चक्र निशित भयङ्कर सुरासुराणा च सुदर्शन रणे ।
चकर्त वै यस्य शिरस्तदानी करात्प्रमुक्त मधुघातिनश्च तत् ॥ ९ ॥

त दृष्ट्वा सहसा विप्रमभिषेकषडानन । त्यक्त्वा तु तत्र संस्थानघघारविपुलतप

मुक्त चक्र विनाशाय हरिणा लोकधारिणा ।

छित्वा दानव हत्वा पपात विमले जले ॥ ११ ॥

तदा प्रभृति तत्तीर्थं चक्रतीर्थमिति श्रुतम् ।

सर्वपापविनाशाय निर्मित विश्वमूर्त्तिना ॥ १२ ॥

चक्रतीर्थे तु य स्नात्वा चापूजयेद्भवमच्युतम् । पुण्डरीकस्ययज्ञस्यफलमाप्नोतिमानव

तत्र तीर्थे तु यः स्नात्वा पूजयेद् ब्राह्मणाञ्छुभान् ।
शान्तदान्तजितक्रोधान् स लभेत्कोटिजं फलम् ॥ १४ ॥
तत्र तीर्थे तु यो भक्त्या त्यजते देहमात्मनः ।
विष्णुलोकं मृतो जाति जयशब्दादिमङ्गलैः ॥ १५ ॥
क्रीडयित्वा यथाकामंदेवगन्धर्वपूजितः । इहागत्य च भूयोऽपि जायतेविपुलेकुले
एतत्पुण्यं पापहरं धन्यं दुःखप्रणाशनम् ।
कथितं ते महाभाग! भूयश्चान्यच्छृणुष्व मे ॥ १७ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे रेवाखण्डे सेनापुरे चक्रतीर्थमाहात्म्यवर्णनं नाम नवोत्तरशततमोऽध्यायः ॥ १०९ ॥

---

## दशाधिकशततमोऽध्यायः

### धौतपापतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

धौतपापंततोगच्छेन्महापातकनाशनम् । समीपेचक्रतीर्थस्यविष्णुनानिर्म्मितंपुरा
निहतैर्दानवैर्वीरैर्देवदेवो जनार्द्दनः । तत्पापस्य विनाशार्थं दानवान्तोद्भवस्य च
तत्र तीर्थे जितक्रोधश्चचार विपुलं तपः । दुश्चरं मौनमास्थाय ह्यशक्यं देवदानवैः
स्नात्वा दत्त्वा द्विजातिभ्यो दानानि विविधानि च ।
तत्क्षणान्मुक्तपापस्तु गतस्तद्वैष्णवं पदम् ॥ ४ ॥
एवं युक्तस्तु यस्तत्र पापं कृत्वा सुदारुणम् ।
स्नात्वा जप्त्वा विधानेन मुच्यते सर्वपातकैः ॥ ५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे धौतपापतीर्थमाहात्म्यवर्णनंनामदशोत्तरशततमोऽध्यायः ॥ ११० ॥

# एकादशाधिकशततमोऽध्यायः

## स्कन्दतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

नर्मदादक्षिणे कूले तीर्थं परमशोभनम् । स्कन्देन निर्मितं पूर्वं तप कृत्वासुदारुणम्

युधिष्ठिर उवाच

स्कन्दस्यचरितं सर्वमाजन्मद्विजसत्तम । तीर्थस्यचविधिपुण्यं कथयस्वयथार्थतः

श्रीमार्कण्डेय उवाच

देवदेवेन वै तत्र तप पूर्वं युधिष्ठिर । चिरमेनसुरै सर्वैरुमादेवी विचारहिता ॥ ३॥

नास्ति सेनापतिः कश्चिद्देवानां सुरसत्तम ।
नीयन्ते दानवैर्घोरैः सर्वे देवाः सवासवाः ॥ ४ ॥
यथा निशा विना चन्द्रं दिवसो भास्करं विना ।
न शोभते मुहूर्तं वै तथा सेना विनायका ॥ ५ ॥

एवमुक्त्वा महादेव परया दययाविभो । सेनानीर्दीयतांकश्चिदित्रपुलर्षेपुविश्रुत

एतच्छ्रुत्वा शुभं वाक्यं देवानां परमेश्वरः ।
कामयान उमां देवीं सस्मार मनसा स्मरम् ॥ ७ ॥
तेन मूर्च्छितसर्वाङ्गः कामरूपो जगद्गुरुः ।
कामयामास रुद्राणीं दिव्यं वर्षशतं किल ॥ ८ ॥

देवराजस्ततो ज्ञात्वा महामैथुनगं हरम् । सम्मन्त्र्य देवतैः सार्द्धं प्रैषयज्जातवेदसम्

तेन गत्वा महादेवः परमानन्दसंस्थितः ।
सहसा तेन दृष्टोऽसौ हाहेत्युक्त्वा समुत्थितः ॥ १० ॥

ततः क्रुद्धा महादेवी शापवाक्यमुवाच ह । वेपमाना महाराज शृणुयत्तेवदाम्यहम्
अद्य यस्मात्सुरैः सर्वैर्याचितापुत्रजन्मनि । रत्यारतिश्चविफलासम्प्रेष्यजातवेदसम्

तस्मात्सर्वे पुत्रहीनाभविष्यन्तिन संशयः। हरेणोक्तस्ततोवह्निरस्माकंबीजमावह
यथा भवति लोकेषु तथा त्वं कर्तुमर्हसि।
मम तेजस्त्वया शक्यं गृहीतुं सुरसत्तम॥
देवकार्यार्थसिद्ध्यर्थं नाऽन्यः शक्तो जगत्त्रये॥ १४॥

अग्निरुवाच

तेजसस्तव मे देवकाशक्तिर्धारणेविभो। करोतिभस्मसात्सर्वंत्रैलोक्यंसचराचरम्

ईश्वर उवाच

उदरस्थेन बीजेन यदि ते जायते रुजा। तदा क्षिपस्व तत्तेजो गङ्गातोये हुताशन
एवमुक्त्वा महादेवो अमोघं बीजमुत्तमम्। हव्यवाहमुखे सर्वं प्रक्षिप्यान्तरधीयत
गते चादर्शनं देवे दह्यमानो हुताशनः। गङ्गातोये विनिक्षिप्य जगामस्वंनिवेशनम्
असहन्ती तु तत्तेजो गङ्गाऽपि सरितांवरा।
शरस्तम्बे विनिक्षिप्य जगामाऽऽशु यथागतम्॥ १६॥
तत्र जातं तु तद् दृष्ट्वा सर्वे देवाः सवासवाः।
कृत्तिकां प्रेषयामासुः स्तन्यं पाययितु तदा॥ २०॥
दृष्ट्वा ता आगताः सर्वा गङ्गागर्भं महामतेः।
षण्मुखैः षण्मुखो भूत्वा पिपासुरपिबत्स्तनम्॥ २१॥
जातकर्मादिसंस्कारान्वेदोक्तान्पद्मसम्भवः। चकारसर्वान्राजेन्द्र विधिदृष्टेनकर्मणा
षण्मुखात्षण्मुखो नाम कार्त्तिकेयस्तु कृत्तिकात्।
कुमारश्च कुमारत्वाद्गङ्गागर्भोऽग्निजोऽपरः॥ २३॥
एवं कुमारः सम्भूतो ह्यनधीत्य स वेदवित्।
शास्त्राण्यनेकानि वेद चचार विपुलं तपः॥ २४॥
देवारण्येषु सर्वेषु नदीषु च नदेषु च। पृथिव्यां यानितीर्थानि समुद्राद्यानिभारत
ततः पर्याययोगेन नर्मदातटमाश्रितः। नर्मदादक्षिणे कूले चचार विपुलं तपः॥ २६
ऋग्यजुःसामविहितं जपञ्जाप्यमहर्निशम्। ध्यायमानोमहादेवं शुचिर्धर्मनिसन्ततः

ततो वर्षसहस्रान्ते पूर्णे देवो महेश्वरः । उमया सहितः काले तदा वचनमब्रवीत्
ईश्वर उवाच
अहं ते वरदस्तात गौरी माता पिता ह्यहम् ।
वरं वृणीष्व यच्चेष्टं त्रिषु लोकेषु दुर्लभम् ॥ २९ ॥
षण्मुख उवाच
यदि तुष्टो महादेवः उमया सह शङ्कर । वृणोमि मातापितरौ गम्यागतिर्मतिर्मम
एतच्छ्रुत्वा शुभं वाक्यं पुत्रस्य वदनाच्च्युतम् ।
तथेत्युक्त्वा तु स्नेहेन प्रेम्णा तं परिषस्वजे ॥ ३१ ॥
ततस्त मूर्ध्न्युपाघ्राय ह्युमयोवाच शङ्करः ॥ ३२ ॥
ईश्वर उवाच
अक्षयश्चाव्ययश्चैव सेनानीस्त्वं भविष्यसि ॥ ३३ ॥
शिखी च ते वाहनं दिव्यरूपो दत्तो मया शक्तिधरस्य सङ्ख्ये ।
सुरासुरादींश्च जयेति चोक्त्वा जगाम कैलासवरं महात्मा ॥ ३४ ॥
गते चाऽदर्शनं देवे तदा स शिखिवाहनः ।
स्थापयित्वा महादेवं जगाम सुरसन्निधौ ॥ ३५ ॥
तदाप्रभृति तत्तीर्थं स्कन्दतीर्थमिति श्रुतम् ।
सर्वपापहरं पुण्यं मर्त्यानां भुवि दुर्लभम् ॥ ३६ ॥
तत्र तीर्थे तु यो राजन्भक्त्या स्नात्वाऽर्चयेच्छिवम् ।
गन्धमाल्याभिषेकैश्च वार्षिकं स लभेत्फलम् ॥ ३७ ॥
स्कन्दतीर्थे तु यः स्नात्वा पूजयेत्पितृदेवताः ।
तिलमिश्रेण तोयेन तस्य पुण्यफलं शृणु ॥ ३८ ॥
पिण्डदानेनचैकेन विधियुक्तेन भारत । द्वादशाब्दानितुष्यन्तिपितरोनाऽत्रसंशयः
तत्र तीर्थे तु राजेन्द्र शुभं वा यदि वाऽशुभम् । इहलोकेपरेचैवतत्सर्वं जायतेऽक्षयम्
तत्र तीर्थे तु यः कश्चित्प्राणत्यागं करिष्यति ।

शास्त्रयुक्तेन विधिना स गच्छेच्छिवमन्दिरम् ॥ ४१ ॥
कल्पमेकं वसित्वा तु देवगन्धर्वपूजितः। अत्र भारतवर्षे तु जायते विमले कुले ॥
वेदवेदाङ्गतत्त्वज्ञः सर्वव्याधिविवर्जितः। जीवेद्वर्षशतं साग्रं पुत्रपौत्रसमन्वितः ॥
इदं ते कथितं राजन्स्कन्दतीर्थस्य सम्भवम्।
धन्यं यशस्यमायुष्यं सर्वदुःखघ्नमुत्तमम् ॥
सर्वपापहरं पुण्यं देवदेवेन भाषितम् ॥ ४४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे स्कन्दतीर्थमाहात्म्यवर्णनंनामैकादशोत्तरशततमोऽध्यायः ॥ १११ ॥

---

## द्वादशाधिकशततमोऽध्यायः

### अङ्गिरसतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र! तीर्थमाङ्गिरसस्य तु। उत्तरे नर्मदाकूले सर्वपापविनाशनम्
पुराऽऽसीदङ्गिरानाम ब्राह्मणोवेदपारगः। पुत्रहेतोर्युगस्याऽर्द्धेमचारचिपुलं तपः
नित्यं त्रिषवणस्नायीजपन्देवंसनातनम्। पूजयंश्चमहादेवं कृच्छ्रचान्द्रायणादिभिः
द्वादशाब्दे ततः पूर्णे तुतोष परमेश्वरः।
वरेण च्छन्दयामास द्विजमाङ्गिरसं वरम् ॥ ४ ॥
वव्रे स तु महादेवं पुत्रं पुत्रवतां वरम्। वेदविद्याव्रतस्नातं सर्वशास्त्रविशारदम्।
देवानां मन्त्रिणं राजन्सर्वलोकेषु पूजितम्।
ब्रह्मलक्ष्म्याः सदावासमक्षयं चाव्ययं सुतम् ॥ ६ ॥
तथाभिलषितःपुत्रः सर्वविद्याविशारदः। भविष्यति न सन्देहश्चैवमुक्त्वाययौहरः
वरैरङ्गिरसश्चाऽपि बृहस्पतिरजायत। यथाऽभिलषितः पुत्रो वेदवेदाङ्गपारगः

जाते पुत्रेऽङ्गिरास्तत्र स्थापयामास शङ्करम् ।
हृष्टतुष्टमना भूत्वा जगामोत्तरपर्वतम् ॥ [illegible] ॥
तत्र चाङ्गिरसे तीर्थे य स्नात्वा पूजयेच्छिवम् ।
सर्वपापविनिर्मुक्तो रुद्रलोकं स गच्छति ॥ १० ॥
अपुत्रो लभते पुत्रमधनो धनमाप्नुयात् । इच्छते यश्च यं कामं स तं लभतिमान
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डेऽङ्गिरसतीर्थमाहात्म्यवर्णननाम द्वादशाधिकशततमोऽध्यायः ॥११२

---

## त्रयोदशाधिकशततमोऽध्यायः

### कोटितीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेत्सुराधीशकोटितीर्थमनुत्तमम् । ऋषिकोटिर्गतातत्र परांसिद्धिमुपागता
तत्र तीर्थे तु य स्नात्वा भोजयेद् ब्राह्मणाञ्छुचि ।
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ २ ॥
तत्र तीर्थे तु य स्नात्वा पूजयेत्पितृदेवता ।
पूजिते तु महादेवे वाजपेयफलं लभेत् ॥ ३ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डेकोटितीर्थमाहात्म्यवर्णननाम त्रयोदशाधिकशततमोऽध्याय ॥११३॥

---

## चतुर्दशाधिकशततमोऽध्यायः

### अयोनिसम्भवतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम् । अयोनिजं महापुण्यं सर्वपापप्रणाशनम्

अयोनिजे नरः स्नात्वा पूजयेत्परमेश्वरम् ।
पितृदेवार्च्चनं कृत्वा मुच्यते सर्वकिल्बिषैः ॥ २ ॥
तत्र तीर्थे तु विधिना प्राणत्यागं करोति यः ।
स कदाचिन्महाराज योनिद्वारं न पश्यति ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डेऽयोनिसम्भवतीर्थमाहात्म्यवर्णनं नामचतुर्दशाधिकशततमोऽध्यायः ॥

---

## पञ्चदशाधिकशततमोऽध्यायः

### अङ्गारकतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महाराज तीर्थमङ्गारकं परम् । रूपदं सर्वलोकानां विश्रुतं नर्मदातटे

अङ्गारकेण राजेन्द्र! पुरा तप्तं तपः किल ।
अर्बुदं च निखर्वं च प्रयुतं वर्षसङ्ख्यया ॥ २ ॥

ततस्तुष्टो महादेवः परया कृपया नृप । प्रत्यक्षदर्शी भगवानुवाच क्षितिनन्दनम्

वरदोऽस्मि महाभाग दुर्लभं त्रिदशैरपि ।
वरं दास्याम्यहं वत्स ! ब्रूहि यत्ते विवक्षितम् ॥ ४ ॥

अङ्गारक उवाच

तव प्रसादाद्देवेश सर्वलोकमहेश्वर। ग्रहमध्यगतो नित्यं विचरामि नभस्तले ॥२

यावद्धराधरो लोके यावच्चन्द्रदिवाकरौ।
मघो नक्षः समुद्राश्च घरो मे चाऽक्षयो भवेत ॥ ६ ॥
एवमस्त्विति देवेशो दत्त्वा वरमनुत्तमम्।
जगामाऽऽकाशमाविश्य वन्द्यमानः सुरासुरैः ॥ ७ ॥
भूमिपुत्रस्ततस्तस्मिन्स्थापयामास शङ्करम्।
गतः सुरालये लोके ग्रहभावे निवेशितः ॥ ८ ॥

तत्तीर्थेतु स्नात्वा पूजयेत्परमेश्वरम्। हुतहोमो जितक्रोधः सोऽश्वमेधफलंलभेत्

चतुर्थ्यङ्गारके यस्तु स्नात्वा चाभ्यर्चयेद् ग्रहम्।
अङ्गारकं विधानेन सप्तजन्मानि भारत ॥ १० ॥
दशयोजनविस्तीर्णे मण्डले रूपवान्भवेत्।
तत्रैव तु मृतो जन्तुः कामतोऽकामतोऽपि वा ॥
रुद्रस्याऽनुचरो भूत्वा तेनैव सह मोदते ॥ ११ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डेऽङ्गारकतीर्थमाहात्म्यवर्णनं नाम
पञ्चदशोत्तरशततमोऽध्यायः ॥ ११५ ॥

---

## षोडशाधिकशततमोऽध्यायः

### पाण्डुतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

पाण्डुतीर्थं ततो गच्छेत्सर्वपापविनाशनम् ।
तत स्नात्वा नरो राजन्! मुच्यते सर्वकिल्बिषैः ॥ १ ॥
तत्र तीर्थे तु यः स्नात्वा दापयेत्काञ्चनं शुचिः ।
भ्रूणहत्यादिपापानि नश्यन्ते नाऽत्र संशयः ॥ २ ॥
पिण्डोदकप्रदानेन वाजपेयफलं लभेत् ।
पितरः पितामहाश्च नृत्यन्ते च प्रहर्षिताः ॥ ३ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे पाण्डुतीर्थमाहात्म्यवर्णनं नामषोडशाधिकशततमोऽध्यायः ॥

---

## सप्तदशाधिकशततमोऽध्यायः

### त्रिलोचनतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र पुण्यं तीर्थंत्रिलोचनम् । तत्रतिष्ठतिदेवेशःसर्वलोकनमस्कृतः
तत्र तीर्थे तु यः स्नात्वा भक्त्याऽर्चयति शङ्करम् ।
रुद्रस्य भवनं याति मृतो नास्त्यत्र संशयः ॥ २ ॥
कल्पक्षये ततः पूर्णे क्रीडित्वा च इहागतः ।

आचियोगेन तिष्ठेत पूज्यमान शतं समाः॥ ३॥
इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे त्रिलोचनतीर्थमाहात्म्यवर्णननाम सप्तदशोत्तरशततमोऽध्यायः॥११७॥

---

## अष्टादशाधिकशततमोऽध्यायः

### इन्द्रतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम्। इन्द्रतीर्थमिति विख्यातं नर्मदादक्षिणे तटे

युधिष्ठिर उवाच

नर्मदादक्षिणे कूले इन्द्रतीर्थं कथम्भवेत्।
श्रोतुमिच्छामि विप्रेन्द्र आदिमध्यान्तविस्तरैः॥ २॥
एतच्छ्रुत्वा तु वचनं धर्मपुत्रस्य धीमतः। कथयामास तद्वृत्तमितिहासम्पुरातनम्

श्रीमार्कण्डेय उवाच

विश्वासयित्वा सुचिरं धर्मशत्रुं महाबलम्।
वृत्रं जित्वाऽथ हत्वा तु गच्छमानं शचीपतिम्॥ ४॥
निष्क्रामन्मार्गेण ब्रह्महत्या दुरासदा। अहोरात्रमविश्रान्ता जगामभुवनत्रयम्
यतोयतो ब्रह्महा याति यानेन शोभनम्।
दिशो भागं सुरे सार्द्धं ततो हत्या न मुञ्चति॥ ६॥
ब्रह्महत्यासुरापानस्तेयगुर्वङ्गनागमम्। पातकानामतिर्ह स्यानतु विश्वासघातिनाम्
पापकर्ममुखं दृष्ट्वा स्नानदानैर्विशुध्यति। नारीवापुरुषोवाऽपि नैव विश्वासघातिनः
एवमादीनि चान्यानि शृणु वाक्यानि देवराट्।
वचनं तद्विर्धर्म्महं विशदमगमत्परम्॥ ९॥

त्यक्त्वा राज्यं सुरैः सार्धं जगाम तप उत्तमम् ।
पुत्रदारगृहं राज्यं वसूनि विविधानि च ॥ १० ॥
फलान्येतानिधर्मस्यशोभयन्तिजनेश्वरम् ।फलंधर्मस्यभुञ्जेतिसुहृत्स्वजनबान्धवाः
पश्यतां सर्वमेतेषां पापमेकेन भुज्यते । परं हि सुखमुत्सृज्य कर्शयन्वै कलेवरम् ॥
देवराजो जगामाऽसौ तीर्थान्यायतनानि च ।
गङ्गातीर्थेषु सर्वेषु यामुनेषु तथैव च ॥ १३ ॥
सारस्वतेषु सर्वेषु समुद्रेषु पृथक्पृथक् । नदीषु देवखातेषु तडागेषु सरःसु च ॥
पापं न मुञ्चते सर्वं पश्चाद्देवसमागमे । रेवाप्रभवतीर्थेषु कूलयोरुभयोरपि ॥ १५ ॥
पूजयन्वै महादेवं स्कन्दतीर्थं समासदत् ।
तत्र स्थित्वोपवासैश्च कृच्छ्रचान्द्रायणादिभिः ॥ १६ ॥
कर्शयन्वैस्वकंदेहंनलेभेशर्मवैक्वचित् । ग्रीष्मेपञ्चाग्निमध्यस्थो वर्षासुस्थण्डिलेशयः
आर्द्रवासास्तुहेमन्तेचचारविपुलं तपः । एवं तु तपतस्तस्य इन्द्रस्यविदितात्मनः
वत्सराणां सहस्राणि गतानि दश भारत । ततस्त्वेकादशे प्राप्ते वर्षेतु नृपसत्तम!
सहसा भगवान्देवस्तुतोष परमेश्वरः । तथा ब्रह्मर्षयः सिद्धा ब्रह्मविष्णुपुरोगमाः
तत्राऽऽजग्मुः सुराः सर्वे यत्र देवः शतक्रतुः ।
दृष्ट्वा समागतान्देवानृषींश्चैव महामतिः ॥ २१ ॥
उवाच प्रणतो भूत्वा सर्वदेवपुरोहितः । विदितं सर्वमेतेषां यथा वृत्रवधः कृतः ॥
युष्माकं चाऽऽज्ञया पूर्वं ब्रह्मविष्णुमहेश्वराः ।
तथाऽप्येवं ब्रह्महणं मत्त्वा पापस्य कारिणम् ॥ २३ ॥
भ्रमन्तं सर्वतीर्थेषु ब्रह्महत्या न मुञ्चति ।
न नन्दति जगत्सर्वं त्रैलोक्यं सचराचरम् ॥ २४ ॥
यथाविहीनचन्द्रार्कंतथाराज्यमनायकम् । तस्मात्सर्वेसुरश्रेष्ठाविज्ञाप्यंममसम्प्रति
कुर्वन्तु शक्रं निर्दोषं तथा सर्वे महर्षयः । बृहस्पतिमुखोद्गीर्णं श्रुत्वा तद्वचनंशुभम्
ततः प्रोवाच भगवान् ब्रह्मालोकपितामहः । एतत्पापं महाघोरं ब्रह्महत्यासमुद्भवम्

दैवतेभ्योऽथ भूतेभ्यश्चतुर्भागं क्षिपाम्यहम् ।
एवं मुक्त्वाऽक्षिपच्चैनो जलोपरि महामति ॥ २८ ॥
अवगाहनतः पेयाआपो वै नान्यथा बुधैः । धरायामक्षिपद्भागं द्वितीयं पद्मसम्भवः
अभक्ष्या तेन सञ्जाता सदाकालं वसुन्धरा ।
तदर्धमस्त्रं नारीणां क्षिप्तं येऽहि युधिष्ठिर ॥ ३० ॥
निक्षिप्य भगवान्देव पुनरन्यज्जगाद ह । असम्भाष्या त्वसंस्पृश्या तेनजाता रजस्वला
चतुर्दिनानि सा प्राशे पापस्य महतो महात् ।
चतुर्थं तु ततो भागं विभज्य परमेश्वर ॥ ३२ ॥
कृषिगोरक्ष्यवाणिज्ये शूद्रसेवाकरे द्विजे । ततोऽभिनन्दयामासु सर्वेदेवामहव्यय
देवेन्द्र वाग्भिरिष्टाभिर्नर्मदाजलसंस्थितम् । वरेणाच्छन्दयामासततस्तुष्टोमहेश्वरः
वरं दास्यामि देवेश वरं वृणु यथेप्सितम् ॥ ३५ ॥
इन्द्र उवाच
यदितुष्टोऽसि देवेशयदिदेयोवरोमम । अत्र संस्थापयिष्यामि सदासन्निहितोभव
एवमस्त्विति चोक्त्वा स ब्रह्मविष्णुमहेश्वराः ।
जग्मुराकाशमाविश्य स्तूयमाना महर्षिभिः ॥ ३७ ॥
गतेषु देवदेवेषु देवराज शतक्रतु । स्थापयित्वा महादेवं जगाम त्रिदशालयम् ॥
इन्द्रतीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ।
महापातकयुक्तोऽपि मुच्यते सर्वपातकैः ॥ ३९ ॥
इन्द्रतीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ।
सोऽश्वमेधस्य यज्ञस्य पुष्कलं फलमश्नुते ॥ ४० ॥
एतत्ते कथितं सर्वं तीर्थमाहात्म्यमुत्तमम् ।
श्रुतमात्रेण येनैव मुच्यन्ते पातकैर्नराः ॥ ४१ ॥
इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे इन्द्रतीर्थमाहात्म्यवर्णननामाष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

# एकोनविंशत्यधिकशततमोऽध्यायः

## कल्होडीतीर्थमाहात्म्यवर्णनम्

### श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र कल्होडीतीर्थमुत्तमम् । रेवायाश्चोत्तरेकूले सर्वपापविनाशनम्
हितार्थंसर्वभूतानामृषिभिःस्थापितम्पुरा । तपसातुसमुद्धृत्यनर्मदायांमहाम्भसि
स्नात्वा तु कपिलातीर्थे कपिलां यः प्रयच्छति ।
श्रुत्वा चाऽऽख्यानकं दिव्यं ब्राह्मणाच्छृणु यत्फलम् ॥ ३ ॥
सर्वेषामेव दानानां कपिलादानमुत्तमम् । ब्राह्मणान्वेषितं पूर्वमृषिदेवसमागमे ॥
सद्यः प्रसूतां कपिलां शोभनां यः प्रयच्छति ।
सोपवासो जितक्रोधस्तस्य पुण्यफलं शृणु ॥ ५ ॥
ससमुद्रगुहा तेन सशैलवनकानना । दत्ता चैव महाबाहो पृथिवी नात्र संशयः ।
वाचिकं मानसंपापंकर्मणायत्पुराकृतम् । नश्यते कपिलां दत्त्वासप्तजन्मार्जितंनृप
भूमिदानं धनं धान्यं हस्त्यश्वकनकादिकम् ।
कपिलादानस्यैकस्य कलां नार्हन्ति षोडशीम् ॥ ८ ॥
तत्र तीर्थे नरः स्नात्वा कपिलां यः प्रयच्छति ।
मृतो विष्णुपुरं याति गीयमानोऽप्सरोगणैः ॥ ६ ॥
यावन्ति तस्या रोमाणि सवत्सायास्तु भारत ! ।
तावद्वर्षसहस्राणि स स्वर्गे क्रीडते चिरम् ॥ १० ॥
ततोऽवकीर्णकालेन त्विह मानुष्यतांगतः । धनधान्यसमोपेतो जायतेविपुलेकुले
वेदविद्याव्रतस्नातः सर्वशास्त्रविशारदः ।
व्याधिशोकविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ १२ ॥
एतत्ते सर्वमाख्यातं कल्होडीतीर्थमुत्तमम् ।

यत्कृत्वा सर्वपापेभ्यो मुच्यते नाऽत्र संशयः ॥ १३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे स्कन्दोदतीर्थमाहात्म्यवर्णनं नामैकोनविंशत्युत्तरशततमोऽध्यायः ॥

---

## विंशाधिकशततमोऽध्यायः

### कम्बुकेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

अतः परं प्रवक्ष्यामि कम्बुकेश्वरमुत्तमम् । हिरण्यकशिपुर्दैत्यो दानवो बलदर्पितः ॥

अवध्यः सर्वलोकानां त्रिषु लोकेषु विश्रुतः ।

तस्य पुत्रो महातेजाः प्रह्लादो नाम नामतः ॥ २ ॥

विष्णुप्रसादाद्लब्ध्वा च तस्य राज्ये प्रतिष्ठितः ।

विरोचनस्तस्य सुतस्तस्याऽपि बलिरेव च ॥ ३ ॥

बलिपुत्रोऽभवद्बाणस्तस्मादपि च शम्बरः ।

शम्बरस्याऽन्वये जातः कम्बुनाममहासुरः ॥ ४ ॥

ज्ञात्वा चिरंगुमयं घोरं महद्भयमुपस्थितम् ।

दानवानां विनाशाय नाऽन्यो हेतुः कदाचन ॥ ५ ॥

स यक्त्वा पुत्रदारांश्च सुहृद्बन्धुपरिग्रहान् । चचार मौनमास्थाय तपः कम्बुर्महामतिः

अक्षसूत्रकरो भूत्वा दण्डी मुण्डश्च मेखली । शाकयावकभक्षश्च वल्कलाजिनसंवृतः

स्नात्वा नित्यं धृतिपरो नर्मदानलमाश्रितः । पूजयंस्तु महादेवमब्दं द चरसहस्रया

ततस्तुतोष भगवान्देवदेवो महेश्वरः । उवाच दानवं काले मेघगम्भीरया गिरा ॥

भो भो कम्बो महाभाग तुष्टोऽहं तव सुव्रत ।

दृष्टं व्रतानां परमं मौनं सर्वार्थसाधनम् ॥ १० ॥

रितं च त्वयालोके देवदानवदुश्चरम्। वरं वृणीष्व भद्रं ते यत्ते मनसि रोचते ॥

कम्बुरुवाच

यदि प्रसन्नो देवेश यदिदेयो वरोमम। अक्षय्यश्चाव्ययश्चैव स्वेच्छयाविचराम्यहम्
दैत्यदानवसङ्घानां संयुगेष्वपलायिता। भयञ्चानन्यत्रविद्येत मुक्त्वादेवंगदाधरम्
तस्याऽहं संयुगे साध्यो येनोपायेन शङ्कर !।
भवामि न सदा कालं तं वदस्व वरं मम ॥ १४ ॥

ईश्वर उवाच

ममसन्निहितोयत्र त्वं भविष्यसिदानव। तत्रविष्णुभयंनास्तिवसात्राविगतज्वरः
तस्यदेवाधिदेवस्य वेदगर्भस्य संयुगे। शङ्खचक्रधरस्येशा नाऽहं सर्वे सुरासुराः ॥
किंपुनर्योद्धिपत्येनंलोकालोकप्रभुं हरिम्। स सुखी वर्त्तते कालं न निमेषं मतं मम
तस्मात्त्वंपरयाभक्त्यासर्वभूतहितेरतः। वसिष्यसिचिरंकालमित्युक्त्वादर्शनंगतः
गतेचाऽदर्शनंदेवे तत्र तीर्थे महामतिः। स्थापयामास देवेशं शिवंशान्तमनामयम्
तस्मिंस्तीर्थेमहादेवंस्थापयित्वादिवंगतः। तदाप्रभृतितत्पार्थकम्बुतीर्थमितिश्रुतम्
विख्यातं सर्वलोकेषु महापातकनाशनम् ॥ २० ॥
कम्बुतीर्थे नरः स्नात्वा विधिनाऽभ्यर्च्य भास्करम्।
ऋग्यजुःसाममन्त्रैश्च स्तूयमानो नृपोत्तम !॥ २१ ॥
तस्य पुण्यं समुद्दिष्टं ब्राह्मणैर्वेदपारगैः। तत्सर्वं तु शृणुष्वाऽद्य ममैव गदतो नृप
ऋग्यजुः सामगीतेषु साङ्गोपाङ्गेषु यत्फलम्।
तत्फलं समवाप्नोति गायत्रीमात्रमन्त्रवित् ॥ २३ ॥
तत्रतीर्थे तुयः स्नात्वा तर्पयेत्पितृदेवताः। पूजयेद्देवमीशानं सोऽग्निष्टोमफलं लभेत्
अकामो वा सकामो वा तत्र तीर्थे कलेवरम्।
यस्त्यजेन्नात्र सन्देहो रुद्रलोकं स गच्छति ॥ २५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे कम्बुकेश्वरतीर्थमाहात्म्यवर्णनं नामविंशत्यधिकशततमोऽध्यायः ॥

# एकत्रिंशदधिशततमोऽध्यायः

## चन्द्रहासेसोमतीर्थ माहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेन्महीपाल चन्द्रहासमतःपरम् । यत्रसिद्धिपरा प्राप्तः सोमराजःसुरोत्तमः

युधिष्ठिर उवाच

कथं सिद्धि परा प्राप्तः सोमनाथो जगत्पतिः ।
तत्सर्वं श्रोतुमिच्छामि कथयस्व ममाऽनघ ॥ २ ॥

श्रीमार्कण्डेय उवाच

पुरा शप्तो मुनीन्द्रेण दक्षेणकिलभारत । असेवनाद्धि दाराणांक्षयरोगीभविष्यसि

उद्वाहितानां पत्नीनां ये न कुर्वन्ति सेवनम् ।
या निष्ठा जायते नृणां तां शृणुष्व नराधिप ॥ ४ ॥
ऋतावृतौ हि नारीणां सेवनाज्जायते सुतः ।
सुतात्स्वर्गश्च मोक्षश्च इत्येवं श्रुतिभाषितम् ॥ ५ ॥

तत्कालोचितधर्मेणत्रेष्टितोरोविपनेत् । तस्यास्तद्रुधिरपाप पितनैकालमाप्सितम्

ततोऽवतीर्णः कालेन या या योनिं प्रयास्यति ।
तस्यां तस्यां स दुष्टात्मा दुर्भगो जायते सदा ॥ ७ ॥
नारीणां तु सदा कामोऽभ्यधिकः परिवर्तते ।
विशेषेण ऋतौ काले पीड्यते कामसायकैः ॥ ८ ॥
परिभूता हि ता भर्त्रा ध्यायन्तेऽन्य पतिं स्त्रियः
ततः पुत्रः समुत्पन्नो हन्ते कुलमुत्तमम् ॥ ६ ॥

स्वर्गस्थास्तेन पितरःपूर्वजास्तेपितामहाः । पतन्तिजातमात्रेणकुलटस्तेनचोच्यते
तेनकर्मविपाकेनक्षयरोग्यभवच्छशी । त्यक्त्वालोकंसुरेन्द्राणां मर्त्यलोकमुपागतः

ततस्तीर्थान्यनेकानि पुण्यान्यायतनानि च ।
भ्रमंश्च नर्मदां प्राप्तः सर्वपापप्रणाशनीम् ॥ १२ ॥
उपवासं च दानानि व्रतानि नियमांस्तथा ।
चचार द्वादशाब्दानि ततो मुक्तः स किल्बिषैः ॥ १३ ॥
स्नापयित्वा महादेवं सर्वपातकनाशनम् । जगाम प्रभया पूर्णः स च लोकमनुत्तमम्
येनैवस्थापितो देवः पूज्यते वर्षसङ्ख्यया । तावद्वर्षसहस्राणि रुद्रलोकेसपूज्यते
तेन देवान्विधानोक्तान्स्थापयन्ति नरा भुवि ।
अक्षयं चाव्ययं यस्मात्कालं भुञ्जन्ति मानवाः ॥ १६ ॥
सोमतीर्थे नरः स्नात्वा पूजयेद्देवमीश्वरम् । न भ्राजते नरोलोके सोमवत्प्रियदर्शनः
चन्द्रहासेतु योगत्वाग्रहणेचन्द्रसूर्ययोः । स्नानंसमाचरेद्भक्त्यामुच्यतेसर्वकिल्बिषैः
तत्र स्नानं च दानं च चन्द्रहासे शुभाऽशुभम् । कृतं नृपवरश्रेष्ठ! सर्वंभवतिचाक्षयम्
ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।
चन्द्रहासे तु ये स्नात्वा पश्यन्ति ग्रहणं नराः ॥ २० ॥
वाचिकं मानसं पापं कर्मजं यत्पुराकृतम् । स्नानमात्रेण राजेन्द्र तत्रतीर्थेप्रणश्यति
बहवस्तं न जानन्ति महामोहसमन्विताः । देहस्थमिवसर्वेषां परमानन्दरूपिणम्
पश्चिमे सागरे गत्वा सोमतीर्थे तु यत्फलम् ।
तत्समग्रमवाप्नोति चन्द्रहासे न संशयः ॥ २३ ॥
संक्रान्तौच व्यतीपाते अयने विषुवेतथा । चन्द्रहासे नरःस्नात्वासर्वपापैःप्रमुच्यते
ते मूढास्ते दुराचारास्तेषां जन्म निरर्थकम् ।
चन्द्रहासं न जानन्ति ये रेवायां व्यवस्थितम् ॥ २५ ॥
चन्द्रहासे तु यः कश्चित्संन्यासं कुरुते द्विजः ।
अनिवर्त्तिका गतिस्तस्य सोमलोकान्न संशयः ॥ २६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे चन्द्रहासतीर्थमाहात्म्यवर्णनंनामैकविंशत्यधिकशततमोऽध्यायः ॥

# द्वाविंशत्यधिकशततमोऽध्यायः

## कोहनतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेन्महीपाल कोहनस्येति विश्रुतम् । सर्वपापहरं पुण्यं तीर्थं मृत्युविनाशनम्
पुरा तत्र द्विजः कश्चिद्वेदवेदाङ्गपारगः । पत्नीपुत्रसुहृद्वर्गैः स्वकर्मनिरतोऽभवत् ॥

युधिष्ठिर उवाच

ब्राह्मणस्य तु यत्कर्म उत्पत्तिः क्षत्रियस्य तु ।
वैश्यस्याऽपि च शूद्रस्य तत्सर्वं कथयस्व मे ॥ ३ ॥
धर्मस्यार्थस्य कामस्य मोक्षस्य च परं विधिम् ।
निखिलं ज्ञातुमिच्छामि नान्यो वेत्ता मतिर्मम ॥ ४ ॥

मार्कण्डेय उवाच

उत्पत्तिकारणं ब्रह्मा देवदेवः प्रकीर्तितः । प्रथमं सर्वभूतानां चराचरजगद्गुरुः ॥
द्विजास्तयो मुखाज्जाताः क्षत्रिया बाहुतस्ततः ।
ऊरुदेशाद्वैश्यास्तु शूद्रा पादेभ्यथाऽभवन् ॥ ६ ॥
ततस्त्वन्ये पृथग्वर्णाः पृथग्धर्मान्समाचरन् । पर्यायेणसमुत्पन्ना ह्यनुलोमविलोमतः
तेषां धर्मं प्रवक्ष्यामि श्रुतिस्मृत्यर्थचोदितम् ।
येन सम्यक्कृतेनैव सर्वे यान्ति परां गतिम् ॥ ८ ॥
गतिः र्थान विना भक्तैर्ब्राह्मणैः प्राप्यते नृप ॥
अध्यापयन्यतो वेदान्वेद वाऽपि यथाविधि ॥ ९ ॥
कुलजां रूपसम्पन्नां सर्वलक्षणलक्षिताम् । उद्वाहयेत्ततः पत्नीं गुरुणाऽनुमते ;तदा
ततः स्मार्तं विवाहाग्निं श्रौतं वा पूजयेत्क्रमात् ।
प्रतिग्रहधनो भूत्वा दम्भलोभविवर्जितः ॥ ११ ॥

पञ्चयज्ञविधानानि कारयेद्धि यथाविधि । धनंगच्छेत्ततःपश्चाद्द्वितीयाश्रमसेवनात्
पुत्रेषु भार्यां निक्षिप्य सर्वसङ्गविवर्जितः । इष्टाँल्लोकानवाप्नोति न चेहजायतेपुनः
क्षत्रियस्तु स्थितो राज्ये पालयित्वा वसुन्धराम् ।
शश्वद्धर्ममनाश्चैव प्राप्नोति परमां गतिम् ॥ १४ ॥
वैश्यधर्मो न सन्देहः कृषिगोरक्षणे रतः । सत्यशौचसमोपेतो गच्छते स्वर्गमुत्तमम्
न शूद्रस्यपृथग्धर्मोविहितःपरमेष्ठिना । न मन्त्रोनच संस्कारो न विद्यापरिसेवनम्
न शब्दविद्यासमयो देवताभ्यर्चनानि च । यथा जातेन सततं वर्त्तितव्यमहर्निशम्
स धर्मः सर्ववर्णानां पुरा सृष्टः स्वयम्भुवा ।
मन्त्रसंस्कारसम्पन्नास्त्रयोवर्णा द्विजातयः ॥ १८ ॥
तेषां मतमनादृत्य यदि वर्त्तेत कामतः । स मृतो जायते श्वा वै गतिरूर्ध्वानविद्यते
न तेषां प्रेषणं नित्यं तेषां मतमनुस्मरन् ।
यशोभागी स्वधर्मस्थः स्वर्गभागी स जायते ॥ २० ॥
एवंगुणगणाकीर्णोऽवसद्विप्रःनभारत !। हनस्वेतिहनस्वेतिश्रृणोतिवाक्यमीदृशम्
ततो निरीक्षते चोर्ध्वमधश्चैव दिशो दश ।
वेपमानः स भीतश्च प्रस्खलंश्च पदे पदे ॥ २२ ॥
शृङ्खलायुधहस्तैश्च पाशैश्चैव सुदारुणैः । वेष्टितं महिषारूढं नरं पश्यति सन्मुखम्
कृष्णाञ्जनचयप्रख्यं कृष्णाम्बरविभूषितम् । रक्ताक्षमायतभुजंसर्वलक्षणलक्षितम्
दृष्ट्वा तं तु समायान्तं निरीक्ष्यात्मानमात्मना ।
जपञ्जाप्यं च परमं शतरुद्रीयसंस्तवम् ॥ २५ ॥
ततः प्रोवाच भगवान्यमः संयमनो महान् । श्रृणुवाक्यमतोब्रह्मन्यमोऽहं सर्वजन्तुषु
संहरस्वमहाभागरुद्रजाप्यंसुदुर्भिदम् । येनाऽहंकालपाशैस्त्वां संयमाभिगतव्यथः
तच्छ्रुत्वा निष्ठुरं वाक्यं यमस्य मुखनिर्गतम् ।
महाभयसमोपेतो ब्राह्मणः प्रपलायितः ॥ २८ ॥
तस्यमार्गे गताः सर्वेयमेनसह किङ्कराः । तिष्ठतिष्ठेतितंविप्रमूचुस्तेसोऽप्यधावत

स्मरमाणः परिश्रान्तो हा हतोऽहं दुरात्मभिः ।
रक्ष रक्ष महादेव ! शरणागतवत्सल ! ॥ ३० ॥
एवमुक्त्वाऽपतद्भूमौ लिङ्गमालिङ्ग्य भारत !।
गतसत्त्वः स विप्रेन्द्रः समाश्रित्य सुरेश्वरम् ॥ ३१ ॥
तं दृष्ट्वा पतितं भूमौ देवदेवो महेश्वरः । को हनिष्यति मा भैस्त्वं हुङ्कारमकरोत्तदा
तेन ते किङ्कराः सर्वे यमेन सह भारत !।
हुङ्कारेण गताः सर्वे मेघा वातहता यथा ॥ ३३ ॥
तदाप्रभृति तत्तीर्थं कोहनस्येति विश्रुतम् । सर्वपापहरं पुण्यं सर्वतीर्थेष्वनुत्तमम्
तत्रतीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् । अग्निष्टोमस्य यज्ञस्य फलमाप्नोत्यनुत्तमम्
तत्र तीर्थे तु राजेन्द्र ! प्राणत्यागं करोति यः ।
न पश्यति यमं देवमित्येवं शङ्करोऽब्रवीत् ॥ ३६ ॥
अग्निप्रवेशं यः कुर्याज्जले वा नृपसत्तम !। अग्निलोके वसेत्तावद्यावत्कल्पशतत्रयम्
एवं वरुणलोकेऽपि वसित्वा कालमीप्सितम् ।
इहलोकमनुप्राप्तो महाधनपतिर्भवेत् ॥ ३८ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे कोहनतीर्थमाहात्म्यवर्णनं नाम द्वाविंशत्यधिक-
शततमोऽध्यायः ॥ १२२ ॥

# त्रयोविंशत्यधिकशततमोऽध्यायः

## कर्मदेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र कर्मदातीर्थमुत्तमम्। यत्र तिष्ठतिविघ्नेशोगणनाथोमहाबलः

तत्र तीर्थे नरः स्नात्वा चतुर्थ्यां वा ह्युपोषितः।
विघ्नं न विद्यते तस्य सप्तजन्मनि भारत!॥ २॥
तत्र तीर्थे हि यत्किञ्चिद्दीयते नृपसत्तम!।
तदक्षयफलं सर्वं जायते नाऽत्र संशयः॥ ३॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्त्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे कर्मदेश्वरतीर्थमाहात्म्यवर्णनं नामत्रयोविंशत्यधिकशततमोऽध्यायः॥

---

# चतुर्विंशत्यधिकशततमोऽध्यायः

## नर्मदेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल!नर्मदेश्वरमुत्तमम्। तत्रतीर्थेनरः स्नात्वा मुच्यतेसर्वकिल्बिषैः
अग्निप्रवेशश्चजलेऽथवामृत्युरनाशके। अनिवर्त्तिकागतिस्तस्ययथामेशङ्करोऽब्रवीत्

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्त्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदेश्वरतीर्थमाहात्म्यवर्णनं नामचतुर्विंशाधिकशततमोऽध्यायः॥

---

## पञ्चत्रिंशत्यधिकशततमोऽध्यायः

### रवितीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल रवितीर्थमनुत्तमम् । यत्र देवसहस्रांशुस्तप्त्वा दिवंगतः

युधिष्ठिर उवाच

कथं देवो जगद्धाता सर्वदेवनमस्कृतः । तपस्तपति देवेशस्तापसो भास्करो रविः
आराध्यः सर्वभूतानां सर्वदेवैश्च पूजितः । प्रत्यक्षो दृश्यते लोके सृष्टिसंहारकारकः
आदित्यस्य कथं नाम कथं भास्कर उच्यते ।
सर्वमेतत्समासेन कथयस्व ममानघ ॥ ४ ॥

मार्कण्डेय उवाच

महाप्रश्नो महाराज यस्त्वया परिपृच्छितः ।
तत्परं सम्प्रवक्ष्यामि नमस्कृत्य स्वयम्भुवम् ॥ ५ ॥
आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ ६
ततस्तेनाण्डं दिव्यं च सप्तपिण्डमनुत्तमम् ।
आकाशात्तु यथैवोल्का सृष्टिहेतोरधोमुखी ॥ ७ ॥
तत्र जातोऽन्तः पुरुषः सजातः सर्वभूषितः ।
स शिवोऽपाणिपादश्च येन सर्वमिदं ततम् ॥ ८ ॥
तस्योत्पन्नस्य भूतस्य तेजोरूपस्य भारत ।
पश्चात्प्रजापतिर्भूय काले कालान्तरेण वै ॥ ९ ॥
अग्निजातः सभूतानामनुष्यासुररक्षसाम् । सर्वदेवाधिदेवश्च आदित्यस्तेन चोच्यते
आर्तो तस्य नमस्कारोऽन्येषां च तदनन्तरम् ।
क्रियन्ते स्वर्गे सर्वैस्तेन सर्वैर्महर्षिभिः ॥ ११ ॥

तिस्रः सन्ध्यास्त्रयो देवाः सान्निध्याः सूर्यमण्डले ।
नमस्कृतेन सूर्येण सर्वे देवाः नमस्कृताः ॥ १२ ॥
न दिवा न भवेद्रात्रिः षण्मासा दक्षिणायनम् ।
अयनं चोत्तरं चाऽपि भास्करेण विना नृप !॥ १३ ॥
स्नानंदानंजपोहोमःस्वाध्यायो देवतार्च्चनम् । न वर्त्ततेविनासूर्यं तेनपूज्यतमोरविः
शब्दगाःश्रुतिमुख्याश्चब्रह्मविष्णुमहेश्वराः । प्रत्यक्षोभगवान्देवो दृश्यतेलोकपावनः
उत्पत्तिः प्रलयस्थानं निधानं बीजमव्ययम् ।
हेतुरेको जगन्नाथो नाऽन्यो विद्येत भास्करात् ॥ १६ ॥
एवमात्मभवंकृत्वाजगत्स्थावरजङ्गमम् । लोकानांतुहितार्थायस्थापयेद्धर्मपद्धतिम्
नर्मदातटमाश्रित्य स्थापयित्वाऽऽत्मनस्तनुम् ।
सहस्रांशु निधिं धाम्नां जगामाऽऽकाशमव्ययम् ॥ १८ ॥
तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् । सहस्रकिरणंदेवं नाममन्त्रविधानतः
तेन तप्तं हुतं तेन तेन सर्वमनुष्ठितम् । तेन सम्यग्विधानेन सम्प्राप्तं परमम्पदम् ॥
ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।
स्नात्वा ये नर्मदातोये देवं पश्यन्ति भास्करम् ॥ २१ ॥
तथादेवस्यराजेन्द्र ये कुर्वन्ति प्रदक्षिणम् । अनन्यभक्त्यासततंत्रिरक्षरसमन्विताः
तेन पूतशरीरास्ते मन्त्रेण गतपातकाः । यत्पुण्यं च भवत्तेषां तदिहैकमनाः शृणु
ससमुद्रगुहा तेन सशैलवनकानना । प्रदक्षिणीकृता सर्वा पृथिवी नाऽत्र संशयः
मन्त्रमूलमिदं सर्वं त्रैलोक्यं सचराचरम् ।
तेन मन्त्रविहीनं तु कार्यं लोके न सिद्ध्यति ॥ २५ ॥
यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
कार्यार्थं नैव सिद्ध्येत तथा कर्म ह्यमन्त्रकम् ॥ २६ ॥
यथा भस्महुतं पार्थ! यथा तोयविवर्जितम् ।
निष्फलं जायते दानं तथा मन्त्रविवर्जितम् ॥ २७ ॥

काष्ठपाषाणलोष्ट्रेषु मृण्मयेषु विशेषत । मन्त्रेणलोकेपूजा ▮ कुर्वन्ति न ह्यमन्त्रत

द्वादशाब्दान्नमस्काराद्भक्त्या यल्लभते फलम् ।
मन्त्रयुक्तनमस्कारात्सद्यस्तल्लभते फलम् ॥ २६ ॥
सङ्क्रान्तौ च व्यतीपाते अयने विषुवे तथा ।
नर्मदाया जले स्नात्वा यस्तु पूजयते रविम् ॥ ३० ॥

द्वादशाब्देन यत्पापमज्ञानज्ञानसञ्चितम् । तत्क्षणान्नश्यते सर्वं वह्निना तु तुष यथा

चन्द्रसूर्यग्रहे स्नात्वा सोपवासो जितेन्द्रिय ।
तत्रादित्यमुख दृष्ट्वा मुच्यते सर्वकिल्बिषै ॥ ३२ ॥

माघमासे तु सम्प्राप्ते सप्तम्यां कृष्णसत्तम । सोपवासोजितक्रोधउपित्वासूर्यमन्दिरे
प्रात स्नात्वा विधानेन दद्यादर्घ्यंदिवाकरे । विधिनामन्त्रयुक्तेनलभेत्पुण्यमुत्तमम्
पितृदेवमनुष्याणा कृत्वाह्यहकतर्पणम् । मन्दिरं देवदेवस्य तत पूजा समाचरेत्
गन्धै पुष्पैस्तथा धूपैर्दीपनैवेद्यशोभनै । पूजयित्वा जगन्नाथ ततो मन्त्रमुदीरयेत्

विष्णु शक्रो यमो धाता मित्रोऽथ वरुणस्तथा ।
विवस्वान्सविता पूषा चण्डांशुर्भग एव च ॥ ३७ ॥

इतिद्वादशनामानि जपन्कृत्वा प्रदक्षिणाम् । यत्फलंलभतेपार्थ तदिहैकमना शृणु

दरिद्रो व्याधितो मूको बधिरो जड एव च ।
न भवेत्सप्तजन्मानि इत्येव शङ्करोऽब्रवीत् ॥ ३६ ॥

एवङ्कृत्वाविधानेनजपन्मन्त्र विचक्षण । आराधयेद्रविभक्त्यायश्रेच्छेत्पुण्यमुत्तमम्
मन्त्रहीना ▮ य कुर्याद्भक्ति देवस्यभारत । सविडम्बतिचात्मानपशुर्नाटपतद्ध्रुवम्
तत्रतीर्थे तु य कश्चित्त्यजते देहमुत्तमम् । सगनस्तन्न देवैस्तुपूज्यमानो महर्षिभि
स्वेच्छया सुचिरकालमिहलोके नृपोभवेत् । पुत्रपौत्रसमायुक्तोहस्त्यश्वरथसङ्कुल

दासीदासशतोपेतो जायते विपुले कुले ॥ ४४ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यासहितायापञ्चमेऽवन्तीखण्डे रेवाखण्डेरवितीर्थमाहात्म्यवर्णननाम पञ्चविंशत्यधिकशततमोऽध्याय. ॥ १२५ ॥

## षड्विंशत्यधिकशततमोऽध्यायः

### अयोनिप्रभवतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेत्तुराजेन्द्र! परंतीर्थमयोनिजम्। स्नातमात्रो नरस्तत्रनपश्येद्योनिसङ्कटम्
तत्र तीर्थे नरःस्नात्वा पूजयेद्देवमीश्वरम्। अयोनिजोमहादेव! यथात्वं परमेश्वर
तथामोचय मांदेव सम्भवाद्योनिसङ्कटात्। गन्धपुष्पादिधूपैश्चसमुच्येत्सर्वपातकैः

तस्य देवस्य यो भक्त्या कुरुते लिङ्गपूरणम्।
स वसेद्दु देवदेवस्य यावत्सिक्थस्य सङ्ख्यया ॥ ४ ॥

अयोनिजे महादेवं स्नापयेद्गन्धवारिणा। मधुक्षीरेण दध्नावासलभेद्विपुलांश्रियम्

अष्टम्यां च सिते पक्षे असितां वा चतुर्दशीम्।
पूजयित्वा महादेवं प्रीणयेद्गीतवाद्यकैः ॥ ६ ॥
वसेत्स च शिवे लोके ये कुर्वन्ति मनोहरम्।
ते वसन्ति शिवे लोके यावदाभूतसम्प्लवम् ॥ ७ ॥

तस्य देवस्य भक्त्या तुयःकरोतिप्रदक्षिणाम्। विज्ञापयंश्चसततंमन्त्रेणानेनभारत
तस्य यत्फलमुद्दिष्टंपारम्पर्येण मानवैः। सकाशाद्दु देवदेवस्यतच्छृणुष्वसमाधिना

अयोनिजो महादेव ! यथा त्वं परमेश्वर !।
तथा मोचय मां शर्व! सम्भवाद्योनिसङ्कटात् ॥ १० ॥
किं तस्य बहुभिर्मन्त्रैः कण्ठशोषणतत्परैः।
येनोङ्नमः शिवायेति प्रोक्तं देवस्य सन्निधौ ॥ ११ ॥
तेनाऽधीतं श्रुतं तेन तेन सर्वमनुष्ठितम्।
येनोङ्नमः शिवायेति मन्त्राभ्यासः स्थिरीकृतः ॥ १२ ॥

नतत्फलमवाप्नोति सर्वदेवेषु वै द्विजः। यत्फलं समवाप्नोति षडक्षरउदीरणात् ॥

तत्र तीर्थे तु यः स्नात्वा पूजयेच्छिवयोगिनम् ।
द्विजानामयुतं साग्रं सलभेत्फलमुत्तमम् ॥ १५ ॥
अथवा भक्तियुक्तस्तु सेवा दान्ते जितेन्द्रिये ।
सत्कृत्य ददते भिक्षा फलं तस्य ततोऽधिकम् ॥ १६ ॥
यतिहस्तेजलंदद्याद्भिक्षांदत्वापुनर्जलम् । साभिक्षामेरुणातुल्यातज्जलंसागरोपमम् ॥
इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे रेवाखण्डेऽयोनिप्रभवतीर्थमाहात्म्यवर्णननाम षड्विंशत्यधिकशततमोऽध्यायः ॥

---

## सप्तविंशत्यधिकशततमोऽध्यायः

### अग्नितीर्थमाहात्म्यवर्णनम्

मार्कण्डेय उवाच

ततोगच्छेत्तु राजेन्द्र अग्नितीर्थमनुत्तमम् ।
तत्र स्नात्वा तु पक्षादौ मुच्यते सर्वकिल्बिषैः ॥ १ ॥
तत्रतीर्थे तु यः कन्यां दद्यात्स्वयमलङ्कृताम् ।
तस्य यत्फलमुद्दिष्टं तच्छृणुष्व नरोत्तम ॥ २ ॥
अग्निष्टोमातिरात्राभ्यां शतशतगुणीकृतम् ।
प्राप्नोति पुरुषो दत्त्वा यथाशक्त्या ह्यलङ्कृताम् ॥ ३ ॥
तस्यां पुत्रप्रपौत्राणां या भवेद्रोमसङ्ख्यतिः ।
स याति तेन मानेन शिवलोके परां गतिम् ॥ ४ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डेऽग्नितीर्थमाहात्म्यवर्णननाम सप्तविंशत्यधिकशततमोऽध्यायः ॥

---

## अष्टाविंशत्यधिकशततमोऽध्यायः

### भृकुटेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेत्तु राजेन्द्र! भृकुटेश्वरमुत्तमम्। यत्रसिद्धो महाभागो भृगुः परमकोपनः
तेनवर्षशतं साग्रं तपश्चीर्णं पुराऽनघ। पुत्रार्थं वरयामास पुत्रं पुत्रवतांवरः॥ २॥
वरोदत्तो महाभाग देवेनान्धकघातिना। तत्र तीर्थंतु यः स्नात्वापूजयेत्परमेश्वरम्
अग्निष्टोमस्ययज्ञस्य फलमष्टगुणं लभेत। भृकुटेशं तु यः कश्चिद्घृतेन मधुना सह॥

पुत्रार्थी स्नापयेद्भक्त्या स लभेत्पुत्रमीप्सितम्।
तत्र तीर्थे तु यः स्नात्वा दद्याद्विप्राय काञ्चनम्॥ ५॥
गोदानं वा महीं वाऽपि तस्य पुण्यफलं शृणु॥ ६॥

ससमुद्रगुहा तेन सशैलवनकानना। दत्ता पृथ्वी न सन्देहस्तेन सर्वा नृपोत्तम!॥

तेन दानेन स स्वर्गे क्रीडयित्वा यथासुखम्।
मर्त्ये भवति राजेन्द्रो ब्राह्मणो वा सुपूजितः॥ ८॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे भृकुटेश्वरतीर्थमाहात्म्यवर्णनं नामाऽष्टाविंशत्यधिकशततमोऽध्यायः॥

---

## एकोनत्रिंशत्यधिकशततमोऽध्यायः

### ब्रह्मतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल ब्रह्मतीर्थमनुत्तमम्। अन्येषां चैव तीर्थानां परात्परतरं महत्

तत्र तीर्थे [illegible] यः स्नात्वा पूजयेच्छिवयोगिनम् ।
द्विजानामयुतं साग्रं स लभेत्फलमुत्तमम् ॥ १५ ॥
अथवा भक्तियुक्तस्तु तेषां दान्ते जितेन्द्रिये ।
मस्करिण्य ददते भिक्षां फलं तस्य ततोऽधिकम् ॥ १६ ॥
यतिहस्तेजलं दद्याद्भिक्षां दत्त्वा पुनर्जलम् । सा भिक्षा मेरुणा तुल्या तज्जलं सागरोपमम् ।
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डेऽयोनिसम्भवतीर्थमाहात्म्यवर्णनं नाम षड्विंशत्यधिकशततमोऽध्यायः ॥

---

## सप्तविंशत्यधिकशततमोऽध्यायः

### अग्नितीर्थमाहात्म्यवर्णनम्

मार्कण्डेय उवाच

ततो गच्छेत राजेन्द्र अग्नितीर्थमनुत्तमम् ।
तत्र स्नात्वा तु पक्षादौ मुच्यते सर्वकिल्बिषैः ॥ १ ॥
तत्रस्थं तु यः कन्यां दद्यात्स्वयमलङ्कृताम् ।
तस्य यत्फलमुद्दिष्टं तच्छृणुष्व नृपोत्तम ॥ २ ॥
अग्निष्टोमातिरात्राभ्यां शतशतगुणीकृतम् ।
प्राप्नोति पुरुषो दत्त्वा यथाशक्त्या ह्यलङ्कृताम् ॥ ३ ॥
तस्यां पुत्रपौत्राणां या भवेद्रोमसङ्गतिः ।
स याति तेन मानेन शिवलोके परां गतिम् ॥ ४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डेऽग्नितीर्थमाहात्म्यवर्णनं नाम सप्तविंशत्यधिकशततमोऽध्यायः ॥

---

# त्रिंशदधिकशततमोऽध्यायः

## देवतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

नर्मदादक्षिणे कूले देवतीर्थमनुत्तमम् । तत्र देवैः समागत्य तोषितः परमेश्वरः ॥१॥

तत्र तीर्थे तु यः स्नात्वा कामक्रोधविवर्जितः ।
स लभेन्नात्र सन्देहो गोसहस्रफलं श्रुतम् ॥ २ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे देवतीर्थमाहात्म्यवर्णनं नाम त्रिंशदधिकशततमोऽध्यायः ॥१३०॥

---

# एकत्रिंशदधिकशततमोऽध्यायः

## नागेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

नर्मदादक्षिणे कूले नागतीर्थमनुत्तमम् । यत्र सिद्धा महानागा भये जाते ततोनृप

युधिष्ठिर उवाच

महाभयानांलोकस्यनागानां द्विजसत्तम । कथंजातंभयंतीव्रं येनतेतपसिस्थिताः

भूतं भव्यं भविष्यच्च यत्सुरासुरमानवे । तात ते विदितं सर्वं तेन मे कौतुकं महत्

ममसन्तापजं दुःखंदुर्योधनसमुद्भवम् । तव वक्त्राम्बुजौघेन प्लावितंनिर्वृतिंगतम्

श्रुत्वा तव मुखोद्गीतां कथां पापप्रणाशनीम् ।
भूयोभूयः स्मृतिर्जाता श्रवणे मम सुव्रत !॥ ५ ॥

तत्र तीर्थे सुरश्रेष्ठो ब्रह्मा लोकपितामह । चतुर्णामपिवर्णाना नर्मदातत्माश्रित

वाचिक मानस पाप कर्मज यत्पुराकृतम् ।

तत्क्षालयति देवेशो दर्शनादेव पातकम् ॥ ३ ॥

श्रुतिस्मृत्युदितान्येव तत्र स्नात्वा द्विजपभा ।

प्रायश्चित्तानि कुर्वन्ति नैरा वासस्त्रिविष्टपे ॥ ४ ॥

ये पुन शास्त्रमु त्सृज्यकामलोभप्रपीडिता । प्रायश्चित्तंचदिव्यन्तितर्ते निरयगामिन

स्नात्वाऽद्भी पातकी ब्रह्मण्या तु कीर्तयेद्यम् ।

तस्य तत्क्ष्यने क्षिप्र तम सूर्योदये यथा ॥ ६ ॥

तत्र तीर्थ तु य स्नात्वापूजयेत्पितृदेवता । अग्निष्टोमस्ययज्ञस्यसलभेत्फलमुत्तमम्

तत्र तीर्थे तु यद्दान ब्रह्मोद्दिश्य प्रयच्छति । तदक्षयफल सर्वमित्येव शङ्करोऽब्रवीत्

गायत्रीसारमात्रोऽपित्र य नियतजप । ऋग्यजु सामसहित स भवेनात्रसशय

तत्र तीर्थ तु यो भक्त्या पश्येद्ब सुदुस्त्यजम् ।

अनिवर्त्तिका गतिस्तस्य ब्रह्मलोकान्न सशय ॥ १० ॥

यावदस्थीनि तिष्ठन्ति ब्रह्मतीर्थ च देहिनाम् ।

तावद्वर्षसहस्राणि देवलोके महीयते ॥ ११ ॥

अवतीर्णस्ततो लोके ब्राह्मणो जायते कुले । उत्तम सर्ववर्णाना देवानामिव देवता

विद्यास्थानानि सर्वाणि वेत्ति वेदाङ्गपारग ।

जायते पूजितो लोके राजभि स न सशय ॥ १३ ॥

पुत्रपौत्रसमोपेत सर्वव्याधिविवर्जित । जीवेद्वर्षशतसाग्र ब्रह्मतीर्थप्रभावत ॥

एतत्पुण्यपापहरनाथ ज्ञानवता वरम् । ये पश्यन्ति महात्मानोह्यमृतत्त्वप्रयान्ति ते

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्या संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्ड ब्रह्मतीर्थमाहात्म्यवर्णन नामैकोनत्रिंशदधिकशततमोऽध्याय ॥१२९॥

दासत्वं प्राप्स्यते त्वं हि पणेनाऽनेन सुव्रते !॥ २० ॥

कद्रूरुवाच

भवेयंनयथादासीतत्कुरुध्वं हि सत्वरम् । विशध्वं रोमकूपेषु तस्याश्वस्यमतिर्मम

क्षणमात्रं कृते कार्ये मा दासी च भवेन्मम ।

ततः स्वस्थोरगाः सर्वे भविष्यथ यथासुखम् ॥ २२ ॥

सर्पा ऊचुः

यथा त्वं जननी देवि! पन्नगानां मता भुवि ।

तथाऽपि सा विशेषेण वञ्चितव्या न कर्हिचित् ॥ २३ ॥

कद्रूरुवाच

ममवाक्यमकुर्वाणायेकेचिद्वैविपन्नगाः । हव्यवाहमुखं सर्वे यास्यन्त्यविनाशिताः

एतच्छ्रुत्वा तु वचनं घोरं मातृमुखोद्भवम् ।

केचित्प्रविष्टा रोमाणि तथाऽन्ये गिरिसंस्थिताः ॥ २५ ॥

केचित्प्रविष्टा जाह्नव्यामन्ये च तपसि स्थिताः ॥ २६ ॥

ततो वर्षसहस्रान्ते तुतोष परमेश्वरः । महादेवो जगद्धाताह्युवाच परया गिरा ॥

भो भोः सर्पा निवर्त्तध्वं तपसोऽस्य महत्फलम् ।

यमिच्छथ ददाम्यद्य नाऽत्र कार्या विचारणा ॥ २८ ॥

सर्पा ऊचुः

कद्रूशापभयाद्भीता देवदेव महेश्वर । तवपार्श्वे वसिष्यामो यावदाभूतसम्प्लवम्

देवदेव उवाच

एकश्चायं महाबाहुर्वासुकिर्भुजगोत्तमः । मम पार्श्वे वसेन्नित्यं सर्वेषां भयरक्षकः

अन्येषां चैव सर्पाणां भयं नाऽस्ति ममाज्ञया ।

आप्लुत्य नर्मदातोये भुजगास्ते च रक्षिताः ॥ ३१ ॥

नास्ति मृत्युभयं तेषां वसध्वं यत्र चेप्सितम् ।

कद्रूशापभयं नास्ति ह्येष मे विस्तरः परः ॥ ३२ ॥

॥ यलेशार्थं द्विजे युक्त न धान्यो जानते फलम् ।
विद्यादानस्य महत धावितस्य सुतस्य च ॥ ६ ॥
एव ज्ञात्वा यथान्याय य प्रश्न पृच्छितो मया ।
कथा तु कथ्यता विप्र दया कृत्वा ममोपरि ॥ ७ ॥

मार्कण्डेय उवाच

यथायथा त्व नृप भाषसे च तथा मया मे सुरमेति भारती ।
धीधिदयभाषाक्षरयाऽन्वितस्य स्वस्तीदृश नश्यति नैव तात ॥ ८ ॥
कथयामि यथावृत्तमितिहास्म पुरातनम् । कथित पूर्वतो वृद्धै पारम्पर्यण भारत
द्वे भार्ये कश्यपस्याऽऽस्ता सर्वगोरेष्वनुत्तमे ।
गरम्भतो वै विनता सपाणा कद्रुरेव च ॥ १० ॥
अन्यमन्दशनात्साक्ष्या कलिकृप व्यवस्थितम् ।
प्रभातकाले राजेन्द्र भास्कराकारकवर्चसम् ॥ ११ ॥
नदृष्ट्वा विनतारूपमश्वमथत्र पाण्डुरम् । अथ ता कद्रूमवोचत्तापदपयपरयधरानने
उर्ध्वं श्रवस माहृश्य पश्य मयत्रपाण्डुरम् । धावमानमविश्रान्त जवेनपवनोपमम्
न दृष्टासहसायान्नमीष्याभावेनमोहिता । कृष्णमस्यातथाऽजल्पत्तयासहसृपोत्तम
विनते त्व मृषा लोके भाषसे कुल्पासनि ।
कृष्ण वैन यद श्वेत नरक यास्यसे परम् ॥ १५ ॥

विनतोवाच

स्थ्याऽनृतं तु वचने पणोऽय ते ममैव तु । सहस्रवत्सरान्दासीभयेय तव वेश्मनि
नथेति तेप्रतिज्ञायरात्रौमन्वास्वक गृहम् । परित्यज्यउभेतेनुक्रोधमूर्च्छितमूर्च्छितं
वन्धुवगमथगत्वा तु कथयामास त पणम् । कद्रूर्विनतया सार्द्धं यद्वृत्तप्रमदालये
नत्क्र त्वा वान्धवा सर्वे कद्रूपुत्रास्तथैव च ।
न मन्यन्ते हित कार्यं कृत माता विगर्हितम् ॥ १६ ॥
आकृष्णा कृष्णतामम्ब कथ गच्छेदयोत्तम ।

दासत्वं प्राप्स्यते त्वं हि पणेनाऽनेन सुव्रते ॥ २० ॥

कद्रूरुवाच

भवेयंनयथादासीतत्कुरुध्वं हि सत्वरम् । विशध्वं रोमकूपेषु तस्याश्वस्यमतिर्मम

क्षणमात्रं कृते कार्ये सा दासी च भवेन्मम ।

ततः स्वस्थोरगाः सर्वे भविष्यथ यथासुखम् ॥ २२ ॥

सर्पा ऊचुः

यथा त्वं जननी देवि! पन्नगानां मता भुवि ।

तथाऽपि सा विशेषेण वञ्चितव्या न कर्हिचित् ॥ २३ ॥

कद्रूरुवाच

ममवाक्यमकुर्वाणायेकेचिद्भुविपन्नगाः । हव्यवाहमुखं सर्वे यास्यन्त्यविचारिताः

एतच्छ्रुत्वा तु वचनं घोरं मातृमुखोद्भवम् ।

केचित्प्रविष्टा रोमाणि तथाऽन्ये गिरिसंस्थिताः ॥ २५ ॥

केचित्प्रविष्टा जाह्नव्यामन्ये च तपसि स्थिताः ॥ २६ ॥

ततो वर्षसहस्रान्ते तुतोष परमेश्वरः । महादेवो जगद्धाताह्युवाच परया गिरा ॥

भो भोः सर्पा निवर्त्तध्वं तपसोऽस्य महत्फलम् ।

यमिच्छथ ददाम्यद्य नाऽत्र कार्या विचारणा ॥ २८ ॥

सर्पा ऊचुः

कद्रूशापभयाद्भीता देवदेव महेश्वर । तवपार्श्वे वसिष्यामो यावदाभूतसम्प्लवम्

देवदेव उवाच

एकश्चायं महाबाहुर्वासुकिर्भुजगोत्तमः । मम पार्श्वे वसेन्नित्यं सर्वेषां भयरक्षकः

अन्येषां चैव सर्पाणां भयं नाऽस्ति ममाज्ञया ।

आप्लुत्य नर्मदातोये भुजगास्ते च रक्षिताः ॥ ३१ ॥

नास्ति मृत्युभयं तेषां वसध्वं यत्र चेप्सितम् ।

कद्रूशापभयं नास्ति ह्येष मे विस्तरः परः ॥ ३२ ॥

रात्रौ जागरणं कार्यं कथायां तत्र भारत !॥ ६ ॥
प्रभाते विमले स्नात्वा तत्र तीर्थे जगद्गुरुम् ।
ये पश्यन्ति जितक्रोधास्ते मुक्ताः सर्वपातकैः ॥ ७ ॥
यथा तु दृष्ट्वा भुजगाः सुपर्णं नश्यन्ति मुक्त्वा विषमुग्रतेजः ।
नश्यन्ति पापानि तथैव शीघ्रं दृष्ट्वा मुखं शूकररूपिणस्तु ॥ ८ ॥
नभोगतं नश्यति वान्धकारं दृष्ट्वा रविं देववरं तथैव ।
नश्यन्ति पापानि सुदुस्तराणि दृष्ट्वा मुखं पार्थ! धराधरस्य ॥ ६ ॥
किं तस्य बहुभिर्मन्त्रैर्भक्तिर्यस्य जनार्दने । नमोनारायणायेतिमन्त्रःसर्वार्थसाधकः
एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥ ११ ॥
ध्यायमाना महात्मानो रूपं नारायणं हरेः ।
ये त्यजन्ति स्वकं देहं तत्र तीर्थे जितेन्द्रियाः ॥ १२ ॥
ते गच्छन्त्यमलं स्थानं यत्सुरैरपि दुर्लभम् ।
क्षराक्षरविनिर्मुक्तं तद्विष्णोः परमं पदम् ॥ १३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे आदिवाराहतीर्थमाहात्म्यवर्णनं नाम
द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

# त्रयस्त्रिंशदधिकशततमोऽध्यायः

## कुवेरादितीर्थचतुष्टयमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल' पर तीर्थचतुष्टयम् । येषा दर्शनमात्रेण सर्वपापक्षयो भवे
कौबेरवारुणयाम्यवायव्यंभुवन परम् । यत्र सिद्धामहात्मानो लोकपालामहाबल

युधिष्ठिर उवाच

किमर्थं लोकपालैश्च तपश्चीर्णं पुराऽनघ । नर्मदातटमाश्रित्य श्रोतन्मे वक्तुमर्हसि

श्रीमार्कण्डेय उवाच

अधिष्ठानसमिच्छन्तिह्यघ्ननिमते सति । संसारे सवभूताना तृणबिन्दुयदन्थ
कदलासारनि सार मृगतृष्णेव चञ्चले । स्थावरे जङ्गमे सर्वे भूतग्रामे चतुर्विधे

धर्मो माता पिता धर्मो धर्मो बन्धु सुहृत्तथा ।
आधार सर्वभूताना त्रैलोक्ये सचराचरे ॥ ६ ॥

एव ज्ञात्वा ते सर्वे लोकपाला ऊलक्षणा । तपस्तेपुश्चरतुल मारुताहारतत्परा
ततस्तुष्टो महादेव कृतस्यार्द्धे गते तदा । अनुरूपेण राजेन्द्र युगस्य परमेश्वर ।

वरेण च्छन्दयामास लोकपालान्महाबलान् ।
यो यमिच्छति काम वै स त तस्य ददाम्यहम् ॥ ६ ॥

एतच्छ्रुत्वा वचस्तस्य लोकपालाजगद्धिता । वरद प्रार्थयामासुर्देववरमनुत्तमम्

कुबेर उवाच

यदि तुष्टो महादेव' यदि देयोवरो मम । यक्षाणामीश्वरश्चाहभवामिधनदस्त्वति
तत प्रोवाच देवेश यम सयमने रत । तत्र प्रधानो भगवान्भवेय सर्वजन्तुषु ॥१२
वरुणोऽनन्तर प्राह प्रणम्य तु महेश्वरम् । क्रीडेय वारुणे लोके यादोगणसमन्वित

जगादाऽऽशु ततो वायु प्रणम्य तु महेश्वरम् ।

व्यापकत्वं त्रिलोकेषु प्रार्थयामास भारत !॥ १४ ॥

तेषां यदीप्सितं काममुमया सह शङ्करः । सर्वेषांलोकपालानां दत्त्वाचादर्शनंगतः

गते महेश्वरे देवे यथास्थानं तु ते स्थिताः ।

स्थापना च कृता सर्वैः स्वानाम्नैव पृथक्पृथक् ॥ १६ ॥

कुवेरश्च कुवेरेशं यमश्चैव यमेश्वरम् । वरुणो वरुणेशं तु वातो वातेश्वरं नृप ॥ १७

तर्प्पणं विदधुः सर्व्वे मन्त्रैश्च विविधैः शुभैः ।

सर्वे सर्वेश्वरं देव पूजयित्वा यथाविधि ॥ १८ ॥

आह्वयामासुस्तान्विप्रान्सर्वे सर्वेश्वरा इव ।

क्षान्तदान्तजितक्रोधान्सर्वभूताभयप्रदान् ॥ १६ ॥

वेदविद्याव्रतस्नातान्सर्वशास्त्रविशारदान् ।

ऋग्यजुःसामसंयुक्तांस्तथाऽथर्व्वविभूषितान् ॥ २० ॥

चातुर्विध्यं तुसर्वेषांदानंदास्यामगृह्णत । एवमुक्त्वातुसर्वेषां विप्राणांदानमुत्तमः

तत्र स्थाने ददुस्तेषां भूमिदानमनुत्तमम् । यावच्चन्द्रश्चसूर्यश्चयावत्तिष्ठतिमेदिनि

तावद्दानंतुयुष्माकं परिपन्थी न कश्चन । राजावा राजतुल्योवालोकपालैरनुत्तम

दत्तं लोपयते मूढःश्रूयतां तस्ययोविधिः । शोषयेद्धनदोवित्तं तस्य पापस्य भार

शरीरंवरुणोदेवः सन्ततींचसनस्तथा । आयुर्नश्यतितस्याऽऽशुयमःसंयमनोमहा

निःशेषं भस्मसात्कृत्वा हुतभुग्याति भारत !।

तस्मात्सर्वप्रयत्नेन ब्राह्मणेभ्यो युधिष्ठिर! ॥

भक्तिः कार्या नृपैः सर्वैरिच्छद्भिः श्रेय आत्मनः ॥ २६ ॥

राजा वृक्षो ब्राह्मणास्तस्य मूलं भृत्याः पर्णा मंत्रिणस्तस्य शाखाः

तस्मान्मूलं यत्नतो रक्षणीयं मूले गुप्ते नास्ति वृक्षस्य नाशः ॥ २७ ॥

षष्टिवर्षसहस्राणिस्वर्गेतिष्ठतिभूमिदः । आच्छेत्ताचाऽनुमन्ताचतान्येवनरकेवसे

स्वदत्तां परदत्तां वा पालनीया वसुन्धरा ।

यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥ २६ ॥

नित्यं वसन्ति कौरिल्यां (.कौवेर्याम् ) लोकपालान्निमन्त्र्य ये ॥ ४७ ॥
एतत्पुण्यं पापहरं धन्यमायुर्विवर्धनम् । पठतां शृण्वतां चैव सर्वपापक्षयो भवेत्
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे कुवेरादितीर्थचतुष्टयमाहात्म्यवर्णनंनाम
त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

---

## चतुस्त्रिंशदधिकशततमोऽध्यायः

### रामेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

नर्मदादक्षिणे कूले रामेश्वरमनुत्तमम् । तीर्थं पापहरं पुण्यं सर्वदुःखघ्नमुत्तमम् ॥
तत्रतीर्थेतुये स्नात्वापूजयन्तिमहेश्वरम् । महादेवंमहात्मानं मुच्यन्तेसर्वकिल्बिषैः
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे
रेवाखण्डे रामेश्वरतीर्थमाहात्म्यवर्णनं नामचतुस्त्रिंशदधिकशततमोऽध्यायः ॥

---

## पञ्चत्रिंशदधिकशततमोऽध्यायः

### सिद्धेश्वरमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तस्यैवानंतरं चान्यत्सिद्धेश्वरमनुत्तमम् । तीर्थं सर्वगुणोपेतं सर्वलोकेषु पूजितम्
तत्र तीर्थेतुयः स्नात्वा ह्युमारुद्रंप्रपूजयेत् । वाजपेयस्ययज्ञस्यस लभेत्फलमुत्तमम्
तेन पुण्येन महता मृतः स्वर्गमवाप्नुयात् । अप्सरोगणसंवीतो जयशब्दादिमंगलैः

सहपत्न्यास्ततस्तत्र क्रीडयित्वा यथासुखम् ।
धनधान्यसमोपेते कुले महति जायते ॥ ५ ॥
पूज्यमानो मनुष्यैश्च वेदवेदाङ्गपारगः । व्याधिशोकविनिर्मुक्तो जीवेच्च शरदां शत
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीख
रेवाखण्डे सिद्धेश्वरमाहात्म्यवर्णनं नाम पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५

---

## षट्त्रिंशदधिकशततमोऽध्यायः

### अहल्यातीर्थमाहात्म्यवर्णनम्

मार्कण्डेय उवाच

ततो गच्छेन्महीपाल अहल्येश्वरमुत्तमम् । यत्र सिद्धा महाभागा अहल्या तापसी पु
गौतमो ब्राह्मणश्चासीत्स्नातकश्चैव काश्यप ।
सत्यधर्मसमायुक्तो वानप्रस्थाश्रमे रतः ॥ २ ॥
तस्य पत्नी महाभागा अहल्यानामविश्रुता । रूपयौवनसम्पन्ना त्रिषु लोकेषु विश्रु
तस्यास्त्वप्रतिरूपेण देवराजः शतक्रतुः । मोहितो लोभयामास तदा दृष्ट्वा चलत्सु
आश्रमस्थ वरारोहे देवराजमनिन्दिते । क्रीडस्व मया सार्द्धं त्रिषु लोकेषु पूजि
किं करिष्यसि विप्रेण शौचाचाररतेन तु ।
तपःस्वाध्यायशीलेन क्लिश्यन्तीव सुलोचने ॥ ६ ॥
एवमुक्ता वरारोहा स्त्रीस्वभावात्सुचञ्चला ।
मनसाऽध्याय शक्रं सा कामेन कलुषीकृता ॥ ७ ॥
तस्या विदित्वा तत्सर्वं स देवः पाकशासनः ।
गौतमं वञ्चयामास दुष्टभावेन भावितः ॥ ८ ॥
विदित्वा चान्तरं तस्य गृहीत्वा वेषमुत्तमम् ।

अहल्यां रमयामास विश्वस्तां मन्दिरान्तिके ॥ ६ ॥
क्षणमात्रान्तरे तत्र देवराजस्य भारत । आजगाममुनिश्रेष्ठोमन्दिरं त्वरयाऽन्वितः
आगतं गौतमंदृष्ट्वाभीतभीतःपुरन्दरः । निर्गतः सनतो दृष्ट्वा शक्रोऽयमितिचिन्तयन्
ततः शशाप देवेन्द्रं गौतमः क्रोधमूर्च्छितः ।
अजितेन्द्रियोऽसि यस्मात्त्वं तस्माद्बहुभगो भव ॥ १२ ॥
एवमुक्तस्तु देवेन्द्रस्तत्क्षणादेव भारत ॥ भगानां तु सहस्रे ण तत्क्षणादेव वेष्टितः
त्यक्त्वाराज्यं सुरैः सार्द्धं गतश्रीकोजगाम ह । तपश्चचारविपुलं गौतमेनमहीतले
अहल्याऽपि ततः शप्ता यस्मात्त्वं दुष्टचारिणी ।
प्रेक्ष्य मां रमसे शक्रं तस्मादश्ममयी भव ॥ १५ ॥
गते वर्षसहस्रान्ते रामं दृष्ट्वा यशस्विनम् ।
तीर्थयात्राप्रसङ्गेन धौतपापा भविष्यसि ॥ १६ ॥
एवंगतेतःकालेदृष्ट्वारामेणधीमता । विश्वामित्रसहायेन त्यक्त्वासाऽश्ममयींतनुम्
पूजयित्वा यथान्यायं गतपापा विमत्सरा ।
आगता नर्मदातीरे तीर्थे स्नात्वा यथाविधि ॥ १८ ॥
कृतं चान्द्रायणं मासं कृच्छ्रं चाऽन्यं ततः परम् ।
ततस्तुष्टो महादेवो दत्त्वा वरमनुत्तमम् ॥ १९ ॥
जगामाऽदर्शनंभूयोरेमेचोमापतिश्चिरम् । अहल्यातुगतेदेवे स्थापयित्वाजगद्गुरुम्
अहल्येश्वरनामानं स्वगृहेचागमत्पुनः । तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम्
स मृतः स्वर्गमाप्नोतियत्रदेवोमहेश्वरः । क्रीडयित्वा यथाकामं तत्रलोकेमहातपाः
गते वर्षसहस्रान्ते मानुष्यं लभते पुनः । धनधान्यचयोपेतः पुत्रपौत्रसमन्वितः ॥
वेदविद्याऽऽश्रयो श्रीमाञ्जायते विमले कुले ।
रूपसौभाग्यसम्पन्नः सर्वव्याधिविवर्जितः । जीवेद्वर्षशतं साग्रमहल्यातीर्थसेवनात्
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डेऽहल्यातीर्थमाहात्म्यवर्णनं नामषट्त्रिंशदधिकशततमोऽध्यायः ॥

# सप्तत्रिंशदधिकशततमोऽध्यायः

## कर्कटेश्वरतीर्थमाहात्म्यवर्णनम्

मार्कण्डेय उवाच

धर्मपुत्र ततो गच्छेत्कर्कटेश्वरमुत्तमम् । उत्तरे नर्मदाकूले सर्वपापक्षयङ्करम् ॥ १ ॥

तत्र स्नात्वा विधानेन यस्तु पूजयते शिवम् ।

अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ २ ॥

तस्य तीर्थस्य माहात्म्यं पुराणे यच्छ्रुतं मया ।

न तद्वर्णयितुं शक्यं संक्षेपेण यदात्मज ॥ ३ ॥

तत्रतीर्थे तु यः कुर्याच्छिवलिङ्गं शुभाशुभम् । दर्शनात्स्पर्शनात्तस्य महापातकनाशनम्

तत्रतीर्थे तु यः स्नात्वा पश्येत्कर्कटेश्वरम् । सर्वपापविनिर्मुक्तो रुद्रलोके महीयते

तत्रस्थास्तत्र जानन्ति नरा मानववर्जिताः ।

शरीरस्थमिवात्मानं मनसा ज्योतिरव्ययम् ॥ ६ ॥

तत्र तीर्थवरश्रेष्ठे दृष्टा नारायणी पुरा । अश्वत्थस्तपते घोरं तपो दारुणमुत्तमम्

तत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ।

तस्य ते द्वादशाब्दानि तृप्तिं यान्ति पितामहाः ॥ ८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे

रेवाखण्डे कर्कटेश्वरतीर्थमाहात्म्यवर्णनं नाम

सप्तत्रिंशदधिकशततमोऽध्यायः ॥१३७॥

---

# अष्टत्रिंशदधिकशततमोऽध्यायः

## शक्रतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्पाण्डुपुत्र! शक्रतीर्थमनुत्तमम् । यत्रसिद्धोमहाभागो देवराजः शतक्रतुः
गौतमेन पुरा शप्तं ज्ञात्वा देवाः सुरेश्वरम् । ब्रह्माद्यादेवताःसर्वऋषयश्च तपोधनाः
गौतमं प्रार्थयामासुर्वाक्यैः सानुनयैः शुभैः ।
गतराज्यं गतश्रीकं शक्रं प्रति मुनीश्वर !॥ ३ ॥
इन्द्रेणरहितंराज्यंन कश्चित्कामयेद्द्विज !। देवोवामानवोवाऽपिएतत्तेविदितंप्रभो
तस्यत्वं भगयुक्तस्य दयां कुरु द्विजोत्तम । गतश्चादर्शनंशक्रो दूषितःस्वेनपाप्मना
देवानां वचनं श्रुत्वा गौतमो वेदवित्तमः । तथेति कृत्वा शक्रस्य वरंदातुं प्रचक्रमे
एतद्भगसहस्रं तु पुरा जातं शतक्रतो !। तल्लोचनसहस्रं तु मत्प्रसादाद्भविष्यति ॥७॥
एवमुक्तःसहस्राक्षःप्रणम्यमुनिसत्तमम् । ब्राह्मणांस्तान्महाभागान्नर्मदांप्रत्यगात्ततः
स्नात्वा स विमले तोये संस्थाप्य त्रिपुरान्तकम् ।
जगाम त्रिदशावासं पूज्यमानोऽप्सरोगणैः ॥ ६ ॥
तत्र तीर्थे तु स्नात्वा पूजयेत्परमेश्वरम् । परदाराभिगमनान्मुच्यते पातकान्नरः ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे शक्रतीर्थमाहात्म्यवर्णनंनामाऽष्टत्रिंशदधिकशततमोऽध्यायः ॥१३८॥

---

## एकोनचत्वारिंशदधिकशततमोऽध्याय

### सोमतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेन्महाराजसोमतीर्थमनुत्तमम् । यत्रसोमस्तपस्तप्त्वा लक्षमपथमास्थि
तत्र तीर्थे तु य स्नायाद्राघस्य विधिपूर्वकम् ।
कृतजाप्यो रविं ध्यायेत्तस्य पुण्यफल शृणु ॥ २ ॥
ऋग्वेदयजुर्वेदाभ्यां सामवेदेनभारत । जपतो यत्फलंप्रोक्तंगायत्र्याधाऽनतत्फल
तत्र तीर्थे तु यो भक्त्या ब्राह्मणान्भोजयेच्छुचि ।
तत मन्त्रविधानेन कोटिर्भवति भोजिता ॥ ४ ॥
पादुकोपानहौ छत्र वस्त्रकम्बल्याजिन ।
यो दत्त विप्रमुख्याय तस्य तत्कोटिसम्मितम् ॥ ५ ॥
सहस्रतुसहस्राणामन्नंघायस्तुभोजयेत् । एकस्यमन्त्रयुक्तस्यकलांनार्हतिषोडशी
एव तु भोजयेत्सत्रहृत्य वेदपारगम् । शास्त्रान्तगमथाध्वर्यु छन्दोगं चान्महामिग
अग्निहोत्रसहस्रस्य यत्फलं प्राप्यते बुधैः । समतद्वेदविदुषा तीर्थेसोमस्य तत्फ
भोजयेच शत तथा सहस्र लभते नर । एकस्य योगयुक्तस्य तत्फ फययोधि
सन्निरुध्येन्द्रियग्राम यत्रयत्र वसेन्मुनि । तत्र तत्र कुरुक्षेत्र नैमिष पुष्करादि
तस्मात्सर्वप्रय नेनग्रहणेच द्वयोः । सङ्क्रान्तौचव्यतीपातेयोगीभोज्योचिशा
सन्यास कुरुते यस्तुतत्र तीर्थे युधिष्ठिर । विमानेनमहाभाग सयातित्रिदिवन
सोमस्याऽनुचरो भूत्वा तेनैव सह मोदते ॥ १३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्या संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे सोमतीर्थमाहात्म्यवर्णननामैकोनचत्वारिंशदधिकशततमोऽध्याय ॥

---

# चत्वारिंशदधिकशततमोऽध्यायः

## नन्दाह्रदतीर्थमाहात्म्यवर्णनम्

मार्कण्डेय उवाच

ततो गच्छेन्महराज नन्दाह्रदमनुत्तम् । यत्र सिद्धा महाभागा नन्दादेवी वरप्रदा ॥
महिषासुरे महाकाये पुरा देवभयङ्करे । शूलिन्याशूलभिन्नाङ्गे कृते दानवसत्तमे ॥
येनैकादशरुद्राश्चह्यादित्याःसमरुद्गणाः । वसवोवायुना सार्द्धंचन्द्रादित्यौसुरेश्वर
बलिना निर्जितायेनब्रह्मविष्णुमहेश्वराः । सङ्ग्रामे सुमहाघोरेकृते देवभयङ्करे ॥ ४

कृत्वा तत्कदनं घोरं नन्दा देवी सुरेश्वरी ।
यस्मात्स्नाता विशालाक्षी तेन नन्दाह्रदः स्मृतः ॥ ५ ॥

तत्रतीर्थेतुयःस्नात्वानन्दामुद्दिश्यभारत । ददातिदानंविप्रेभ्यःसोऽश्वमेधफलंलभेत्
भैरवं चैव केदारं तथा रुद्रं महालयम् । नन्दाह्रदश्चतुर्थःस्यात्पञ्चमंभुविदुर्लभमम्
वहयन्तं नजानन्ति कामरागसमन्विताः । नर्मदायांह्रदं पुण्यं सर्वपातकनाशनम्
तत्र तीर्थेतु यः स्नात्वानन्दां देवींप्रपूजयेत् । किंतस्यहिमवन्मध्यगमनेनप्रयोजनम्
परमार्थमविज्ञाय पर्यटन्ति तमोवृताः । तेषां समागमे पार्थ श्रमएव हि केवलम्

पृथिव्यां सागरान्तायां स्नानदानेन यत्फलम् ।
तत्फलं समवाप्नोति स्नात्वा नन्दाह्रदे नृप !॥ ११ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नन्दाह्रदतीर्थमाहात्म्यवर्णनंनाम चत्वारिंशदधिकशततमोऽध्यायः ॥

———

# द्विचत्वारिंशदधिकशततमोऽध्यायः

## रुक्मिणीतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महाराज! रुक्मिणीतीर्थमुत्तमम्।
यत्रैव स्नानमात्रेण रूपवान्सुभगो भवेत् ॥ १ ॥
अष्टम्यां चचतुर्द्दश्यां तृतीयायांविशेषतः। स्नानं समाचरेत्तत्र न चेह जायते पुनः
यःस्नात्वा रुक्मिणीतीर्थे दानं दद्यात्तु काञ्चनम्।
तत्तीर्थस्य प्रभावेण शोकं नाप्नोति मानवः ॥ ३ ॥

युधिष्ठिर उवाच

तीर्थस्याऽस्यकथंजातोमहिमेदृङ्मुनीश्वर। रूपसौभाग्यदंयेन तीर्थमेतद्ब्रवीहिमे

मार्कण्डेय उवाच

कथयामि यथावृत्तमितिहासंपुरातनम्। कथितं पूर्वतो वृद्धैः पारम्पर्येण भारत!
तन्तेहं सम्प्रवक्ष्यामिश‍ृणुष्वैकाग्रमानसः। नगरंकुण्डिनंनामभीष्मकोपरिपातिहि
हस्त्यश्वरथसम्पन्नो धनाढ्योऽतिप्रतापवान्।
स्त्रीसहस्रस्य मध्यस्थः कुरुते राज्यमुत्तमम् ॥ ७ ॥
तस्य भार्या महादेवी प्राणेभ्योऽपि गरीयसी।
तस्यामुत्पादयामास पुत्रमेकं स रुक्मकम् ॥ ८ ॥
द्वितीया तनया जज्ञे रुक्मिणीनामनामतः।
तदाऽशरीरिणी वाचा राजानं तमुवाच ह ॥ ९ ॥
चतुर्भुजाय दातव्याकन्येयं भुवि भीष्मक !। एवं तद्वचनं श्रुत्वा जहर्ष प्रियया सह
ब्राह्मणैः सह विद्वद्भिः प्रविष्टःसूतिकागृहम्।
स्वस्तिकं वाचयित्वाऽस्याश्चक्रे नामेति रुक्मिणी ॥ ११ ॥

सङ्कर्षणमतंप्राप्य केशवः केशिसूदनः। ययौ कन्यांगृहीत्वा तु रथमारोप्य सत्वरम्
निर्गतः सहसा राजन्वेगेनैवाऽनिलो यथा।
हाहाकारस्तदा जातो भीष्मकस्य पुरे महान्॥ ३१॥
निर्गता दानवाःक्रुद्धा वेलाइचमहोदधेः। गर्जन्तःसायुधाःसर्वेधावन्तोरथवर्त्मनि
वलदेवं ततः प्राप्ता रथमार्गाऽनुगामिनम्
तेषां युद्धं बलस्याऽसीत्सर्वलोकक्षयङ्करम्॥ ३३॥
यथा तारामये पूर्वं सङ्ग्रामे लोकविश्रुते।
गदाहस्तो महाबाहुस्त्रैलोक्येऽप्रतिमो बलः॥ ३४॥
हलेनाऽऽकृष्य सहसा गदापातैरपातयत्। अशक्यो दानवैर्हन्तुं बलभद्रो महाबलः
बभञ्ज दानवान्सर्वांस्तथौ गिरिरिवाऽचलः। तं दृष्ट्वा च बलंक्रुद्धंदुर्धर्षं त्रिदशैरपि
भीष्मपुत्रो महातेजा रुक्मीनाम महायशाः।
नराणामतिशूराणामक्षौहिण्या समन्वितः॥ ३७॥
बलभद्रमतिक्रम्य ततो युद्धे निराकरोत्। तद्युद्धं वञ्चयित्वा तु रथमार्गेण सत्वरम्
केशवोऽपि तदा देवो रुक्मिण्या सहितो ययौ।
विन्ध्यं तु लङ्घयित्वाऽग्रे त्रैलोक्यगुरुरव्ययः॥ ३९॥
नर्मदातटमापेदे यत्र सिद्धः पुरा पुनः। अजेयो येन सञ्जातस्तीर्थस्यास्यप्रभावतः
एतस्मात्कारणात्तात योधनीपुरमुच्यते।
रुक्मोऽपि दानवेन्द्रोऽसौ प्राप्तः स्थानमनुत्तमम्॥ ४१॥
प्रत्युवाचाऽच्युतं क्रुद्धस्तिष्ठस्तिष्ठेति मा व्रज।
अद्य त्वां निशितैर्बाणैर्नेष्यामि यमसादनम्॥ ४२॥
एवं परस्परं वीरौ जगर्जतुरुभावपि। तयोर्युद्धमभूद्घोरं तारकाग्निजसन्निभम्॥
चिक्षेपशरजालानिकेशवं प्रतिदानवः। नाऽनुचिन्त्य शरांस्तस्यकेशवः केशिसूदनः
ततो रुक्मोऽथ सङ्क्रुद्धो गृहीत्वा धनुरुत्तमम्।
सायकेन सुतीक्ष्णेन तं बिभेद तदोरसि॥ ४५॥

यावद्ध्रियान्तिलोकेषु महाभूतानि पञ्च च । तावत्तेदिविमोदन्ते मद्वृत्तपरिपालकाः
यस्तुलोपयते मूढोदत्तं चः पृथिवीतले । नरकेतस्यवासःस्याद्यावदाभूतसम्प्लवम्
स्वदत्ता परदत्ता वा पालनीया वसुन्धरा ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥ ६४ ॥
स्वदत्तां परदत्तां वा यो हरेत वसुन्धराम् ।
स विष्ठायां कृमिर्भूत्वा पितृभिः सह मज्जति ॥ ६५ ॥
अन्यायेन हृता भूमिरन्यायेन च हारिता । हर्त्ताहारयिताचैवविष्ठायांजायतेकृमिः
षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥ ६७ ॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यरूपप्रतिमानि तानि को नाम साधुः पुनराददाति ॥ ६८ ॥
एवं तान्पूजयित्वा तु सम्यङ् न्यायेन पाण्डव !।
रुक्मिण्या विधिवत्पाणिं जग्राह मधुसूदनः ॥ ६९ ॥
मुशली च ततः सर्वाञ्जित्वा दानवपुङ्गवान् ।
स्वस्थानमगमत्तत्र कृत्वा कार्यं सुशोभनम् ॥ ७० ॥
अथातौद्वारवत्यां तौकृष्णसङ्कर्षणावुभौ । गच्छमानं तुतं दृष्ट्वा केशवंक्लेशनाशनम्
ब्राह्मणाः सत्यवन्तश्च निर्गताः शंसितव्रताः ।
आगच्छमानांस्तौ वीक्ष्य रथमार्गेण ब्राह्मणान् ॥ ७२ ॥
मुहूर्तं तत्र विश्रम्यकेशवो वाक्यमब्रवीत् । किमागमनकार्यं वोब्रूतसर्वं द्विजोत्तमाः
कुर्वाणाः स्वीयकर्माणि ममकृत्यंतुतिष्ठते । देवस्यवचनं श्रुत्वामुनयोवाक्यमब्रुवन
कल्पकोटिसहस्रेण सत्यभावात्तु वन्दितः ।
दुष्प्राप्योऽसि मनुष्याणां प्राप्तः किं त्यजसे हि नः ॥ ७५ ॥
ब्राह्मणानां वचःश्रुत्वा भगवानिदमब्रवीत् । मथुरायांद्वारवत्यांयोधनीपुर एव च
त्रिकालमागमिष्यामि सत्यं सत्यं पुनः पुनः ।

एव ते ब्राह्मणा श्रुत्वा योधनीपुरमागताः ॥ ७७ ॥

अवतीर्णस्त्रिभागेन प्रादुर्भावेनुमापुरे । एतत्तेकथितं सर्वं तीर्थस्योत्पत्तिकारणम्
भूतभव्य भविष्यञ्चवर्त्तमान तथाऽपरम् । यच्छ्रुत्वासर्वपापेभ्यो मुच्यतेनाऽत्रसंशय
तत्रतीर्थेतुयःस्नात्वापूजयेद्गुहकेशवौ । तेन देवोजगद्धाता पूजितस्त्रिगुणात्मवान्

उपवासीनरो भूत्वा यस्तु कुर्यात्प्रदक्षिणम् ।

मुच्यते सर्वपापेभ्यो नाऽत्र कार्या विचारणा ॥ ८१ ॥

तत्र तीर्थे तु येशूरास्तान्पश्यन्त्यपियेनराः । तेऽपिपापै प्रमुच्यतेब्रह्महत्यासमैरपि
प्रातरुत्थाय ये केचित्पश्यन्ति गुहकेशवौ । तैन ते सदृशा स्युर्ये देवदेवेन चक्रिणा

ते पूज्यास्तेनमस्कार्यास्तेषां जन्म सुजीवितम् ।

ये नमन्ति जगन्नाथ देव नारायण हरिम् ॥ ८४ ॥

तत्र तीर्थे तु यद्दान स्नान देवार्चन नृप । तत्सर्वमक्षय तस्य इत्येव शङ्करोऽब्रवीत्
प्रविश्याग्नौ मृतानांचयत्फलमुदाहृतम् । तच्छृणुष्व नृपश्रेष्ठ प्रोच्यमानमशेषत

विमानेनाऽर्कवर्णेन किङ्किणीजालमालिना ।

आग्नेये भवने तत्र मोदते कालमीप्सितम् ॥ ८७ ॥

जले चैव मृतानां तु योधनीपुरमध्यत । वसन्तिवारुणेलोके यावदाभूतसम्प्लवम्

अनाशके मृतानां तु तत्र तीर्थे नराधिप ।

अनिवर्तिका गतिस्तेषां नाऽत्र कार्या विचारणा ॥ ८६ ॥

तत्र तीर्थ तु यो दद्यात्कपिलादानमुत्तमम् ।

विधानेन तु संयुक्त शृणु तस्याऽपि यत्फलम् ॥ ९० ॥

तावन्तितस्यारोमाणितत्प्रसूतेश्चभारत ।तावन्तिदिविमोदन्तेसर्वकामै सुपूजिता

यावन्ति रोमाणि भवन्ति धेन्वास्तावन्ति वर्षाणि महीयते स ।

स्वर्गाच्च्युतश्चाऽपि ततस्त्रिलोक्यां कुले समुत्पत्स्यति गोमतां स

तत्र तीर्थे तु यो दद्याद्रूप्य काञ्चनमेव वा । काञ्चनेन विमानेनविष्णुलोके महीयते

तस्मिंस्तीर्थे तु यो दद्यात्पादुके वस्त्रमेव च ।

दानस्याऽस्य प्रभावेण लभते स्वर्गमीप्सितम् ॥ ९४ ॥
ऋग्यजुः सामवेदानां पठनाद्यत्फलंभवेत्। तत्रतीर्थेतुराजेन्द्रगायत्र्यातत्फलंलभेत्
प्रयागे यद्भवेत्पुण्यं गयायां च त्रिपुष्करे। कुरुक्षेत्रे तु राजेन्द्र राहुग्रस्ते दिवाकरे
सोमेश्वरे च यत्पुण्यं सोमस्य ग्रहणेतथा। तत्फलं लभतेतत्र स्नानमात्रान्न संशयः
द्वादश्यां तु नरः स्नात्वा नमस्कृत्य जनार्द्दनम्।
उद्धृताः पितरस्तेन अवाप्तं जन्मनः फलम् ॥ ९८ ॥
संक्रांतौचव्यतीपातेद्वादश्यांचविशेषतः। ब्राह्मणंभोजयेदेकं कोटिर्भवतिभोजिता
पृथिव्यां यानि तीर्थानि ह्यासमुद्राणि पाण्डव !।
तानि सर्वाणि तत्रैव द्वादश्यां पाण्डुनन्दन ॥ १०० ॥
तयंयान्तिचदानानि यज्ञहोमबलिक्रियाः। नक्षीयतेमहाराज तत्र तीर्थेतु यत्कृतम्
यद्भूतंयद्भविष्यच्चतीर्थमाहात्म्यमुत्तमम्। कथितंतेमया सर्वं पृथग्भावेन भारत!
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे रुक्मिणीतीर्थमाहात्म्यवर्णनंनामद्विचत्वारिंशदधिकशततमोऽध्यायः

---

## त्रिचत्वारिंशदधिकशततमोऽध्यायः

### योजनेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महाराज योजनेश्वरमुत्तमम्। यत्र सिद्धौ पुरा कल्पेनरनारायणावृभौ
तत्रतीर्थेतपस्तप्त्वासङ्ग्रामे देवदानवैः। जयंप्राप्तौमहात्मानौ नरनारायणावुभौ
पुनस्त्रेतायुगे प्राप्ते तौदेवौ रामलक्ष्मणौ। तत्रतीर्थेपुनः स्नात्वारावणोदुर्जयोहतः
पुनः पार्थ कलौ प्राप्ते तौ देवौबलकेशवौ। वसुदेवकुले जातौ दुष्करं कर्म चक्रतुः
नरकंकालनेमिं च कंसं चाणूरमुष्टिकौ। शिशुपालं जरासन्धं जघ्नतुर्बलकेशवौ॥

# चतुश्चत्वारिंशदधिकशततमोऽध्यायः

## द्वादशीतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महाराजद्वादशीतीर्थमुत्तमम् । क्षरन्तिसर्वदानानिजपहोमबलिक्रियाः
न क्षीयतेतुराजेन्द्रचक्रतीर्थे तु यत्कृतम् । यद्भूतंयद्भविष्यच्च तीर्थमाहात्म्यमुत्तमम्
कथितं तन्मया सर्वं पृथग्भावेन भारत !॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्त्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे द्वादशीतीर्थमाहात्म्यवर्णनंनाम चतुश्चत्वारिंशदधिकशततमोऽध्यायः

---

# पञ्चचत्वारिंशदधिकशततमोऽध्यायः

## शिवतीर्थमाहात्म्यवर्णनम्

मार्कण्डेय उवाच

ततोगच्छेद्धरापाल!शिवतीर्थमनुत्तमम् । दर्शनाद्यस्यदेवस्यमुच्यते सर्व्वकिल्बिषैः

शिवतीर्थे तु यः स्नात्वा जितक्रोधो जितेन्द्रियः ।
पूजयेत महादेवं सोऽग्निष्टोमफलं लभेत् ॥ २ ॥
तत्र तीर्थे तु यो भक्त्या सोपवासोऽर्च्चयेच्छिवम् ।
अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ ३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्त्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे शिवतीर्थमाहात्म्यवर्णनं नाम पञ्चचत्वारिंशदधिकशततमोऽध्यायः

---

शुक्लाम्बरधरोनित्यंनियतःसजितेन्द्रियः। एककालंतुभुञ्जानो मासंतीर्थस्यसन्निधौ
सुवर्णालङ्कृतानां तुकन्यानांशतदानजम्। फलमाप्नोति सम्पूर्णंपितृलोकेमहीयते
पृथिव्यामासमुद्रायांमहाभोगपतिर्भवेत्। धनधान्यसमायुक्तोदाताभवतिधार्मिकः

उपवासी शुचिर्भूत्वा ब्रह्मलोकमवाप्नुयात्।
अस्माहकं समासाद्य यस्तु प्राणान्परित्यजेत्॥ १६॥

कोटिवर्षसहस्राणि रुद्रलोके महीयते। ततःस्वर्गात्परिभ्रष्टः क्षीणकर्मादिवश्च्युतः
सुवर्णमणिमुक्ताढ्ये कुलेजायेत रूपवान्। कृत्वाऽभिषेकविधिना हयमेधफलंलभेत्
धनाढ्यो रूपवान्दक्षोदाताभवतिधार्मिकः। चतुर्वेदेपुयत्पुण्यंसत्यवादिपुयत्फलम्

तत्फलं लभते नूनं तत्र तीर्थेऽभिषेचनात्।
तीर्थानां परमं तीर्थं निर्मितं शम्भुना पुरा॥ २०॥

हृदयेशः स्वयं विष्णुर्जपेद्देवं महेश्वरम्। गन्धर्वाप्सरसश्चैव मरुतो मारुतास्तथा
विश्वेदेवाश्चपितरःसचन्द्राःसदिवाकराः। मरीचिरत्र्यङ्गिरसौपुलस्त्यःपुलहःक्रतुः
प्रचेताश्च वसिष्ठश्च भृगुर्नारद एव च। च्यवनो गालवश्चैव वामदेवो महामुनिः

वालखिल्याश्च गन्धारास्तृणविन्दुश्च जाजलिः।
उद्दालकश्चर्ष्यशृङ्गो वसिष्ठश्च सनन्दनः॥ २४॥
शुकश्चैव भरद्वाजो वात्स्यो वात्स्यायनस्तथा।
अगस्तिर्मित्रावरुणौ विश्वामित्रो मुनीश्वरः॥ २५॥
गौतमश्च पुलस्त्यश्च पौलस्त्यः पुलहः क्रतुः।
सनातनस्तु कपिलो वह्निः पञ्चशिखस्तथा॥ २६॥

अन्येऽपि वहवस्तत्रमुनयःशंसितव्रताः। क्रीडन्ति देवताःसर्व्वऋषयःसतपोधनाः

मनुष्याश्चैव योगीन्द्राः पितरः सपितामहाः।
अस्माहकेऽत्र तिष्ठन्ति सर्वे एव न संशयः॥ २८॥

पितरः पितामहाश्चैवतथैवप्रपितामहाः। येषांदत्तमुपस्थायिसुकृतंवाऽपिदुष्कृतम्
अक्षयं तत्र तत्सर्वं यत्कृतं योधनीपुरे। मातरं पितरं त्यक्त्वा सर्वबन्धुसुहृज्जनात्

# षट्चत्वारिंशदधिकशततमोऽध्यायः

## अस्माहकतीर्थचतुष्टयमाहात्म्यवर्णनम्

मार्कण्डेय उवाच

अस्माहक ततो गच्छेत्पितृतीर्थमनुत्तमम् । प्रेतत्वाद्यत्र मुच्यन्ते पिण्डैर्दत्तैश्च पूर्वजा

युधिष्ठिर उवाच

अस्माहकस्य माहात्म्यं कथयस्व ममानघ । स्नानदानेन यत्पुण्यं तथा पिण्डोदकेन च

श्रीमार्कण्डेय उवाच

पुरा कल्पे नृपश्रेष्ठ ऋषिवैधसमागमे । प्रश्न पृष्टो मया तात तथा त्वमनुपृच्छसि

एकत्रसागरा सप्तसप्रयागा सपुष्करा । नास्य सामर्थ्य लभन्ते तेनात्र कार्या विचारणा

सोमनाथं तु विख्यातं यत्सोमेन प्रतिष्ठितम् । तत्र सोमग्रहे पुण्यं तत्पुण्यं लभते नर

मासान्ते पितरो नणा वीक्षन्ते सन्तति स्वकाम् ।
कश्चिदस्मात्कुलेऽस्माकं पिण्डमत्र प्रदास्यति ॥ ६ ॥
प्रपितामहास्तथा दिव्या श्रुतिरेषा सनातनी ।
एव ब्रुवन्ति देवाश्च ऋषयश्च तपोधना ॥ ७ ॥
सकृत्पिण्डोदकेनैव शृणु पार्थिव यत्फलम् ।
द्वादशाब्दानि राजेन्द्र योग भुक्त्वा सुशोभनम् ॥ ८ ॥

युगेयुगे महाराज अस्माहके पितामहा । सर्वदा ह्यवलोकन्त आगच्छन्ति स्वगोत्रजम्

भविष्यति किमस्माकममावास्याप्यमाहके ।
स्नान दान ये कुर्यु पितॄणा तिलतर्पणम् ॥ १० ॥
ते सर्वपापविनिर्मुक्ता सर्वान्कामं ल्लभन्ति वै ।
जलमध्येऽत्र भूपाल अग्नितीर्थं च तिष्ठति ॥ ११ ॥

दर्शनात्तस्य तीर्थस्य पापराशिर्विदीयते । स्नानमात्रेण राजेन्द्र ब्रह्महत्या व्यपोहति

शुक्लाम्बरधरोनित्यंनियतःसजितेन्द्रियः । एककालंतुभुञ्जानो मासंतीर्थस्यसन्निधौ
सुवर्णालङ्कृतानां तुकन्यानांशतदानजम् । फलमाप्नोति सम्पूर्णंपितृलोकेमहीयते
पृथिव्यामासमुद्रायांमहाभोगपतिर्भवेत् । धनधान्यसमायुक्तोदाताभवतिधार्मिकः

उपवासी शुचिर्भूत्वा ब्रह्मलोकमवाप्नुयात् ।
अस्माहकं समासाद्य यस्तु प्राणान्परित्यजेत् ॥ १६ ॥

कोटिवर्षसहस्राणि रुद्रलोके महीयते । ततःस्वर्गात्परिभ्रष्टः क्षीणकर्मादिवश्च्युतः
सुवर्णमणिमुक्ताढ्ये कुलेजायेत रूपवान् । कृत्वाऽभिषेकविधिना हयमेधफलंलभेत्
धनाढ्यो रूपवान्दक्षोदाताभवतिधार्मिकः । चतुर्वेदेषुयत्पुण्यंसत्यवादिषुयत्फलम्

तत्फलं लभते नूनं तत्र तीर्थेऽभिषेचनात् ।
तीर्थानां परमं तीर्थं निर्मितं शम्भुना पुरा ॥ २० ॥

द्येशः स्वयं विष्णुर्जपेद्देवं महेश्वरम् । गन्धर्वाप्सरसश्चैव मरुतो मारुतास्तथा
वेश्वेदेवाश्चपितरःसचन्द्राःसदिवाकराः । मरीचिरत्र्यङ्गिरसौपुलस्त्यःपुलहःक्रतुः
चेताश्च वसिष्ठश्च भृगुर्नारद एव च । च्यवनो गालवश्चैव वामदेवो महामुनिः

वालखिल्याश्च गन्धारास्तृणविन्दुश्च जाजलिः ।
उद्दालकश्चर्ष्यशृङ्गो वसिष्ठश्च सनन्दनः ॥ २४ ॥
शुक्रश्चैव भरद्वाजो वात्स्यो वात्स्यायनस्तथा ।
अगस्तिर्मित्रावरुणौ विश्वामित्रो मुनीश्वरः ॥ २५ ॥
गौतमश्च पुलस्त्यश्च पौलस्त्यः पुलहः क्रतुः ।
सनातनस्तु कपिलो वह्निः पञ्चशिखस्तथा ॥ २६ ॥

अन्येऽपि वहवस्तत्रमुनयःशंसितव्रताः । क्रीडन्ति देवताःसर्व्वऋषयःसतपोधनाः

मनुष्याश्चैव योगीन्द्राः पितरः सपितामहाः ।
अस्माहकेऽत्र तिष्ठन्ति सर्व एव न संशयः ॥ २८ ॥

पितरः पितामहाश्चैवतथैवप्रपितामहाः । येषांदत्तमुपस्थायिसुकृतंवाऽपिदुष्कृतम्
अक्षयं तत्र तत्सर्वं यत्कृतं योधर्नीपुरे । मातरं पितरं त्यक्त्वा सर्वबन्धुसुहृज्जनात्

धनधान्यप्रियान्पुत्रांस्त्यक्त्वा देहं नृपोत्तम । गच्छत्येवायुभूतस्तु शुभाशुभसमन्वितः
सदृश्यः सर्वभूतानां परमात्मा महत्तरः । शुभाऽशुभगतिं प्राप्तः कर्मणा स्वेन पार्थिव

युधिष्ठिर उवाच

शुभाशुभं न बन्धूनां ज्ञायते केन हेतुना । एकः प्रसूयते जन्तुरेक एव प्रलीयते ॥
एको हि भुङ्क्ते सुकृतमेकमेव हि दुष्कृतम् ॥ ३५ ॥

मार्कण्डेय उवाच

एवं त्वयोक्तो नृपते महाप्रश्नः स्मृतो मया ॥ ३६ ॥
पितामहमुखोद्गीतं शृणु ते कथयाम्यहम् । यन्मे पितामहात्पूर्वं पितातच्छ्रुतवान्सदि
न माता न पिता बन्धुः कस्यचिन्न सुहृत्क्वचित् ।
कस्य न ज्ञायते रूपं वायुभूतस्य देहिनः ॥ ३७ ॥
यद्येव न भवेत्तात लोकस्य तु नरेश्वर । अमर्यादं भवेन्नूनं विनश्यति चराचरम् ॥
एवं ज्ञात्वा पुरा राजन्समस्तैर्लोककर्तृभिः ।
मर्यादा स्थापिता लोके यथा धर्मो न नश्यति ॥ ३९ ॥
धर्मे नष्टे मनुष्याणामधर्मोऽभिभवेत्पुनः । ततः स्वधर्मचलनान्नरके गमनं ध्रुवम् ॥
लोको निरङ्कुशः सर्वो मर्यादालङ्घने रतः ।
मर्यादा स्थापिता तेन शास्त्रे धात्रा महर्षिभिः ॥ ४१ ॥
स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ।
पिण्डोदकप्रदानं च तथैवाऽतिथिपूजनम् ॥ ४२ ॥
पितरः पितामहाश्चैव तथैव प्रपितामहाः ।
त्रयो देवाः स्मृतास्तात ब्रह्मविष्णुमहेश्वराः ॥ ४३ ॥
पूजिते पूजिताः सर्वे तथा मातामहास्त्रयः ।
तस्मात्सर्वप्रयत्नेन श्रुतिस्मृत्यर्थनोदितान् ॥ ४४ ॥
धर्मं समाचरन्नित्यं पापपाशेन न लिप्यते । श्रुतिस्मृत्युदितं धर्मं मनसाऽपि न लङ्घयेत्
इह लोके परे चैव यदीच्छेच्छ्रेय आत्मनः ।

पितापुत्रौ सदाप्येकौ विम्बाद्विम्बमिवोद्भृतौ ॥ ४६ ॥
विभक्तौ वाऽविभक्तौ वा श्रुतिस्मृत्यर्थतस्तथा ।
उद्धरेदात्मनात्मानमात्मानमवसादयेत् ॥ ४७ ॥
पिण्डोदकप्रदानाभ्यामृतेपार्थ न संशयः । एवं ज्ञात्वाप्रयत्नेनपिण्डोदकप्रदोभवेत्
आयुर्धर्मौयशस्तेजःसन्ततिश्चैवचवर्द्धते। पृथिव्यांसागरान्तायांपितृक्षेत्राणियानिच
तानि ते सम्प्रवक्ष्यामि येषु दत्तं महाफलम् ।
गयायां पुष्करे ज्येष्ठे प्रयागे नैमिषे तथा ॥ ५० ॥
सन्निहत्यां कुरुक्षेत्रे प्रभासे कुरुनन्दन !। पिण्डोदकप्रदानेन यत्फलं कथितं बुधैः ॥
अस्माहके तदाऽऽप्नोति नर्मदायां न संशयः । तत्र ब्रह्मासुराश्चिव रुद्रश्चउमया सह
इन्द्राद्या देवताः सर्वे पितरोमुनयस्तथा । सागराः सरितश्चैवपर्वताश्चवलाहकाः
तिष्ठन्तिपितरः सर्वे सर्वतीर्थाधिकंततः । स्थिता ब्रह्मशिलातत्रगजकुम्भनिभान्नृप
कलौ न दृश्या भवति प्रधानं यद्गयाशिरः ।
वैशाखे मासि सम्प्राप्तेऽमावास्यां नृपोत्तम !॥ ५५ ॥
व्याप्य सा तिष्ठते तीर्थं गजकुम्भनिभा शिला ।
तच्च गव्यूतिमात्रं हि तीर्थं ततः प्रचक्षते ॥ ५६ ॥
तस्मिन्दिनेतत्रगत्वायस्तुश्राद्धप्रदो भवेत् । पितृणामक्षयातृप्तिर्जायतेशतवार्षिकी
अन्यस्यामप्यमावास्यां यः स्नात्वा विजितेन्द्रियः ।
करोति मनुजः श्राद्धं विधिवन्मन्त्रसंयुतम् ॥ ५८ ॥
तस्य पुण्यफलं यत्स्यात्तच्छृणुष्व नराधिप !।
अग्निष्टोमाश्वमेधाभ्यां वाजपेयस्य यत्फलम् ॥ ५६ ॥
तत्फलं समवाप्नोति यथा मे शङ्करोऽब्रवीत् ।
रौरवादिषु सर्वेषु नरकेषु व्यवस्थिताः ॥ ६० ॥
पिता पितामहाद्याश्च पितृके मातृके तथा । पिण्डोदकेन चैकेन तर्पणेन विशेषतः
क्रीडन्ति पितृलोकस्था यावदाभूतसम्प्लवम् ।

ये कर्मस्था विकर्मस्था ये जाता' प्रेतकल्मषा ॥ ६२ ॥
पिण्डेनैकेन मुच्यन्ते तेऽपि तत्र न सशय ।
अस्माद्दके शिला दिव्या तिष्ठते गजसन्निभा ॥ ६३ ॥
ब्रह्मणा निर्मिता पूर्वं सर्वपापक्षयङ्करी । उपयस्यायथान्याय पितृनुद्दिश्य भारत
दक्षिणाग्रेषु दर्भेषु दद्यात्पिण्डान्विचक्षण. ।
भूमौ चान्नेन सिद्धेन श्राद्ध कृत्वा यथाविधि ॥ ६५ ॥
श्राद्धिभ्यो वस्त्रयुग्मानि छत्रोपानत्कमण्डलु ।
दक्षिणा विविधा देया पितृनुद्दिश्य भारत ॥ ६६ ॥
योददातिद्विजश्रेष्ठ'तस्यपुण्यफलंशृणु । तस्यतेद्वादशाब्दानितृप्तियान्तिन सशय'
अस्माद्दके महाराज पितरश्च पितामहा ।
वायुभूता निरीक्षन्ते आगच्छन्तं स्वगोत्रजम् ॥ ६८ ॥
अत्र तीर्थे सुतोऽभ्येत्य स्नात्वा तोय प्रदास्यति ।
श्राद्ध वा पिण्डदान वा तेन यास्यामि सद्गतिम् ॥ ६९ ॥
स्नात्वैवन्तेतुयेकेचिद्धायन्तेयत्नविप्लुत । प्रीणयेत्करकस्थास्तुतेपितृभ्रान्न सशय
केशोदविन्दवस्तस्य ये चाऽन्ये लेपभागिन ।
तृप्यन्त्यनग्निसंस्कारा ये मृता' स्यु स्वगोत्रजा ॥ ७१ ॥
नव्रतार्थेतुयेकेचिच्छ्राद्ध कुर्वीतविधानत । नरकादुद्धरन्त्याशु जपन्त पितृसहिताम्
वनस्पतिगते सोमे यदा सोमदिनभवेत् । अक्षयाल्लभते लोकान्पिण्डेनैकेन मानव
अक्षय तत्र वै सर्वं जायते नाऽत्र संशय' ।
नरकादुद्धरन्त्याशु जपन्ते पितृसहिताम् ॥ ७४ ॥
तस्मिंस्तीर्थे त्वमावास्या पितृनुद्दिश्य भारत ।
नील सर्वाङ्गसम्पूर्णं गोभिऽभिवृष्य स्मु सृजेत् ॥ ७५ ॥
तस्य पुण्यफलं वक्तु न तु वाचस्पति क्षम । अस्माद्दकेवृषोत्सर्गाद्यत्पुण्यसमवाप्यते
तत शुश्रूषणात्सर्वं तत्प्रवक्ष्यामि भारत ।

रौरवादिषु ये किञ्चित्पच्यन्ते तस्य पूर्वजाः ॥ ७७ ॥
वृषोत्सर्गेण तान्सर्वांस्तारयेदेकविंशतिम् ।
लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ॥ ७८ ॥
पिङ्गः खुरविषाणाभ्यां स नीलो वृष उच्यते ।
यस्तु सर्वाङ्गपिङ्गश्च श्वेतः पुच्छखुरेषु च ॥ ७६ ॥
स पिङ्गो वृष इत्याहुः पितृणां प्रीतिवर्धनः । पारावतसवर्णश्चललाटेतिलकोभवेत्
तं वृषं बभ्रमित्याहुः पूर्णं सर्वाङ्गशोभनम् । सर्वाङ्गेष्वेकवर्णोयःपिङ्गःपुच्छखुरेषु च
खुरपिङ्गं तमित्याहुः पितृणां सद्गतिप्रदम् । नीलंसर्वशरीरेण स्वारक्तनयनं दृढम्
तमेवनीलमित्याहुर्नीलःपञ्चविधःस्मृतः । यस्तु वैश्यगृहेजातः सवैनीलोविशिष्यते
न वाहयेद्गृहे जातं वत्सकं तु कदाचन । तेनैवच वृषोत्सर्गे पितृणामनृणो भवेत्
जातं तु स्वगृहे वत्सं द्विजन्मा यस्तु-वाहयेत् ।
पतन्ति पितरस्तस्य ब्रह्मलोकगता अपि ॥ ८५ ॥
यथा यथा हि पिबति पीत्वा धूनाति मस्तकम् ।
पिबन्पितॄन्प्रीणयति नरकादुद्धरेद्धुनन् ॥ ८६ ॥
यथा पुच्छाभिघातेन स्कन्धं गच्छन्ति बिन्दवः ।
नरकादुद्धरन्त्याशु पतितान्गोत्रिणस्तथा ॥ ८७ ॥
गर्जन्प्रावृषि काले तु विषाणाभ्यां भुवं लिखन् ।
खुरेभ्यो या मृदुद्धूता तया सम्प्रीणयेद्वृषीन् ॥ ८८ ॥
पिबन्पितॄन्प्रीणयते खादनोल्लेखने सुरान् ।
गर्जन्नृषिमनुष्यांश्च धर्मरूपो हि धर्मज ! ॥ ८६ ॥
भूतैर्वापि पिशाचैर्वा चातुर्थिकज्वरेण वा ।
गृहीतोऽस्माद्दकं गच्छेत्सर्वव्यामाधिनाशनम् ॥ ६० ॥
स्नात्वा तु विमले तोये दर्भग्रन्थिं निबन्धयेत् ।
मस्तके बाहुमूले वा नाभ्यां वा गलकेऽपि वा ॥ ६१ ॥

गत्वा देवसमीपं च प्रादक्षिण्येन केशवम् । ततः संस्तुत्य मन्त्रगाथाभ्यां चापि वैष्णवम्
नारायणं शरण्येशं भयदेवनमस्कृतम् । नमो यज्ञाद्गमभूत सर्वव्यापिन्नमोऽस्तु ते
नमो नमस्ते देवेश पद्मनाभ सनातन । दामोदर जयानन्त रक्ष मां शरणागतम् ॥
त्वं धर्ता त्वं च हर्ता च जगत्यस्मिंश्चराचरे । त्वया व्याप्तमिदं सर्वं त्रिभुवनं च विभर्षि च
प्रसाद देवदेवेश सुमसन्न प्रबोधय । त्वद्ध्याननिरतो नित्यं त्वद्भक्तिपरमो हरे ॥
इति स्तुतो मया देव प्रसादं कुरु मेऽच्युत । मां रक्ष रक्ष पापेभ्यस्त्रायस्व शरणागतम्
एवं स्तुत्वा च देवेशं दानवान्तकरं हरिम् । पुनरन्येन वै स्नात्वा ततो विप्रांस्तु भोजयेत्

वेदोक्तेन विधानेन स्नानं कृत्वा यथाविधि ।
पिण्डनिर्वपणं कृत्वा ब्राह्मणैरन्यन्तिकं ततः ॥ ९९ ॥

एवं स्तुत्वा च देवेशं दानवान्तकरं हरिम् । पुनरन्येन वै स्नात्वा ततो विप्रांस्तु भोजयेत्
वेदोक्तेन विधानेन स्नानं कृत्वा यथाविधि । एवं तान्वाचयित्वा तु ततो विप्रान्विसर्जयेत्

यत्नशेषं तु किञ्चिद्धि विप्रेभ्यो निवेदयेत् ।
तत्र तीर्थे नरः स्नात्वा नारी वा भक्तितत्परा ॥
शक्तितो दक्षिणां दद्यात्कृत्वा श्राद्धं यथाविधि ॥ १०२ ॥

सवनाय नरो यश्च स्नापयेद्विधिपूर्वकम् । क्षीरेण मधुना वापि दध्ना वा शीतवारिणा
तावत्पुष्करपात्रेषु पिबन्ति पितरो जलम् । अयने विषुवे चैव युगादौ सूर्यसङ्क्रमे
पुण्ये सपूर्वपद्मशानैर्देवं प्रस्नापयेत् । सोऽश्वमेधस्य यज्ञस्य फलं प्राप्नोति पुष्कलम्
तत्र तीर्थे तु यो गत्वा सूर्यग्रहणमाचरेत् । सूर्यतेजोनिभैर्यानैर्विष्णुलोके महीयते ॥
तत्र तीर्थे तु यः श्राद्धं पितृभ्यः सम्प्रयच्छति । सत्पुत्रेण च तेनैव सम्प्राप्तं जन्मनः फलम्
इति श्रुत्वा ततो देवाः सर्वे शक्रपुरोगमाः । ब्रह्मविष्णुमहेशाद्यास्थापयाञ्चक्रिरे वरम्
सर्वरोगोपशमनं सर्वपातकनाशनम् । यस्तु संवत्सरं पूर्णममावास्यां तु भावितः
पितृभ्यः पिण्डदानं च कुर्यादस्माहके नृप । त्रिपुष्करे गयायां च प्रभासे नैमिषे तथा
यत्पुण्यं श्राद्धकृतः तातदिहैव भवेद्ध्रुवम् । तिलोदककुशैर्मिश्रं यो दद्याद्दक्षिणामुखः

मन्वादौ [redacted] युगादौ च व्यतीपाते दिनक्षये ।

यो दद्यात्पितृमातृभ्यः सोऽश्वमेधफलं लभेत् ॥ ११२ ॥
अस्माहके नरो यस्तु स्नात्वासम्पूजयेद्धरिम् ।
ब्रह्माणं शङ्करं भक्त्या कुर्याज्जागरणक्रियाम् ॥ ११३ ॥
सर्वपापविनिर्मुक्तः शक्रातिथ्यमवाप्नुयात् ।
तत्र तीर्थे नरः स्नात्वा यः पश्यति जनार्द्दनम् ॥ ११४ ॥
विशेषविधिनाऽभ्यर्च्य प्रणम्य चपुनःपुनः । सपुत्रेणघतेनैव पितॄणांविहितागतिः
एकमूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः ।
सत्कार्यकारणोपेताः सुसूक्ष्माः सुमहाफलाः ॥ ११६ ॥
एतत्ते कथितं राजन्महापातकनाशनम् ।
अस्माहकस्य माहात्म्यं किमन्यत्परिपृच्छसि ॥ ११७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डेऽस्माहकतीर्थमाहात्म्यवर्णनं नामषट्चत्वारिंशदधिकशततमोऽध्यायः॥

---

# सप्तचत्वारिंशदधिकशततमोऽध्यायः

## सिद्धेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल सिद्धेश्वरमनुत्तमम् । नर्मदादक्षिणे कूले तीर्थं परमशोभनम्
तत्र तीर्थे तु यः स्नात्वा पूजयेद् वृषभध्वजम् ।
सर्वपापविनिर्मुक्तो गतिं यात्यश्वमेधिनाम् ॥ २ ॥
तत्रतीर्थे तु यः स्नात्वाश्राद्धंकुर्यात्प्रयत्नतः । पितॄणांप्रीणनार्थायसर्वं तेन कृतंभवेत्
तत्र तीर्थे मृतानां तुजन्तूनां नृपसत्तम । गर्भवासे मतिस्तेषां न जायेत कदाचन

गर्भवासो हि दुःखाय नसुखायकदाचन । तत्तीर्थवारिणा स्नातुर्न पुनर्भवसम्भव
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे सिद्धेश्वरतीर्थमाहात्म्यवर्णनं नाम सप्तचत्वारिंशदधिकशततमोऽध्याय

---

## अष्टचत्वारिंशदधिकशततमोऽध्याय.

### मङ्गलेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल तीर्थमङ्गारकशिवम् । उत्तरे नर्मदाकूले सर्वपापक्षयङ्करम्
चतुर्थ्यङ्गारकदिने सकल्पकृतनिश्चय । स्नायादस्त गते सूर्ये सन्ध्योपासनतत्पर

पूजयेल्लोहित भक्त्या गन्धमाल्यविभूषणैः ।
संस्थाप्यस्थण्डिले देव रक्तचन्दनचर्चितम् ॥ ३ ॥

अङ्गारकायेति नम कर्णिकायामपूजयेत् । कुजायभूमिपुत्राय रक्ताङ्गाय सुवाससे
हरकोपोद्भवायेति स्वेदजायाऽतिबाहवे । सर्वकामप्रदायेति पूर्वादिषु दलेषु च
एव सम्पूज्य विधिवद्द्यादर्घ्यंविधानत । भूमिपुत्र महावीर्य स्वेदोद्भव पिनाकिन

अङ्गारक महातेजा लोहिताङ्ग नमोऽस्तु ते ।
करक वारिसयुक्त शालितन्दुलपूरितम् ॥ ७ ॥
सहिरण्य सवस्त्र च मोदकोपरि संस्थितम् ।
ब्राह्मणाय निवेद्य तत्कुजो मे प्रीयतामिति ॥ ८ ॥

अर्घ्यंदत्त्वाविधानेनरक्तचन्दनवारिणा । रक्तपुष्पसमाकीर्णं तिलतन्दुलमिश्रितम्
कृत्वा ताम्रमये पात्रेमण्डलेवर्तुलेशुभे । कृत्वा शिरसितत्पात्र जानुभ्यांधरणींगत
मन्त्रपूत महाभाग दद्यादर्घ्यंविचक्षण । ततोभुञ्जीत मौनेन क्षारतैलादिवर्जितम्
स्निग्ध मृदुसमधुरमात्मन श्रेय इच्छता । एवं चतुर्थ्यां सप्राप्ते चतुर्थ्यंगारके नृप

सौवर्णं कारयेद्देवं यथाशक्ति सुरूपिणम् । स्थापयेत्ताम्रके पात्रे गुडपीठसमन्विते
गन्धपुष्पादिभिर्देवं पूजयेद्‌ गुडसंस्थितम् ।
ईशान्यां स्थापयेद्देवं गुडतोयसमन्वितम् ॥ १४ ॥
कासारेणतथाग्नेय्यां स्थापयेत्करकं परम् । रक्ततंदुलसंमिश्रंनैरृत्यांवायुगोचरे
स्थापयेन्मोदकैः सार्धं चतुर्थंकरकंबुधः । सूत्रेण वेष्टितग्रीवं गन्धमाल्यैरलङ्कृतम्
शङ्खतूर्यनिनादेन जयशब्दादिमङ्गलैः । रक्ताम्बरधरं विप्रं रक्तमाल्यानुलेपनम् ॥
वेदिमध्यगतं वाऽपि महदासनसंस्थितम् । सुरूपं सुभगं शान्तं सर्वभूतहिते रतम्
वेदविद्याव्रतस्नातं सर्वशास्त्रविशारदम् । पूजयित्वायथान्यायंचार्चयेत्पाण्डुनन्दन
रक्तां गां च ततो दद्याद्रक्तेनानडुहा सह । प्रीयतां भूमिजोदेवः सर्वदैवतपूजितः ॥
विप्रं प्रदक्षिणीकृत्य पत्नीपुत्रसमन्वितः ।
पितृमातृसुहृद्भृत्यसार्द्धं क्षमाप्य च विसर्जयेत् ॥ २१ ॥
एवंकृतस्यतस्याऽथ तस्मिन्तीर्थे विशेषतः । यत्पुण्यफलमुद्दिष्टंतत्तेसर्वंवदाम्यहम्
सप्त जन्मानि राजेन्द्र! सुरूपः सुभगो भवेत् ।
तीर्थस्याऽस्य प्रभावेन नाऽत्र कार्या विचारणा ॥ २३ ॥
अकामो वा सकामोवातत्र तीर्थे मृतो नरः । अङ्गारकपुरं याति देवगन्धर्वपूजितः
उपभुज्य यथान्यायं दिव्यान्भोगाननुत्तमान् ।
इह मानुष्यलोके वै राजा भवति धार्मिकः ॥ २५ ॥
सुरूपः सुभगश्चैव सर्वव्याधिविवर्जितः । जीवेद्वर्षशतं साग्रं सर्वलोकनमस्कृतः ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे मङ्गलेश्वरतीर्थमाहात्म्यवर्णनंनामाऽष्टाचत्वारिंशदधिकशततमोऽध्यायः

---

नाऽवसर्पति हृत्पद्मात्स योगी नाऽत्र संशयः ॥ १६ ॥
ते भाग्यहीना मनुजाः सुशोच्यास्ते भूमिभाराय कृतावताराः ।
अचेतनास्ते पशुभिः समाना ये भक्तिहीना भगवत्यनन्ते ॥ १७ ॥
ते पूर्णकार्याः पुरुषाः पृथिव्यां ते स्वाङ्गपाताद्भुवनं पुनन्ति ।
विचक्षणा विश्वविभूषणास्ते ये भक्तियुक्ता भगवत्यनन्ते ॥ १८ ॥
सएव सुकृती तेन लब्धं जन्मतरोःफलम् । चित्तेवचसिकाये च यस्यदेवोजनार्द्दनः
एतत्तीर्थवरं पुण्यंलिंगोयत्र जनार्द्दनः । वञ्चयित्वारिपून्संख्ये क्रोडोभूत्वासनातनः
उपप्लवे चन्द्रमसो रवेश्च योऽष्टकानामयनद्वये च ।
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ॥ २१ ॥
घोणोन्मीलितमेरुरन्ध्रनिवहो दुःखाब्धिमज्जत्प्लवः ।
प्रादुर्भूतरसातलोदरगृहत्पङ्कार्द्रमग्नक्षुरः ॥
फूत्कारोत्करनुन्नवातविदलद्दिग्दन्तिनादश्रुति-
न्यस्तस्तब्धवपुः श्रुतिर्भवतु वः क्रोडो हरिः शान्तये ॥ २२ ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे-
रेवाखण्डे लिङ्गवाराहतीर्थमाहात्म्यवर्णनंनामैकोनपञ्चाशदधिकशततमोऽध्यायः

---

## पञ्चाशदधिकशततमोऽध्यायः

### श्वेतवाराहतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महाराजकुसुमेश्वरमुत्तमम् । दक्षिणे नर्मदाकूले उपपातकनाशनम् ॥
कामेन स्थापितोदेवः कुसुमेश्वरसञ्ज्ञितः । ख्यातःसर्वेषु लोकेषु देवदेवः सनातनः
कामो मनोभवो विश्वः कुसुमायुधचापभृत् ।

स कामान्ददाति सर्वान्पूजितो भक्तिकेनन ॥ ३ ॥

तन निर्दग्धकायेन चाराध्य परमेश्वरम् । अनङ्गेन तथा प्राप्तमङ्गित्वं नर्मदातटे ।

युधिष्ठिर उवाच

अङ्गिभूतस्य नाशान्यमनङ्गस्य तु मे वद । न श्रुतं न च मे दृष्टं भूतपूर्वं कदाचन ।
एतत्सर्वं यथा वृत्तमाचक्ष्व द्विजसत्तम । श्रोतुमिच्छामि विप्रेन्द्र भीमानुं नयमे सह

श्रीमार्कण्डेय उवाच

आद्ये कृतयुगे तात देवदेवो महेश्वर । तपश्चचार विपुलं गङ्गासागरसंस्थितः ॥
तेनसम्पादितालोकास्तपसा ससुरासुरा । जग्मुस्तेशरणं सर्वे देवदेवं शचीपतिम्
व्यापक सर्वभूतानां देवदेवो महेश्वर । सतापयति लोकांस्त्रींस्तन्निवारय गोपते
श्रुत्वा तद्वचनं तेषां देवानां सत्कृतक्रतुः । चिन्तयामास मनसा तपोविघ्नाय चादिशत्

अप्सरा मेनका रम्भा घृताची च तिलोत्तमाम् ।

वसन्तं कोकिलं कामं दक्षिणानिलमुत्तमम् ॥ ११ ॥

गत्वा तत्र महादेव तपश्चरणतत्परम् । क्षोभयध्वं यथान्याय गङ्गासागरवासिनम्
एतमुक्तास्तु ते सर्वे देवराजेन भारत । देवाप्सरः समोपेता जग्मुस्ते हरसन्निधौ

वसन्तमासे कुसुमाकराकुले मयूरदात्यूहतुकोकिलाकुले ।

प्रनृत्यदप्सरसां निकुञ्जे प्रवाति वाते मलयेऽतिसाकुले ॥ १४ ॥

तत्र सम्मूर्छिताः सर्वे मन्मथास्त्र सगात्मा । मधुमाधवगन्धेन सकिन्नरमहोरगा
यावदालोकने तावत्तद्वन व्याकुलाश्रितम् । चाम्पते मदनाविष्ट दशावस्थागतं जनम्

दृष्ट्वाऽपि ध्यानामवस्थात्रितयगत ।

सात्त्विकी राजसी तामसी ता शृणुष्व मे ॥ १७ ॥

एक योगसमाधिना मुकुलितं चक्षुर्द्वितीयं पुन

पार्वत्या वदनस्थले स्तनतटे शृङ्गारभारालसम् ।

अन्यद्दूरनिरस्तचापमदनक्रोधानलोद्दीपित

शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ १८ ॥

एवं दृष्टः स देवेन सशरः सशरासनः। भस्मीभूतोगतःकामोविनाशः सर्वदेहिनाम्
कामं दृष्ट्वा क्षयं यातं तत्र देवाप्सरोगणाः।
भीता यथाऽऽगतं सर्वे जग्मुश्चैव दिशो दश ॥ २० ॥
कामेन रहिता लोकाः ससुरासुरमानवाः। ब्रह्माणंशरणंजग्मुर्देवा इन्द्रपुरोगमाः
सीदमानंजगद्दृष्ट्वा तमूचुः परमेष्ठिनम्। जानामित्वंजगच्छेदंप्रभो मैथुनसम्भवात्
प्रजाः सर्वा विशुष्यन्ति कामेन रहिता विभो !॥ २२ ॥
एतच्छ्रुत्वा वचस्तेषां देवानां प्रपितामहः। जगाम सहितस्तत्र यत्रदेवो महेश्वरः
अतोषयज्जगन्नाथं सर्वभूतमहेश्वरम्। स्तुतिभिस्तण्डकैः स्तोत्रैर्वेदवेदाङ्गसम्भवैः
ततस्तुष्टो महादेवो देवानां परमेश्वरः। उवाच मधुरां वाणीं देवान्ब्रह्मपुरोगमान्
किं कार्यं कश्च सन्तापः किं वाऽऽगमनकारणम्।
देवतानामृषीणां च कथ्यतां मम मा चिरम् ॥ २७ ॥

देवा ऊचुः

कामनाशाज्जगन्नाशो भविताऽयं चराचरे।
त्रैलोक्यं त्वं पुनः शम्भो उत्पातयितुमर्हसि ॥ २८ ॥
एतच्छ्रुत्वावचस्तेषांविमृश्यपरमेश्वरः। चिन्तयामासकामस्यविग्रहम्भुविदुर्लभम्
आजगाम ततः शीघ्रमनङ्गो ह्यङ्गतां गतः। प्राणदःसर्वभूतानां पश्यतां नृपसत्तम
ततः शङ्खनिनादेन भेरीणां निःस्वनेन च। अभ्यनन्दंस्ततो देवं सुरासुरमहोरगाः
नमस्ते देवदेवेश कृतार्थाः सुरसत्तमाः। विसर्जिताः पुनर्जग्मुर्यथागतमरिन्दम ॥
गतेषु सर्वदेवेषु कामदेवोऽपि भारत। तपश्चचार विपुलं नर्मदातटमाश्रितः ॥३३॥
तपोजपकृशीभूतो दिव्यं वर्षशतंकिल। महाभूतैर्विघ्नकरैः पीड्यमानः समन्ततः ॥
आत्मविघ्नविनाशार्थं संस्मृतः कुण्डलेश्वरः। चकार रक्षांसर्वत्र शरपाते नृपोत्तम
ततस्तुष्टो महादेवो दृढभक्त्या वरप्रदः।
वरेण च्छन्दयामास कामं कामविनाशनः ॥ ३६ ॥
ज्ञात्वा तुष्टं महादेवमुवाच झषकेतनः। प्रणतः प्राञ्जलिर्भूत्वा देवदेवं त्रिलोचनम्

यदि तुष्टोऽसि देवेश ! यदि देयो वरो मम ।
अत्र तीर्थे जगन्नाथ ! सदा सन्निहितो भव ॥ ३८ ॥
तथेति चोक्त्वा वचनं देवदेवो महेश्वरः ।
अगमाऽऽकाशमाविश्य स्तूयमानोऽप्सरोगणैः ॥ ३९ ॥

गते चाऽदर्शनं देवे कामदेवो जगद्गुरुम् । स्थापयामास राजेन्द्र कुसुमेश्वरसञ्ज्ञितम्
तत्र तीर्थे तु यः स्नात्वा ह्युपवासपरायणः । चैत्रमासे चतुर्दश्यां मदनस्य दिनेऽथवा
प्रभाते विमले प्राप्ते स्नात्वा पूज्य दिवाकरम् । तिलमिश्रेण तोयेन तर्पयेत् पितृदेवता
कृत्वा स्नानविधानेन पूजयित्वा च तं नृप । पिण्डनिर्वपणं कुर्यात्तस्य पुण्यफलं शृणु

सत्रयाजिफलं यच्च लभते द्वादशाब्दिकम् ।
पिण्डदानात्फलं तच्च लभते नाऽत्र संशयः ॥ ४४ ॥

अङ्कोलमूले च पिण्डं पितॄनुद्दिश्य दापयेत् । तस्य ते द्वादशाब्दानि तृप्तिं यान्ति पितामहाः
कृमिकीटपतङ्गा ये तत्र तीर्थे युधिष्ठिर । प्राप्नुवन्ति मृताः स्वर्गं किं पुनर्ये नरा मृताः

सन्न्यासं कुरुते योऽत्र जितक्रोधो जितेन्द्रियः ।
कुसुमेशे नरो भक्त्या स गच्छेच्छिवमन्दिरम् ॥ ४७ ॥

तत्र दिव्याप्सरोभिश्च देवगन्धर्वगायनैः । क्रीडन्ते सेव्यमानस्तु कल्पकोटिशतं नृप

पूर्णे चैव तत्र काले इह मानुष्यतां गतः ।
जायते राजराजेन्द्र पूज्यमानो नृपो महान् ॥ ४९ ॥
सुरूपः सुभगो वाग्मी विद्वान्तो मतिमाञ्छुचिः ।
जीवेद्वर्षशतं साग्रं सर्वव्याधिविवर्जितः ॥ ५० ॥

एतत्पुण्यं पापहरं तीर्थकोटिशताधिकम् । कुसुमेशेति विख्यातं सर्वदेवनमस्कृतम्

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे कुसुमेश्वरतीर्थमाहात्म्यवर्णनं नाम
पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

——

## एकपञ्चाशदधिकशततमोऽध्यायः

### श्वेतवाराहतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

उत्तरे नर्मदाकूले तीर्थं परमशोभनम् । जयवाराहमाहात्म्यं सर्वपापप्रणाशनम् ॥

उद्धृता जगती येन सर्वदेवनमस्कृता । लोकानुग्रहबुद्ध्या च संस्थितो नर्मदातटे

तत्र तीर्थे तु यः स्नात्वा वीक्षते मधुसूदनम् ।
मुच्यते सर्वपापेभ्यो दशजन्माऽनुकीर्त्तनात् ॥ ३ ॥

मत्स्यःकूर्मो वराहश्च नरसिंहोऽथवामनः । रामोरामश्चकृष्णश्च बुद्धःकल्किश्चतेदश

युधिष्ठिर उवाच

मत्स्येन किं कृतं तात कूर्मेणमुनिसत्तम ।। वराहेण च किं कर्म नरसिंहेनकिंकृतम्

मनेन च रामेण राघवेण च किं कृतम् । बुद्धरूपेणकिंवाऽपिकल्किनाकिंकृतंवद

मुक्तस्तु विप्रेन्द्रो धर्मपुत्रेण धीमता । उवाच मधुरांवाणीं तदा धर्मसुतम्प्रति

श्रीमार्कण्डेय उवाच

मीनो भूत्वा पुरा कल्पे प्रीत्यर्थं ब्रह्मणो विभुः ।
समर्पयत्समुद्धृत्य वेदान्मग्नान्महार्णवे ॥ ८ ॥

मृतोत्पादने राजन्कूर्मोभूत्वाजगद्गुरुः । मन्दरंधारयामास तथादेवींवसुन्धराम्

उज्जहार धरां मग्नां पातालतलवासिनीम् ।
वाराहं रूपमास्थाय देवदेवो जनार्द्दनः ॥ १० ॥

रस्यार्द्धतनुं कृत्वा सिंहस्यार्द्धतनुं तथा । हिरण्यकशिपोर्वक्षोविददारनखांकुशैः

टीवामनरूपेण स्तूयमानोद्विजोत्तमैः । तद्दिव्यंरूपमास्थायक्रमित्वामेदिनींक्रमैः

कृतवांश्च बलिं पश्चात्पातालतलवासिनम् ।

## द्विपञ्चाशदधिकशततमोऽध्यायः

### भार्गलेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेद्धरापाल भार्गलेश्वरमुत्तमम्। शङ्करं जगतः प्राणं स्मृतमात्रावनाशनम्
तत्र तीर्थेतुयः स्नात्वा पूजयेत्परमेश्वरम्। अश्वमेधस्ययज्ञस्य फलंप्राप्नोतिमानवः
तत्र तीर्थे तु यः कश्चित्प्राणत्यागं करिष्यति।
अनिवर्त्तिका गतिस्तस्य रुद्रलोकादसंशयम्॥ ३॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे भार्गलेश्वरतीर्थमाहात्म्यवर्णनंनाम द्विपञ्चाशदधिकशततमोऽध्यायः

---

## त्रिपञ्चाशदधिकशततमोऽध्यायः

### आदित्येश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तस्यैवानन्तरं चान्यद्रवितीर्थमनुत्तमम्। तस्य सन्दर्शनादेवमुच्यन्ते पातकैर्नराः
रवितीर्थे तु यः स्नात्वा नरः पश्यति भास्करम्।
तस्य यत्फलमुद्दिष्टं स्वयं देवेन तच्छृणु॥ २॥
नान्धो न मूको बधिरःकुलेभवतिकश्चन। कुरूपःकुनखीचापितस्य जन्मानिषोडश॥
दद्रुश्चित्रककुष्ठानि मण्डलानि विचर्चिका।
नश्यन्ति देवभक्तस्य षण्मासान्नात्र संशयः॥ ४॥
चरितं तस्य देवस्य पुराणेयच्छ्रुतंमया। नतत्कथयितुं शक्यं सङ्क्षेपेण नृपोत्तम॥

तत्र तीर्थे तु यच्छ्राद्धं रविमुद्दिश्य दीयते ।
विधिना पात्रविप्राय तस्यान्तो नाऽस्ति कर्हिचित् ॥ ६ ॥
अयने विषुवे चैवचन्द्रसूर्यग्रहे तथा । रवितीर्थप्रदत्तानां दानानां फलमुत्तमम
सङ्क्रान्तीयानिदानानिहव्यकव्यानिभारत ।अपामिवसमुद्रस्यतेषामन्तोनलभ्
येनयेन यदा दत्तयेनयेन यदा हुतम् । तस्य तस्य तदा काले सविता प्रतिदाय
सप्त जन्मानि तान्येव ददात्यर्क पुन पुन । शतमिन्दुक्षये दान सहस्रतु दिनक्ष
सङ्क्रान्तौ शतसाहस्र व्यतीपाते त्वनन्तकम् ॥ ११ ॥
युधिष्ठिर उवाच
रवितीर्थकथतात पुण्यात्पुण्यतरस्मृतम् । विस्तरेणममाख्याहिश्रवणीममलम्पः
श्रीमार्कण्डेय उवाच
शृणुष्वाऽवहितो भूत्वा ह्यादित्येश्वरमुत्तमम् ।
उत्तरे नर्मदाकूले सर्वव्याधिविनाशनम् ॥ १३ ॥
पुरा कृतयुगस्याऽऽदौ जाबालिर्ब्राह्मणोऽभवत् ।
वसिष्ठाऽन्वयसम्भूतो वेदशास्त्रार्थपारग ॥ १४ ॥
पतिव्रता साधुशीला तस्य भार्या मनस्विनी ।
ऋतुकाले तु सा गत्वा भर्तारमिदमब्रवीत् ॥ १५ ॥
वर्तते ऋतुकालो मे भर्तार त्वामुपस्थिता ।
भज मा प्रीतिसयुक्त पुत्रकामा तु कामिनीम् ॥ १६ ॥
एवमुक्तो द्विज प्राह प्रियेऽद्याऽहं व्रतान्वित ।
गच्छेदानीं वरारोहे दास्य ऋत्वन्तरे पुन ॥ १७ ॥
पुनर्द्वितीये सम्प्राप्ते ऋतुकालेऽप्युपस्थिता ।
पुन सा च्छन्दिता तेन व्रतस्थोऽद्येति भारत ॥ १८ ॥
इत्थ वाचदुशस्तेनच्छन्दिताचपुन पुन । निराशाचाऽभवत्तत्रभर्तार प्रतिभामिनी
दुःखेन महता विप्रा विधायानशन मृता । तेन भ्रूणहतेनैव पापेन सहसा द्विज ।

शीर्णघ्राणाङ्घ्रिरभवत्तपः सर्वं ननाश च। दृष्ट्वात्मानंसकुष्ठेन व्याप्तं ब्राह्मणसत्तमः
विषादं परमं गत्वानर्मदातटमाश्रितः। अपृच्छद्भास्करंतीर्थं द्विजेभ्यो द्विजसत्तमः

आरोग्यं भास्करादिच्छेदिति सञ्चिन्त्य चेतसि।
कुतस्तद्भास्करं तीर्थं भो द्विजाः कथ्यतां मम ॥ २३ ॥
तपस्तप्स्याम्यहं गत्वा तस्मिंस्तीर्थे सुभावितः ॥ २४ ॥

द्विजा ऊचुः

रेवायाउत्तरे कूलेआदित्येश्वरनामतः। विद्यतेभास्करंतीर्थं सर्वव्याधिविनाशनम्
तत्रयाह्यविचारेण गन्तुंचेच्छक्यतेत्वया। एवमुक्तोद्विजैर्विप्रो गन्तुं तत्र प्रचक्रमे ॥

व्याधिना परिभूतस्तु घोरेण प्राणहारिणा।
यदा गन्तुं न शक्नोति तदा तेन विचिन्तितम् ॥ २७ ॥

सामर्थ्यं ब्राह्मणानां हि विद्यतेभुवनत्रये। लिङ्गपातः कृतो विप्रैर्देवदेवस्यशूलिनः

समुद्रः शोषितो विप्रैर्विन्ध्यश्चापि निवारितः।
अहमप्यत्र संस्थस्तु ह्यानयिष्यामि भास्करम् ॥ २६ ॥

तपोबलेन महताह्यादित्येश्वरसञ्ज्ञितम्। इतिनिश्चित्यमनसाह्यग्रे तपसिसंस्थितः

वायुभक्षो निराहारो ग्रीष्मे पञ्चाग्निमध्यगः।
शिशिरे तोयमध्यस्थो वर्षास्वप्रावृताकृतिः ॥ ३१ ॥
साग्रे वर्षशते पूर्णे रविस्तुष्टोऽब्रवीदिदम् ॥ ३२ ॥

सूर्य उवाच

वरं वरय भद्रं ते किं ते मनसि वाञ्छितम्।
अदेयमपि दास्यामि ब्रूहि मां त्वं चिरं कृथाः ॥ ३३ ॥
किमसाध्यं हि ते विप्र! इदानीं तपसि स्थितः ॥ ३४ ॥

जावालिरुवाच

यदि तुष्टोऽसि देवेश यदि देयो वरो मम। मम प्रतिज्ञा देवेश ह्यादित्येश्वरदर्शने ॥

कृता तां पारितुं देव! न शक्तो व्याधिनावृतः।

शुक्लतीर्थेऽत्र तिष्ठ त्वमादित्येश्वरमूर्तिधृक् ॥ २६ ॥
एवमुक्ते तु देवेशो वटुरूपो दिवाकरः । उत्तरे नर्मदाकूले क्षणादेव व्यदृश्यत ॥२७॥
तदाप्रभृति भूपाल तद्धि तीर्थं प्रचक्षते । सर्वपापहरं प्रोक्तं सर्वदुःखविनाशनम् ॥
यस्तु संवत्सरं पूर्णं नित्यमादित्यवासरे ।
स्नात्वा प्रदक्षिणां चात्र दत्त्वा पश्यति भास्करम् ॥ २९ ॥
यत्फलं लभते तेन तच्छृणुष्व यथोदितम् । प्रसुप्ते मण्डलानीह दद्रुकुष्ठविचर्चिकाः
नश्यन्ति सत्वरं राजन्स्त्र्यादिविविधाऽनघ । धनपुत्रकलत्राणां पूर्येद्वत्सरत्रयात्
यस्तु श्राद्धप्रदस्तत्र पितॄनुद्दिश्य सङ्क्रमे । तृप्यन्ति पितरस्तस्य पितृदेवो हि भास्करः
इति ते कथितं सर्वमादित्येश्वरमुत्तमम् । सर्वपापहरं दिव्यं सर्वरोगविनाशनम् ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे आदित्येश्वरतीर्थमाहात्म्यवर्णनं नाम त्रिपञ्चाशदधिकशततमोऽध्यायः

---

## चतुःपञ्चाशदधिकशततमोऽध्यायः

### कलकलेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

नर्मदादक्षिणेकूले तीर्थं कलकलेश्वरम् । विख्यातं सर्वलोकेषु स्वयं देवेन निर्मितम्
अन्धकं समरे हत्वा देवदेवो महेश्वरः । सहितो देवगन्धर्वैः किन्नरैश्च महोरगैः ॥
शङ्खतूर्यनिनादैश्च मृदङ्गपणवादिभिः । वीणावेणुरवैश्चान्यैः स्तुतिभिः पुष्कलादिभिः
गायन्ति सामानि यत्र वि चान्येश्छन्दांसि चान्ये ऋचमुद्गिरन्ति ।
स्तोत्रैरनेकैरपरे गृणन्ति महेश्वरं तत्र महानुभावाः ॥ ४ ॥
प्रमथानां निनादेन कलकलेन च वन्दितम् ।
यस्मात्प्रतिष्ठितं लिङ्गं तस्माज्जातं तदाख्यया ॥ ५ ॥

तत्र तीर्थे तु यः स्नात्वा वीक्षेत्कलकलेश्वरम् ।
वाजपेयात्परं पुण्यं स लभेन्मानवो भुवि ॥ ६ ॥
तेनपुण्येनपूतात्मा प्राणत्यागाद्दिवंव्रजेत् । आरूढःपरमंयानं गीयमानोऽप्सरोगणैः
उपभुज्यमहाभोगान्कालेनमहताततः । मर्त्यकेलोकेमहात्माऽसौजायतेविमलेकुले
ब्राह्मणःसुभगो लोके वेदवेदाङ्गपारगः । व्याधिशोकविनिर्मुक्तोजीवेच्चशरदांशतम्
इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे कलकलेश्वरतीर्थफलमाहात्म्यवर्णनं नाम
चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

---

# पञ्चपञ्चाशदधिकशततमोऽध्यायः

## चाणक्यसिद्धिप्राप्तिवर्णनम्

श्रीमार्कण्डेय उवाच

अतः परं प्रवक्ष्यामि सर्वतीर्थादनुत्तमम् । उत्तरे नर्मदाकूले शुक्लतीर्थं युधिष्ठिर ॥
तस्य तीर्थस्य चाऽन्यानि पुण्यत्वाच्छुभदर्शनात् ।
पृथिव्यां सर्वतीर्थानि कलां नार्हन्ति षोडशीम् ॥ २ ॥

युधिष्ठिर उवाच

तस्य तीर्थस्य माहात्म्यं श्रोतुमिच्छामि तत्त्वतः ।
भ्रातृभिः सहितः सर्वैस्तथान्यैर्द्विजसत्तमैः ॥ ३ ॥

श्रीमार्कण्डेय उवाच

शुक्लतीर्थस्य चोत्पत्तिमाकर्णय नरेश्वर !॥ यस्य सन्दर्शनादेव ब्रह्महत्या प्रलीयते ॥
नर्मदासरितां श्रेष्ठा सर्वपापप्रणाशिनी । यच्च बाल्ये कृतं पापं दर्शनादेव नश्यति
मोक्षदानिन सर्वत्र शुक्लतीर्थमृते नृप । शुक्लतीर्थस्य माहात्म्यं पुराणेयच्छ्रुतं मया

समागमे मुनीनां तु देवानां हि तथैव च । कथितं देवदेवेन शितिकण्ठेन भारत
कैलासे पर्वतश्रेष्ठे तत्ते सङ्कथयाम्यहम् ॥ ७ ॥
पुरा कृतयुगस्याऽऽदौ तोषयित्वा गिरिजापतिम् । तपश्चचार विपुलं विष्णुर्वर्षसहस्रकम्
वायुभक्षो निराहारः शुक्लतीर्थे व्यवस्थितः ॥ ८ ॥
ततः प्रत्यक्षतामागाद्देवदेवो महेश्वरः । प्रादुर्भूतस्तु सहसा तत्र तीर्थं नराधिप
कोशाह्वयमिदं पार्थ भुक्तिमुक्तिप्रदायकम् ।
तस्मिंस्तीर्थे नरः स्नात्वा मुच्यते सर्वकिल्बिषैः ॥ १० ॥
गङ्गा कनखले पुण्या कुरुक्षेत्रे सरस्वती । ग्रामे वा यदि वाऽरण्ये पुण्या सर्वत्र नर्मदा
सर्वौषधीनामशनं प्रधानं सर्वेषु पेयेषु जलं प्रधानम् ।
निद्रा सुखानां प्रमदा रतीनां सर्वेषु गात्रेषु शिरः प्रधानम् ॥ १२ ॥
स्नातस्याऽपि यथा पुण्यं [illegible] नृपसत्तम ।
शुक्लतीर्थं तथा पुण्यं नर्मदायां युधिष्ठिर ॥ १३ ॥
सरितां च यथा गङ्गा देवतानां जनार्दनः । शुक्लतीर्थं तथा पुण्यं नर्मदायां व्यवस्थितम्
चतुष्पदानां सुरभिर्वर्णानां ब्राह्मणो यथा । प्रधानं सर्वतीर्थानां शुक्लतीर्थं तथा नृप
ग्रहाणां तु यथाऽऽदित्यो नक्षत्राणां यथा शशी ।
शिरो वा सर्वगात्राणां धर्माणां सत्यमिष्यते ॥ १६ ॥
तथैव पार्थ तीर्थानां शुक्लतीर्थमनुत्तमम् । दुर्विज्ञेयो यथा लोके परमात्मा सनातनः
सुसूक्ष्मत्वादनिर्देश्यं शुक्लतीर्थं तथा नृप । मन्दप्रज्ञत्वमापन्नो महामोहसमन्वितः
शुक्लतीर्थं न जानाति नर्मदातटसंस्थितम् । बहुनाऽत्र किमुक्तेन धर्मपुत्र पुनः पुनः
शुक्लतीर्थं महापुण्यं सम्प्राप्तं कल्मषक्षयात् ।
योऽत्र दत्तशुचिर्भूत्वा एकं स्वजलाञ्जलिम् ॥ २० ॥
कल्पकोटिसहस्राणि पितरस्तेन तर्पिताः ॥ २१ ॥
एकः पुत्रो धरापृष्ठे पितृणामार्तिनाशनः ।
चाणक्यो नाम राजाऽभूच्छुक्लतीर्थं च वेद सः ॥ २२ ॥

युधिष्ठिर उवाच

कोऽसौ द्विजवरश्रेष्ठ! चाणक्योनाम नामतः ।
शुक्रतीर्थस्य यो वेत्ता नाऽन्यो वेत्ता हि कश्चन ॥ २३ ॥
केनोपायेन तत्तीर्थं तेन ज्ञातं धरातले । तदहं श्रोतुमिच्छामि परंकौतूहलं हि मे

श्रीमार्कण्डेय उवाच

इक्ष्वाकुप्रभवोराजानप्ताशुद्धोदनस्यच । चाणक्योनामराजर्षिर्बुभुजेपृथिवीमिमाम्
विक्रान्तोमतिमाञ्च्छूरः सर्वलोकैरवञ्चितः ।
वञ्चितः सहसा धूर्तवायसाभ्यां नृपोत्तमः ॥ २६ ॥

युधिष्ठिर उवाच

कथंसवञ्चितोराजावायसाभ्यां कुतोऽथवा । पुरायेनप्रतिज्ञातंधीगर्भेणमहात्मना
न जीवे वञ्चितोऽन्येन प्राणांस्त्यक्ष्ये न संशयः ।
एतन्मे वद विप्रेन्द्र! परं कौतूहलं मम ॥ २८ ॥

श्रीमार्कण्डेय उवाच

आत्मानंवञ्चितंज्ञात्वा तदा संगृह्य वायसौ । प्रेषयामासतीव्रेणदण्डेनयमसादनम्

वायसावूचतुः

सुन्दोपसुन्दयोः पुत्रावावां काकत्वमागतौ ।
मावधीस्त्वं महाभाग! कस्मिंश्चित्कारणान्तरे ॥ ३० ॥
तावावां कृतसङ्कल्पौ त्वयाऽकोपेन मानद !।
निरस्तावनिरस्तौ वा यास्यावः परमां गतिम् ॥ ३१ ॥
तदादेशय राजेन्द्रकृत्वातव महत्प्रियम् । मुक्तशापोभविष्यावो ब्रह्मणोवचनंतथा
तच्छ्रुत्वाकाकवचनंचाणक्योनृपसत्तमः । नाहंजीवेचिदित्वैवंवञ्चितःकेनकर्हिचित्
तस्मात्तीर्थं विजानीतं यमस्य सदने द्विजौ ।
प्रेषयामि यथान्यायं श्रुत्वा तत्कथयिष्यथः ॥ ३४ ॥
तेनैवमुक्तौ तौ काकौस्रक्चन्दनविभूषितौ । शीघ्रगौप्रेषयामासयमस्यसदनम्प्रति

राज्ञोवाच

तत्रधर्मपुरं गत्वाविचरन्तावितस्ततः । यदिपृच्छति धर्मात्मायम सयमनोमह
कुतोयामागतौकृत केनवा भूषितावुभौ । मदीयाभारतीतस्य कथनीयाहाशङ्कित

इक्ष्वाकुसम्भवो राजा धाणक्यो नाम धार्मिक ।
द्वादशाहे मृतस्याऽस्य सर्पिताथशनादिना ॥ ३८ ॥
तच्छ्रुत्वा वचनं राज्ञो गतौ तौ यमसादनम् ।
क्रीडितौ प्राङ्गणे तस्य स्वकचन्दनविभूषितौ ॥
धमराजेन तौ दृष्टौ पृष्टौ धूर्तौ च वायसौ ॥ ३९ ॥

यम उवाच

कुत स्थानात्समायातौ केनवाभूषितावुभौ । सूसचैकथ्यतामेतद्वायसावविशङ्कय

काकावूचतु

इक्ष्वाकुसम्भवो राजा वाणक्योनाम धार्मिक ।
द्वादशाहे मृतस्याऽस्य तर्पिनायशनादिभि ॥ ४१ ॥

तयोस्तद्वचनश्रुत्वातदा वैवस्वतोयम । चित्रगुप्तकलिकाल वीक्ष्यतामिदमब्रवी
अण्डजस्वेदजातीनाभूतानासचराचरे । विहित लोककर्तृणासान्निध्यब्रह्मणाम

गत कुत्र दुराचारश्चाणक्यो नामनस्त्विह ।
अन्विष्यता पुराणेषु स्वितिहासेषु या गति ॥ ४४ ॥

ततस्तैधर्मपालैस्तुधमराजप्रचोदितै । निरीक्षितापुराणोक्ताकर्मजागतिरागरि
तत प्रोवाच वचन धर्मो धमभृतावर । शृण्वताधर्मपालाना मेघगम्भीरयागिर
शुक्लतीर्थमृताना ॥ नर्मदाविमले जले । अण्डजस्वेदजातीना न गतिर्मम सन्निधं

तत्तीर्थं धार्मिक लोके ब्रह्मविष्णुमहेश्वरै ।
निर्मित परया भक्त्या लोकाना हितकाम्यया ॥ ४८ ॥

पापोपपातकैयु क्ता ये नरा नर्मदाजले । शुक्लतीर्थे मृता शुद्धात्मने मद्विषया क्वचि

एतच्छ्रुत्वा तु वचन तौ काकौ यमभाषितम् ।

आगतौ शीघ्रगौ पार्थ दृष्ट्वा यमपुरं महत् ॥ ५० ॥
पृष्टौतौप्रणतौराज्ञायथा वृत्तं यथाश्रुतम् । कथयामासतुःपार्थद्वानवौकाकतांगतौ
अस्मात्स्थानाद्गताचावां यमस्य पुरमुत्तमम् ।
पृथिव्या दक्षिणेभागे ह्यतीत्य बहुयोजनम् ॥ ५२ ॥
तत्पुरं कामगं दिव्यं स्वर्णप्राकारतोरणम् । अनेकगृहसम्बाधं मणिकाञ्चनभूषितम्
चतुष्पथैश्चत्वरैश्च घण्टामार्गोपशोभितम् ।
उद्यानवनसञ्छन्नं पद्मिनीखण्डमण्डितम् ॥ ५४ ॥
हंससारससङ्घुष्टं कोकिलाकुलसङ्कुलम् । सिंहव्याघ्रगजाकीर्णमृक्षवानरसेवितम्
नरनारीसमाकीर्णं नित्योत्सवविभूषितम् ।
शङ्खदुन्दुभिनिर्घोषैर्वीणावेणुनिनादितम् ॥ ५६ ॥
यममार्गेऽपिविहितं स्वर्गलोकमिवाऽपरम् । गतौ तत्र पुनश्चान्यैर्यमदूतैर्यमाज्ञया
विदितौप्रेषितौतत्रयत्रदेवोजगत्प्रभुः । प्राणस्य भीत्या दृष्टोऽसौसिंहासनगतःप्रभुः
महाकायो महाजङ्घो महास्कन्धो महोदरः ।
महावक्षा महाबाहुर्महावक्त्रेक्षणो महान् ॥ ५९ ॥
महामहिषमारूढो महामुकुटभूषितः । तत्राऽन्यश्च कलिः कालश्चित्रगुप्तोमहामतिः
समागतौ तदा दृष्टौ मध्ये ज्वलितपावकौ ।
पुण्यपापानि जन्तूनां श्रुतिस्मृत्यर्थपारगौ ॥ ६१ ॥
विचारयन्तौसततंतिष्ठातेतौदिवानिशम् । ततो ह्यावां प्रणामान्तेयमेनयममूर्तिना
पृष्टावागमनेहेतुं तमब्रूवश्शृणुष्व तत् । उज्जयिन्यांमहीपालश्चाणक्योऽभूत्प्रतापवान्
द्वादशाहे मृतस्याऽस्य भुक्त्वा प्राप्तौ यमालयम् ।
ततोऽस्माकं वचः श्रुत्वा कम्पयित्वा शिरो यमः ॥ ६४ ॥
उवाच वचनं सत्यं सभामध्येहसन्निव । अस्ति तत्कारणं येन चाणक्यःपापपूरुषः
नायातो मम लोके तु सर्वपापभयङ्करे । शुक्लतीर्थे मृतानां तु नर्मदायां परम्पदम्
जायते सर्वजन्तूनां नाऽत्र काचिद्विचारणा ।

अवश स्वधशोचाऽपि अनुस्त क्षेत्रमण्डले ॥ ६७ ॥
मृतः घेन सन्देहो रुद्रस्यानुचरो भवेत् । तद्भवचन श्रुत्वा निगत्यनगराद्बहि
पश्यन्तौ विविधा घोरा नरके लोकयातनाम् ।
त्रिंशत्कोट्यो हि घोराणा नरकाणा नृपोत्तम ॥ ६६ ॥
दृष्ट्वा भीतौ परामानि गतौ तत्र महापथि । नरको रौरवस्तत्र महारौरव एव च ॥
रौरण शोपणश्चैव कालसूत्रोऽस्थिभञ्जन ।
तामिस्रश्चान्धतामिस्र कृमिपूतिवहस्तथा ॥ ७१ ॥
कुम्भीपाको महाज्वालस्तथैव विषभोजन । नरकौ दशमशकौ तथा यमलपर्वतौ ॥
नदी वैतरणी दृष्टा सर्वपापप्रणाशिनी । शीतल सलिल यत्रपियन्तिह्यमृतोपमम्
तदेवनीरपापाना शोणितपरिवर्तते । असिपत्रवन चाऽन्यत्कूटशाल्मली शिला
अग्निपुञ्जनिभाकारा विशाला शाल्मली परा ।
इत्यादयस्तथैवान्ये शतसाहस्रसञ्ज्ञिताः ॥ ७१ ॥
घोरघोरतरा दृष्ट्वा क्लिश्यन्तेयत्रमानवा । वाचिकैर्मानसै पापै कर्मजैश्चपृथग्विधै
अहङ्कारकृतैर्दोषैर्मायायाचनपूर्वकै । पिता माता गुरुर्भ्राता अनाथायिफलेन्द्रिया
भ्रमन्ति नोद्धृता येषा गतिस्तथा हि रौरवे ।
तत्र द्वादशाब्दानि क्षपित्वा रौरवेऽधमा ॥ ७८ ॥
इह मानुष्यके लोकेदीनान्धाश्च भवन्तिते । देवब्रह्मस्वहृत पानरताणापापकर्मणाम्
महारौरवमाश्रित्य भव वासो यमालये । तत्र कालेन महता पापा पापेनवेष्टिता
जायन्त कण्टकैर्भिना कोशे वा कोशकारका ।
मृगपक्षिविहङ्गाना घातका मासभक्षकाः ॥ ८१ ॥
पैशुण नरक यान्ति शोषण जीवबन्धनात् ।
तत्र या यातना घोरा महित्वा शास्त्रचोदिताम् ॥ ८२ ॥
इह मानुष्यता प्राप्य पङ्ग्वन्धबधिरा नरा । गवार्थे ब्राह्मणार्थेवह्न्यन्तवदतामिह
पतन जायतेपु सा नरक कालसूत्रक । तत्रत्यायातना घोरा विहिताशास्त्रकर्तृ भि

भुक्त्वा समागता ह्यत्र ते यास्यन्त्यन्त्यजां गतिम् ।
वन्धयन्ति च ये जीवांस्त्यक्त्वात्मकुलसन्ततिम् ॥ ८५ ॥
पतन्तिनात्र सन्देहो नरके तेऽस्थिभञ्जने । तत्र वर्षशतस्याऽन्तऽह मानुष्यतांगताः
कुब्जा वामनकाः पापा जायन्ते दुःखभागिनः ।
ये त्यजन्ति स्वकां भार्यां मूढाः पण्डितमानिनः ॥ ८७ ॥
ते यान्तिनरकंघोरंतामिस्रं नाऽत्रसंशयः । तत्र वर्षशतस्यान्ते इह मानुष्यतांगताः
दुश्चर्माणो दुर्भगाश्च जायन्ते मानवाहिते । मानकूटं तुलाकूटं कूटवं तु वदन्ति ये
नरके तेऽन्धतामिस्रे प्रपद्यन्ते नराधमाः । शतसाहस्रिकं कालमुषित्वातत्रतेनराः
इह शत्रुगृहे त्वन्धा भ्रमन्ते दीनमूर्त्तयः । पितृदेवद्विजेभ्योऽन्नमदत्त्वा येऽत्र भुञ्जते॥
नरके कृमिभक्ष्ये ते पतन्तिस्वात्मपोषकाः । ततःप्रसूतिकालेहि कृमिभुक्तश्चसव्रणः
जायतेऽशुचिगन्धोऽत्र परभाग्योपजीवकः ।
स्वकर्मविच्युताः पापा वर्णाश्रमविवर्जिताः ॥ ९३ ॥
रके पूयसम्पूर्णे क्लिश्यन्ते ह्ययुतंसमाः । पूर्णेतत्र ततः काले प्राप्यमानुष्यकंभवम्
उद्वेजनीयाभूतानांजायन्तेव्याधिभिर्वृताः । अग्निदोगरदश्चैवलोभमोहान्वितोनरः
नरके विषसम्पूर्णे निमज्जति दुरात्मवान् । तत्र वर्षशतात्कालादुन्मज्जनमवस्थितः
भुवि मानुषतांप्राप्य कृपणोजायतेपुनः । पादुकोपानहौ छत्रंशय्यां प्रावरणानिच
अदत्त्वा दंशमशकैर्भक्ष्यन्ते जन्यसन्ततिम् । पितुर्द्रव्यापहर्त्तारस्ताडनक्रोशने रताः
पीडनं क्रियते तेषांयत्र तौ युग्मपर्वतौ । या सा वैतरणीघोरा नदी रक्तप्रवाहिनी
पिबन्ति रुधिरं तत्र येऽभियान्ति रजस्वलाम् ।
असिपत्रवने घोरे पीड्यन्ते पापकारिणः ॥ १०० ॥
परपीडाकरा नित्यंये नरोऽन्त्यजगामिनः । गुरुदाररतानां तु महापातकिनामपि
शिलावगूहनंतेषांजायतेजन्मसन्ततिम् । ज्वलन्तीमायसीं घोरांबहुकण्टकसम्वृताम्
शाल्मलीं तेऽवगूहन्ति परदाररताहिये । परस्ययोषितं हत्वा ब्रह्मस्वमपहृत्य च
अरण्ये निर्जले देशेस भवेत्क्रूरराक्षसः । देवस्वं ब्राह्मणस्वं च लोभेनैवाऽऽहरेच्चयः

# षट्पञ्चाशदधिकशततमोऽध्यायः

## शुक्लतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

नास्ति लोकेषु तत्तीर्थं पृथिव्यां यन्नरेश्वर। शुक्लतीर्थेन सदृशमुपमानेन गीयते ॥
शुक्लतीर्थं महातीर्थं नर्मदायां व्यवस्थितम्। प्रागुदक्प्रवणेदेशे मुनिसङ्घनिषेवितम्
वैशाखे च तथामासिकृष्णपक्षेचतुर्द्दशी। कैलासादुमयासार्द्धंस्वयमायातिशङ्करः

मध्याह्नसमये स्नात्वा पश्यत्यात्मानमात्मना।
ब्रह्मविष्ण्विन्द्रसहितः शुक्लतीर्थे समाहितः ॥ ४ ॥
कार्त्तिक्यां तु विशेषेण वैशाख्यां च नरोत्तम !।
ब्रह्मविष्णुमहादेवान् स्नात्वा पश्यति तद्दिने ॥ ५ ॥
देवराजः सुरैः सार्द्धं वायुमार्गव्यवस्थितः।
कृष्णपक्षे चतुर्द्दश्यां स्नात्वा पश्यति शङ्करम् ॥ ६ ॥
गन्धर्वाप्सरसो यक्षाः सिद्धविद्याधरोरगाः।
तद्दिने तेऽपि देवेशं दृष्ट्वा मुञ्चन्ति किल्बिषम् ॥ ७ ॥

अर्द्धयोजनविस्तारं तदर्द्धेनैव चायतम्। शुक्लतीर्थंमहापुण्यं महापातकनाशनम् ॥

यत्र स्थितैः प्रदृश्यन्ते वृक्षाग्राणि नरोत्तमैः।
तत्र स्थिता महापापैर्मुच्यन्ते पूर्वसञ्चितैः ॥ ९ ॥
पापोपपातकैर्युक्तो नरःस्नात्वा प्रमुच्यते।
उपार्जिता विनश्येत भ्रूणहत्याऽपि दुस्त्यजा ॥ १० ॥

यस्मात्तत्रैव देवेश उमया सह तिष्ठति। वैशाख्यांच विशेषेण कैलासादेतिशङ्करः
तेन तीर्थं महापुण्यं सर्वपातकनाशनम्। कथितंब्रह्मणा पूर्वं मया तव तथा नृप
रजकेन यथा धौतं वस्त्रं भवति निर्मलम्। तथातत्रवपुःस्नानं पुरुषस्य भवेच्छुचि

रागद्वेषविनिर्मुक्तो हृदि ध्यात्वा जनार्दनम् । सर्वकामसुसंपूर्णः स गच्छेद्वारुणं पुरम्
नरोगो न जरा तत्र यत्र देवोऽम्भसां पतिः । अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे युधिष्ठिर
अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ।
अवशः स्ववशो वाऽपि जन्तुस्तत्क्षेत्रमण्डले ॥ ३४ ॥
मृतः स तु न सन्देहो रुद्रस्याऽनुचरो भवेत् ।
शुक्लतीर्थे तु यः कन्यां शक्त्या दद्यादलङ्कृताम् ॥ ३५ ॥
विधिना यो नृपश्रेष्ठ कुरुते वृषमोक्षणम् । तस्य यत्फलमुद्दिष्टं पुराणे रुद्रभाषितम्
तदहं संप्रवक्ष्यामि शृणुष्वैकमना नृप । यावन्तो रोमकूपाः स्युः सर्वाङ्गेषु पृथक्पृथक्
तावद्वर्षसहस्राणि रुद्रलोके महीयते । शुक्लतीर्थे तु यद्दत्तं ग्रहणे चन्द्रसूर्ययोः ॥ ३८
वर्धते तद्गुणं तावद्दिनानि दश पञ्च च । शुक्लतीर्थे शुचिर्भूत्वा यः करोति प्रदक्षिणम्
पृथ्वीप्रदक्षिणा तेन कृता यत्तस्य तत्फलम् । शोभनं मिथुनं यस्तु रुद्रमुद्दिश्य पूजयेत्
सप्त जन्मानि तस्यैव वियोगो न भवेत्कचित् । एतत्ते कथितं राजन्संक्षेपेण फलं महत्
शुक्लतीर्थस्य यत्पुण्यं यथा देवाच्छ्रुतं मया ।
य इदं शृणुयाद्भक्त्या पुराणे विहितं फलम् ॥ ४२ ॥
स लभेन्नाऽत्र सन्देहः सत्यं सत्यं पुनः पुनः ।
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ॥ ४३ ॥
मोक्षार्थी लभते मोक्षं स्नानदानफलं महत् ॥ ४४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे शुक्लतीर्थमाहात्म्यवर्णनंनाम षट्पञ्चाशदधिकशततमोऽध्यायः ॥

## सप्तपञ्चाशदधिकशततमोऽध्यायः

### हुङ्कारस्वामितीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

तस्यैवानन्तरं राजन्हुङ्कारतीर्थसमीपतः । वासुदेवस्य तीर्थं तु सर्वलोकेषु पूजितम्
तद्धि पुण्यं सुविख्यातं नर्मदायां पुरातनम् । तत्र हुङ्कारमात्रेण रेवा कोपाज्जगाम सा
यदा प्रभृति राजेन्द्र हुङ्कारेण गता सरित् ।
तदा प्रभृति स स्वामी हुङ्कार शब्दितो बुधैः ॥ ३ ॥
हुङ्कारतीर्थे यः स्नात्वा पश्यत्यच्युतम् । समुच्यतेऽन्तरं पापं सप्तजन्मकृतैरपि
संसारार्णवमग्नानां नराणां पापकर्मिणाम् । नैवोद्धर्ता जगन्नाथं विना नारायणं परः
सा जिह्वा या हरिं स्तौति तच्चित्तं यत्तदर्पितम् ।
तावेव केवलौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥ ६ ॥
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः
यदन्यदेवताभक्त्या फलं प्राप्नोति मानवः । साष्टाङ्गप्रणिपातेन तत्फलं लभते हरेः
रेणुगुण्ठितगात्रस्य यावन्तोऽस्य रजःकणाः । तावद्वर्षसहस्राणि विष्णुलोके महीयते
सम्मार्जनाभ्युक्षणलेपनेन तथालये नश्यति सर्वपापम् ।
नार्चा नराणां परया न भक्त्या दृष्टा तु रेवा नरकस्तमस्य ॥ १० ॥
येनार्चितो भगवान्वासुदेवो जन्मार्जितं नश्यति तस्य पापम् ।
स याति लोकं गरुडध्वजस्य विधूतपापः सुरसङ्घपूज्यताम् ॥ ११ ॥
शाठ्येनाऽपि नमस्कारं प्रयुञ्जंश्चक्रपाणिनः ।
सप्तजन्मार्जितं पापं गच्छत्याशु न संशयः ॥ १२ ॥
पूजाया प्रीयतेऽत्यर्थं जपहोमैर्दिवाकरः । शङ्खचक्रगदापाणिः प्रणिपातेन तुष्यति ॥
भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारार्दितानाम् ।

विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥
हुङ्कारतीर्थेराजेन्द्र!शुभंवायदिवाऽशुभम् । यत्कृतंपुरुषव्याघ्र! तन्नश्यति नकर्हिचित्

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे हुङ्कारस्वामितीर्थमाहात्म्यवर्णनंनाम सप्तपञ्चाशदधिकशततमोऽध्यायः

---

## अष्टपञ्चाशदधिकशततमोऽध्यायः

### सङ्गमेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्परं तीर्थं सङ्गमेश्वरमुत्तमम् । नर्मदा दक्षिणे कूले सर्वपापभयापहम् ॥
धनदस्तत्रविश्रान्तोमुहूर्त्तं नृपसत्तम । पितृलोकात्समायातः कैलासं धरणीधरम्

प्रत्ययार्थं नृपश्रेष्ठ! ह्यद्यापि धरणीतले ।
कृष्णवर्णा हि पाषाणा दृश्यन्ते स्फटिकोज्ज्वलाः ॥ ३ ॥
विन्ध्यनिर्झरनिष्क्रान्ता पुण्यतोया सरिद्वरा ।
प्रविष्टा नर्मदातोये सर्वपापप्रणाशने ॥ ४ ॥

सङ्गमे तत्र यः स्नात्वा पूजयेत्सङ्गमेश्वरम् । अश्वमेधस्ययज्ञस्यफलंप्राप्नोत्यसंशयम्
घण्टापताकावितनं यो ददेत्सङ्गमेश्वरे । हंसयुक्तविमानस्थो दिव्यस्त्रीशतसम्वृतः
स रुद्रपदमाप्नोति रुद्रस्यानुचरो भवेत् । दधिभक्तेन देवस्ययःकुर्य्याल्लिङ्गपूरणम्

सिक्थसङ्ख्यं शिवे लोके स वसेत्कालमीप्सितम् ।
श्रीफलैः पूरयेल्लिङ्गं निःस्वो भूत्वा भवस्य तु ॥ ८ ॥
सोऽपि तत्फलमाप्नोति गतः स्वर्गं नरेश्वर !।
अक्षया सन्ततिस्तस्य जायते सप्तजन्मसु ॥ ६ ॥

स्नपनं देवदेवस्य दध्ना मधुघृतेन वा । यः करोति विधानेन तस्य पुण्यफलं शृणु

घृतक्षीरवहा नद्यो यत्र वृक्षा मधुस्रवा । तत्र ते मानवा यान्ति सुप्रसन्ने महेश्वरे
पत्रं पुष्पं फलं तोयं यस्तु दद्यान्महेश्वरे । तत्सर्वं सप्तजन्मानि ह्यक्षयं फलमश्नुते
सर्वेषामेव पात्राणां महापात्रं महेश्वरः । तस्मात्सर्वप्रयत्नेन पूजनीयो महेश्वरः ॥

ब्रह्मचर्यस्थितो नित्यं यस्तु पूजयते शिवम् ।
इह जीवन्स देवेशो मृतो गच्छेदनामयम् ॥ १४ ॥
शिवे ■ पूजिते पार्थ यत्फलं प्राप्यते बुधैः ।
योगीन्द्रे चैव तत्पार्थ पूजिते लभते फलम् ॥ १५ ॥
ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।
येषां गृहेषु भुञ्जन्ति शिवभक्तिरता नराः ॥ १६ ॥

सन्निरुध्येन्द्रियग्रामं यत्रयत्र वसेन्मुनिः । तत्रतत्र कुरुक्षेत्रं नैमिषं पुष्कराणि च ॥
यत्फलं वेदविदुषि भोजिते शतसङ्ख्यया । तत्फलं जायते पार्थ एकेन शिवयोगिना

यत्र भुञ्जति भस्माङ्गी मूर्खो वा यदि पण्डितः ।
तत्र भुञ्जति देवेशः सपत्नीको वृषध्वजः ॥ १९ ॥
विप्राणां वेदविदुषां कोटिं सम्भोज्य यत्फलम् ।
भिक्षामात्रप्रदानेन तत्फलं शिवयोगिनाम् ॥ २० ॥

सङ्गमेश्वरमासाद्य प्राणत्यागं करोति यः । न तस्य पुनरावृत्तिः शिवलोकात्कदाचन

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे सङ्गमेश्वरतीर्थमाहात्म्यवर्णननामाऽष्टपञ्चाशदधिकशततमोऽध्यायः

# एकोनषष्ट्युत्तरशततमोऽध्यायः

## अनरकेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महाराज तीर्थं परमपावनम् । नर्मदायां सुपुण्याप्रं सिद्धंह्यनरकेश्वरम्

तस्मिंस्तीर्थेनरःस्नात्वापापकर्माऽपिभारत । नपश्यतिमहाघोरंनरकद्वारसञ्ज्ञिकम्

युधिष्ठिर उवाच

शुभाशुभफलैस्तात भुक्तभोगा नरास्त्विह । जायन्तेलक्षणैर्यैस्तु तानिमेवद सत्तम

यथा निर्गच्छते जीवस्त्यक्त्वा देहं न पश्यति ।

तथा गच्छन्पुनर्देहं पञ्चभूतसमन्वितः ॥ ४ ॥

त्वगस्थिमांसमेदोऽसृक्केशस्नायुशतैः सह ।

विण्मूत्ररेतःसङ्घाते का सञ्ज्ञा जायते नृणाम् ॥ ५ ॥

एवमुक्तः स मार्कण्डः कथयामासयोगवित् । ध्यात्वासनातनंसर्वंदेवदेवंमहेश्वरम्

श्रीमार्कण्डेय उवाच

शृणु पार्थ! महाप्रश्नं कथयामि यथाश्रुतम् ।

सकाशाद् ब्रह्मणः पूर्वमृषिदेवसमागमे ॥ ७ ॥

गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम् ।

इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ ८ ॥

अचीर्णप्रायश्चित्तानां यमलोके ह्यनेकधा ।

यातनाभिर्वियुक्तानामनेकां जीवसन्ततिम् ॥ ६ ॥

गत्वामनुष्यभावे तु पापचिह्नाभवन्ति ते । तत्तेऽहंसम्प्रवक्ष्यामिशृणुष्वैकमनानृप

सहित्वा यातनां सर्वां गत्वा वैवस्वतक्षयम् ।

तिस्तीर्णयातना ये तु लोकमायान्ति चिह्निताः ॥ ११ ॥

गद्गदोऽनृतवादी स्यान्मूकश्चैव गवानृते । ब्रह्महा जायते कुष्ठी स्याधदन्तस्तु मद्यपः
कुनखी स्वर्णहरणाद्दुश्चर्मा गुरुतल्पगः । संयोगी हीनयोनिः स्याद्दरिद्रोऽदत्तदानतः
ग्रामशूकरतां याति ह्ययाज्ययाजको नृप ।
स्वरो वै बहुयाजी स्याच्छ्वाऽनिमन्त्रितभोजनात् ॥ १४ ॥
अपरीक्षितभोजी स्याद्वानरो विजने वने । पिनद्धकोऽयमार्जारस्त्वग्धोतः कृस्रदाहतः
अपिधाय च प्रयच्छेत बलीवर्दो भवेद्धि सः ।
अन्न पर्युषितं विप्रे ददानः कर्णचिता भजेत् ॥ १६ ॥
मात्सर्याच्च जात्यन्धो जन्मान्धः पुस्तकं हरन् ।
फलान्याहरतोऽपत्यं म्रियते नाऽत्र संशयः ॥ १७ ॥
मृतो धानरत्नाया तितन्मुक्तोऽपगलाश्वान् । मद्यस्यामक्ष्यस्तानिहतपन्यो भवेन्नरः
हरत्यन्न भवेद्वोधा गन्दः पयनाशनः । भ्रातृजागमनाद्राजन्भवेन्मदपिशाचकः ॥
धानकोजलहन्ता च धान्यहर्त्ता च मूषकः । अप्राप्तयौवनागच्छन्भवेत्सर्प इति श्रुतिः
गुरुदाराभिलाषी च कृकलासो भवेच्चिरम् ।
जलप्रस्रवणं यस्तु भिन्द्यान्मत्स्यो भवेन्नरः ॥ २१ ॥
अविक्रय्यानि विक्रीयविक्रेताक्षो भवेन्नर । अयोनिगो वृको हि स्यादुलूकः क्रयवञ्चनात्
मृतस्यैकादशाहे तु भुञ्जानः श्वोपजायते । प्रतिश्रुत्य द्विजायार्थमदत्त्वा जम्बुको भवेत्
राजागमाद्वंशदुष्टनम्रगोधिद्रुमाहकः । परिवादी द्विजातीनां लभते कच्छपीं तनुम्
प्रवेद्रुधत्को गजन्योनि चाण्डालस्य द्विजनाम् ।
दुर्भग कल्यविक्रेता वृश्चिको वृषलीपतिः ॥ २५ ॥
मार्जारोऽग्नि पदा स्पृष्ट्वा रोगवान्परमांसभुक् ।
मातृयागमनात्षण्ढो दुर्गन्धश्च सुगन्धहृत् ॥ २६ ॥
ग्रामभङ्गा दिवाकार्निर्दग्धको गर्दभो भवेत् ।
कृपणश्चैव स्यान्मार्जारो मरणे व्यास एव च ॥ २७ ॥
स एव दृश्यते राजन्व्यक्ताशात्परमर्मणाम् । यद्यातद्वापि पापकर्यस्त्यल्पं वायदिया चद्

कृत्वाचे योनिमाप्नोतितैरर्थैर्नात्रसंशयः। एवमादीनिधान्यानिचिह्नानिनृपसत्तम
स्वकर्मचिहितान्येवदृश्यन्ते यैस्तु मानवाः। ततोजन्मततोमृत्युःसर्वजन्तुषु भारत
जायतेनाऽत्रसन्देहः सर्वाभूतेशुभाऽशुभे। स्त्रीपुंसोःसम्प्रयोगेणविशुद्धेशुक्रशोणिते
पञ्चभूतसमोपेतः सपष्ठः परमेश्वरः। इन्द्रियाणिमनः प्राणाः ज्ञानमायुःसुखंधृतिः
धारणं प्रेरणं दुःखमिच्छाहङ्कार एव च। प्रयत्न आकृतिर्वर्णः स्वद्वेषौ भवाभवौ

तस्येदमात्मनः सर्वमनादेरादिमिच्छतः।
प्रथमे मासि स क्लेदभूतो धातुविमूर्च्छितः॥ ३४॥
मास्यर्बुदं द्वितीये तु तृतीये चेन्द्रियैर्युतः।
आकाशाल्लाघवं सौक्ष्म्यं शब्दं श्रोत्रबलादिकम्॥
वायोस्तु स्पर्शनं चेष्टां दहनं रौक्ष्यमेव च॥ ३५॥
पित्तात्तु दर्शनं पक्तिमौष्ण्यं रूपं प्रकाशनम्।
सलिलाद्रसनां शैत्यं स्नेहं क्लेदं समार्दवम्॥ ३६॥

भूमेर्गन्धं तथा घ्राणं गौरवं मूर्त्तिमेव च। आत्मागृह्णात्यजःपूर्वंतृतीयेस्पन्दतेचसः

दौर्हृदस्याऽप्रदानेन गर्भो दोषमवाप्नुयात्।
वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियाः॥ ३८॥
स्थैर्यं चतुर्थे त्वङ्गानां पञ्चमे शोणितोद्भवः।
षष्ठे बलं च वर्णश्च नखरोम्णां च सम्भवः॥ ३९॥

मनसा चेतनायुक्तो नखरोमशतावृतः। सप्तमे चाऽष्टमेचैव त्वचावान्स्मृतिवानपि
पुनर्गर्भं पुनर्धात्रीमेनस्तस्य प्रधावति। अष्टमे मास्यतो गर्भो जातःप्राणैर्वियुज्यते

नवमे दशमे वाऽपि प्रबलैः सूतिमारुतैः।
निर्गच्छते बाण इव यन्त्रच्छिद्रेण सज्वरः॥ ४२॥

शरीरावयवैर्युक्तो ह्यङ्गप्रत्यङ्गसंयुतः। अष्टोत्तरं मर्मशतं तत्रास्था तु शतत्रयम्॥

सप्त शिरःकपालानि विहितानि स्वयम्भुवा।
तिस्रः कोट्योऽर्द्धकोटी च रोम्णामङ्गेषु भारत!॥ ४४॥

द्वासप्ततिसहस्राणि हृदयादभिनिसृता ।
हितानाम हि ता नाड्यस्तासां मध्ये शशिप्रभा ॥ ४५ ॥
एवं प्रवर्त्तते चक्रं भूतग्रामे चतुर्विधे । उत्पत्तिश्च विनाशश्च भवत सर्वदेहिनाम् ॥
गतिरूर्ध्वाच धर्मेण ह्यधर्मेण त्वधोगति । जायते सर्ववर्णानां स्वधर्मचलनान्नृप
देवत्वे मानवत्वे च दानभोगादिका क्रिया ।
दृश्यन्ते या महाराज ! तत्सर्वं कर्मजं फलम् ॥ ४८ ॥
स्वकर्मविहितेघोरे कामक्रोधार्जिते शुभे । निमज्जेन्नरके घोरे यस्योत्तारोनविद्यते
उत्तारणायजन्तूनां नमन्तातदस्थितम् । प्रथमंतन्महातीर्थं नरकेश्वरमुत्तमम् ॥
नरकापहं महापुण्यं महापातकनाशनम् । तत्तीर्थं सर्वतीर्थानामुत्तमं भुविदुर्लभम्
तत्र तीर्थे तु य स्नात्वापूजयेत महेश्वरम् । महापातकयुक्तोऽपि नरकं नैव पश्यति
तत्र तीर्थे तु यो दद्यात्तु वैतरणींशुभाम् । स मुच्यते सुखेनैव वैतरण्यानसंशय

युधिष्ठिर उवाच

यमद्वारमहाघोरख्याता वैतरणी नदी । किं रूपा क्रियमाणासाकथंसायहतिद्विज
कथं तस्याः प्रमुच्यन्ते केषा धाराऽस्तु सन्ततम् ।
केषां तु साऽनुकूला सा ह्येतद्विस्तरतो वद ॥ ५५ ॥

श्रीमार्कण्डेय उवाच

धर्मपुत्र महाबाहो शृणु सर्वं यथोदितम् । या सावैतरणीनाम यमद्वारेमहासरित्
अगाधा पाररहिता दृष्टमात्रा भयावहा । पूयशोणिततोयासामांसकर्दमनिर्मिता
सत्तोय भ्रमते तूर्णं तापीमध्ये घृतं यथा । कृमिभिः सङ्कुलं पूयं वज्रतुण्डैरयोमुखैः
शिशुमारैश्चमकरैर्वज्रकच्छपैः संयुते । अन्यैश्च जलजीवैः सा सुहिंस्रैर्मर्मभेदिभिः
तपन्ति द्वादशादित्याः प्रलयान्त इवोत्कटाः ।
पतन्ति तत्र वै मर्त्या क्रन्दन्तो भृशदारुणम् ॥ ६० ॥
हा भ्रात पुत्र हा मात प्रजल्पन्तिमुहुर्मुहुः ।
असिपत्रवने घोरे पतन्त योऽमिरक्षति ॥ ६१ ॥

प्रतरन्ति निमज्जन्ति ग्लानिं गच्छन्ति जन्तवः ।
चतुर्विधैः प्राणिगणैर्दृष्ट्या सा महानदी ॥ ६२ ॥
तरन्ति तस्यां सद्दानैरन्यथानुपतन्ति ते । मातरं ये न मन्यन्ते ह्याचार्यं गुरुमेव च
अवजानन्ति मूढा ये तेषां वासस्तु सन्ततम् ।
पतिव्रतां साधुशीलामूढां धर्म्मेषु निश्चलाम् ॥ ६४ ॥
परित्यजन्ति ये पापाः सन्ततं तु वसन्ति ते ।
विश्वासप्रतिपन्नानां स्वामिमित्रतपस्विनाम् ॥ ६५ ॥
स्त्रीबालवृद्धदीनानांच्छिद्रमन्वेषयन्ति ये । पच्यन्तेतत्रमध्येथैक्रन्दमानाःसुपापिनः
श्रान्तं बुभुक्षितं विप्रंयोविघ्नयतिदुर्मतिः । कृमिभिर्भक्ष्यते तत्र यावत्कल्पशतत्रयम्
ब्राह्मणाय प्रतिश्रुत्ययोदानंनप्रयच्छति । आहूयनास्तियोब्रूतेतस्यवासस्तुसन्ततम्
अग्निदोगरदश्चैव राजगामी च पैशुनी । कथाभङ्गकरश्चैव कूटसाक्षी च मद्यपः ॥
यज्ञविध्वंसकश्चैव स्वयंदत्तापहारकः । सुक्षेत्रसेतुभेदी च परदारप्रधर्षकः ॥ ७० ॥
ब्राह्मणोरसविक्रेता वृषलीपतिरेव च । गोकुलस्यतृषार्त्तस्य पालीभेदं करोति यः
कन्याभिदूषकश्चैव दानंदत्त्वानु तापकः । शूद्रस्तुकपिलापायीब्राह्मणोमांसभोजनी
एते वसन्ति सततं मा विचारं कृथा नृप !। सानुकूलाभवेद्येन तच्छृणुष्व नराधिप
अयने विषुवे चैव व्यतीपाते दिनक्षये । अन्येषु पुण्यकालेषु दीयते दानमुत्तमम् ॥
कृष्णां वा पाटलां वापि कुर्याद्वैतरणीं शुभाम्
स्वर्णशृङ्गीं रूप्यखुरां कांस्यपात्रस्य दोहिनीम् ॥ ७५ ॥
कृष्णवस्त्रयुगाच्छन्नां सप्तधान्यसमन्विताम् ।
कुर्यात्सद्द्रोणशिखर आसीनां ताम्रभाजने ॥ ७६ ॥
यमं हैमं प्रकुर्वीत लोहदण्डसमन्वितम् । इक्षुदण्डमयं बद्ध्वा ह्युडुपं पट्टबन्धनैः
उडुपोपरितांधेनुं सूर्यदेहसमुद्भवाम् । कृत्वाप्रकल्पयेद्विद्वांश्छत्रोपानद्युगान्विताम्
अङ्गुलीयकवासांसि ब्राह्मणाय निवेदयेत् ।
इममुच्चारयेन्मन्त्रं सङ्गृह्याऽस्याश्च पुच्छकम् ॥ ७९ ॥

ॐयमद्वारे महाघोरे या सा वैतरणी नदी । तत्तु कामोदद्‌माम्येनातुभ्यं वैतरणि नम

॥ इत्यधिवासनमन्त्र ॥

गावो मे चाग्रत सन्तु गावो मे सन्तु पृष्ठत ।

गावो मे हृदये सन्तु गवा मध्ये वसाम्यहम् ॥ ८२ ॥

ॐ विष्णुरूपद्विजश्रेष्ठभूदेवपङ्क्तिपावन । सदक्षिणामया दत्ता तुभ्यं वैतरणि नम

॥ इति दानमन्त्र ॥

ब्राह्मण धर्मराज च धेनु वैतरणीं शिवाम् । सर्वंप्रदक्षिणीकृत्य ब्राह्मणायभिवेदयेत्

पुच्छ सङ्गृह्य सुरभेरग्रे कृत्वा द्विजं तत ॥ ८४ ॥

धेनुके त्व प्रतीक्षस्व यमद्वारे महाभय । उत्तितीर्षु रह धेनो वैतरण्यै नमोऽस्तु

॥ इत्यनुव्रजमन्त्र ॥

अनुव्रजेत गच्छन्तं सर्वं तस्य गृह नयेत् । एवङ्कृते महीपाल सरित्स्यात्सुखवाहिनी

तारयेत तया धेन्वा सा सरिज्जलवाहिनी ।

सर्वान्कामानवाप्नोति ये दिव्या ये च मानुषा ॥ ८७ ॥

रोगीरोगाद्विमुक्त स्याच्छाश्वति परमापद ।

स्वस्थ सहस्रगुणितमातुरे शतसम्मितम् ॥ ८८ ॥

मृतस्यैव तु यद्दान परोक्ष तत्सम स्मृतम् । स्वहस्तेन ततो देयम्मृते क क स्य दास्यति

इति मत्वा महाराज स्वदत्त स्यान्महाफलम् ।

इत्येवमुक्त तव धर्मसूनो दान मया वैतरणीसमुत्थम् ।

शृणोति भक्त्या पठतीह सम्यक्स याति विष्णो पदमप्रमेयम् ॥ ९० ।

श्रीमार्कण्डेय उवाच

प्राप्त चाश्वयुज मासि तस्मिन्कृष्णा चतुर्दशी ।

स्नात्वा कृत्वा तत श्राद्ध सम्पूज्य च महेश्वरम् ॥ ९१ ॥

पितृभ्यो दीयते दान भक्तिश्रद्धासमन्विते ।

पश्चाज्जागरण कुर्यात्सत्कथाश्रवणादिभि ॥ ९२ ॥

ततः प्रभातसमये स्नात्वा वै नर्मदाजले। तर्पणंविधिवत्कृत्वा पितॄणां दैवपूर्वकम्
सौवर्णं घृतसंयुक्तं दीपं दद्याद् द्विजातये।
पश्चात्सम्भोजयेद्विप्रान्स्वयं चैव विमत्सरः ॥ ९४ ॥
एवंकृतेनरश्रेष्ठ! न जन्तुर्नरकं व्रजेत् । अवश्यमेव मनुजैर्द्रष्टव्या नारकी स्थितिः ॥
अनेन विधिना कृत्वा नपश्येन्नरकान्नरः । तत्र तीर्थमृतानां तु नराणांविधिनान्नृप
मन्वन्तरंशिवेलोकेवासोभवतिदुर्लभे । विमानेनाऽर्कवर्णेनकिङ्किणीशतशोभिना
स गच्छति महाभाग! सेव्यमानोऽप्सरोगणैः।
भुनक्ति विविधान्भोगानुक्तकालं न संशयः ॥ ९८ ॥
पूर्णे चैव ततः काल इह मानुष्यतां गतः।
सर्वव्याधिविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ ९९ ॥
प्राप्यचाश्वयुजेमासिकृष्णपक्षेचतुर्दशीम् । अहोरात्रोषितोभूत्वापूजयित्वामहेश्वरम्
महापातकयुक्तोऽपि मुच्यते नाऽत्र संशयः ॥ १०० ॥
अष्टाविंशतिकोट्योवैनरकाणांयुधिष्ठिर !। विमुक्तानरकैर्दुःखैःशिवलोकंव्रजन्तिते
तत्र भुक्त्वा महाभोगान्दिव्यैश्वर्यसमन्वितान्।
लभन्ते मानुषं जन्म दुर्लभं भुवि मानवाः ॥ १०२ ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे
रेवाखण्डेऽनरकेश्वरतीर्थमाहात्म्यवर्णनंनामैकोनषष्ट्युत्तरशततमोऽध्यायः ॥

# षष्ठ्युत्तरशततमोऽध्यायः

## मोक्षतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्पाण्डुपुत्र मोक्षतीर्थमनुत्तमम् । सेवितं देवगन्धर्वैर्मुनिभिश्च तपोधनैः

बहवस्तन्न जानन्ति विष्णुमायाविमोहिताः ।

यत्र सिद्धा महाभागा ऋषयः सतपोधनाः ॥ २ ॥

पुलस्त्यः पुलहो विद्वान्क्रतुश्चैव महामतिः । प्राचेतसो वसिष्ठश्च दक्षो नारदपर्वत

एते चाऽन्ये महाभागा सप्तसाहस्रसङ्ख्यकाः ।

मोक्षं गता सह मुनैस्तत्तीर्थं तेन मोक्षदम् ॥ ४ ॥

तत्र प्रवाहमध्ये तु पतिता तमसा नदी । तत्र तत्सङ्गमं तीर्थं सर्वपापक्षयङ्करम् ॥

ऋग्यजुःसामसञ्ज्ञानामभ्यस्तानां तु यत्फलम् ।

सम्यग्जप्त्वा तु विधिना गायत्रीं तत्र तल्लभेत् ॥ ६ ॥

तत्र दत्तं हुतं जप्तं तीर्थसेवार्जितं फलम् । सर्वमक्षयतां याति मोक्षसाधनमुत्तमम्

तत्र तीर्थे मृतानां तु सन्न्यासेन द्विजन्मनाम् ।

अनिवर्तिका गतिस्तेषां मोक्षतीर्थप्रभावतः ॥ ८ ॥

एतत्ते विधिवद्दिष्टं संक्षेपेण मयाऽनघ । व्युष्टिस्तीर्थस्य महती पुराणे याऽभिधीयते

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे मोक्षतीर्थमाहात्म्यवर्णनं नाम षष्ठ्युत्तरशततमोऽध्यायः ॥ १६० ॥

---

## एकपञ्चाशदुत्तरशततमोऽध्यायः

### सर्पतीर्थ माहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महाराज सर्पतीर्थमनुत्तमम् ।
यत्र सिद्धा महासर्पास्तपस्तप्त्वा युधिष्ठिर ॥ १ ॥
वासुकिस्तक्षकोघोरः सर्प ऐरावतस्तथा । कालियश्चमहाभागःकर्कोटकधनञ्जयौ
शङ्खचूडो महातेजा धृतराष्ट्रो वृकोदरः । कुलिको वामनश्चैवतेषां ये पुत्रपौत्रिणः
तत्र तीर्थे महापुण्ये तपस्तप्त्वा सुदुष्करम् ।
भुञ्जन्ति विविधान्भोगान्क्रीडन्ति च यथासुखम् ॥ ४ ॥
तत्र तीर्थे तुयः स्नात्वातर्पयेत्पितृदेवताः । वाजपेयफलं तस्य पुरा प्रोवाच शङ्करः
स्नातानांसर्पतीर्थेतुनराणां भुविभारत । सर्पवृश्चिकजातिभ्योन भयंविद्यतेक्वचित्
मृतो भोगवतीं गत्वापूज्यमानोमहोरगैः । नागकन्यापरिवृतो महाभोगपतिर्भवेत्
मार्गशीर्षस्य मासस्य कृष्णपक्षे च याऽष्टमी ।
सोपवासः शुचिर्भूत्वा लिङ्गं सम्पूजयेत्तिलैः ॥
यथाविभवसारेण गन्धपुष्पैः समर्चयेत् ॥ ८ ॥
एवं विधाय विधिवत्प्रणिपत्यक्षमापयेत् । तस्य यत्फलमुद्दिष्टं तच्छृणुष्वनरेश्वर
तिलास्तत्र च यत्सङ्ख्याः पत्रपुष्पफलानि च ।
तावत्स्वर्गपुरे राजन्मोदते कालमीप्सितम् ॥ १० ॥
ततः स्वर्गात्परिभ्रष्टो जायते विमले कुले । सुरूपः सुभगश्चैवधनकोटिपतिर्भवेत्॥
इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे सर्पतीर्थमाहात्म्यवर्णनं नामैकपञ्चाशदुत्तरशततमोऽध्यायः॥ १५१ ॥

## द्विषष्ट्युत्तरशततमोऽध्यायः

### गोपेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

गोपेश्वरं ततो गच्छेत्सर्वक्षेत्रादनन्तरम् । यत्र स्नानेन चैकेन मुच्यन्ते,पातकैर्नरा
तत्रतीर्थेतुयः स्नात्वातु रुते प्राणसंक्षयम् । सगच्छेत्चद्दियुक्तोऽपिपापेनशिवमंदिरम्
तत्र तीर्थे तुयः स्नात्वा पूजयेद्दैषर्मीश्वरम् । मुच्यतेसर्वपापैश्च रुद्रलोकंसगच्छति

क्रीडित्वा च यथाकाम रुद्रलोके महातपाः ।
इह मानुष्यतां प्राप्य राजा भवति धार्मिकः ॥ ४ ॥

हस्त्यश्वरथसम्पन्नोदासीदाससमन्वित । पूज्यमानो नरेन्द्रैश्च जीवेद्वर्षशतंसुखी

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे गोपेश्वरतीर्थमाहात्म्यवर्णनं नाम द्विषष्ट्युत्तरशततमोऽध्यायः॥१६२॥

---

## त्रिषष्ट्युत्तरशततमोऽध्यायः

### नागतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेन्महाराज नागतीर्थमनुत्तमम् । आश्विनस्यसितेपक्षेपञ्चम्यानियतःशुचि

रात्रौ जागरणं कृत्वा गन्धधूपनिवेदनैः ।
प्रभाते विमले स्नात्वा श्राद्धं कृत्वा यथाविधि ॥ २ ॥
मुच्यते सर्वपापेभ्यो नाऽत्र कार्या विचारणा ।
तत्र तीर्थे तु यो राजन्प्राणत्यागं करिष्यति ॥ ३ ॥

अनिवर्त्तिका गतिस्तस्य प्रोवाचेति शिवः स्वयम् ॥ ४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नागतीर्थमाहात्म्यवर्णनंनाम त्रिषष्ठ्युत्तरशततमोऽध्यायः ॥ १६३ ॥

---

## चतुःषष्ठ्युत्तरशततमोऽध्यायः

### साम्बौरेश्वरतीमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महाराज! साम्बौरं तीर्थमुत्तमम् ।
यत्र सन्निहितो भानुः पूज्यमानः सुरासुरैः ॥ १ ॥
तत्रयेपङ्गुतांप्राप्ताःशीर्णघ्राणनखानराः । दद्रुमण्डलभिन्नाङ्गा मक्षिकाकृमिसङ्कुलाः
मातापितृभ्यां रहिता भ्रातृभार्याविवर्जिताः ।
अनाथा विकला व्यङ्गा मग्ना ये दुःखसागरे ॥ ३ ॥
तेषां नाथो जगद्योनिर्नर्मदातटमाश्रितः ।
साम्बौरनाथो लोकानामार्त्तिहा दुःखनाशनः ॥ ४ ॥
तत्र तीर्थेतुयः स्नात्वामासमेकंनिरन्तरम् । पूजयेद्भास्करंदेवं तस्यपुण्यफलं शृणु ;
यत्फलं चोत्तरे पार्थ! तथावै पूर्वसागरे । दक्षिणेपश्चिमेस्नात्वातत्रतीर्थेतुतत्फलम्
कौमारेयौवनेपापंवार्द्धकेयच्चसञ्चितम् । तत्प्रणश्यतिसाम्बौरेस्नानमात्रान्नसंशयः
न व्याधिर्नैव दारिद्र्यं न चैवेष्टवियोजनम् ।
सप्तजन्मानि राजेन्द्र! साम्बौरपरिसेवनात् ॥ ८ ॥
सप्तम्यामुपवासेन तद्दिनेचाप्युपोषिते । सतत्फलमवाप्नोति तत्रस्नात्वानसंशयः
रक्तचन्दनमिश्रेण यदर्घ्येण फलं स्मृतम् ।
तत्र तीर्थे नृपश्रेष्ठ! स्नात्वा तत्फलमाप्नुयात् ॥ १० ॥

नर्मदामखिलं रम्यं सर्वपातकनाशनम् ।
निरीक्षितं विशेषेण साम्बीरेण महात्मना ॥ ११ ॥
ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।
स्नात्वा पश्यन्ति देवेश साम्बीरेश्वरमुत्तमम् ॥ १२ ॥
सूर्यग्रहे पठेत्तावद्यावदाभूतसम्प्लवम् ॥ १३ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे साम्बीरेश्वरतीर्थमाहात्म्यवर्णनं नाम चतुःषष्ट्युत्तरशततमोऽध्यायः

## पञ्चषष्ट्युत्तरशततमोऽध्यायः

### सिद्धेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

नर्मदादक्षिणे कूले सिद्धेश्वरमितिश्रुतम् ।
तीर्थं परं महाराज सिद्धैः कृतमिति प्रभो ॥ १ ॥
तत्र तीर्थं महापुण्यं सर्वतीर्थेषु पावनम् । नर्मदायां महाराज दक्षिणं कूलमाश्रितम्
तत्र तीर्थे नरः स्नात्वा तर्पयेत्पितृदेवताः । श्राद्धं तत्रैव यो दद्यात्पितॄनुद्दिश्य भारत
तृप्यन्ति पितरस्तस्य द्वादशाब्दान्न संशयः ।
तत्र तीर्थे तु यो भक्त्या स्नात्वा पूजयते शिवम् ॥ ४ ॥
रात्रौ जागरणं कृत्वा पठेत्पौराणिकीं कथाम् ।
ततः प्रभाते विमले स्नानं कुर्याद्यथाविधि ॥ ५ ॥
दीप्यते गिरिजाकान्तं स गच्छेत्परमां गतिम् ।
पुरा सिद्धा महाभागा कपिलाद्या महर्षयः ॥ ६ ॥
जपन्तश्च परं ब्रह्म योगसिद्धा महाव्रता ।

सिद्धिं ते परमां प्राप्ता नर्मदायाः प्रभावतः ॥ ७ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे सिद्धेश्वरतीर्थमाहात्म्यवर्णनंनाम पञ्चषष्ट्युत्तरशततमोऽध्यायः ॥

---

## षट्षष्ट्यधिकशततमोऽध्यायः

### सिद्धेश्वरीदेवीतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततः सिद्धेश्वरीदेवीवैष्णवीपापनाशिनी । आनन्दंपरमं प्राप्तादृष्ट्वास्थानंसुशोभनम्

तत्रतीर्थे नरः स्नात्वापूजयेत्पितृदेवताः । देवींपश्यतियोभक्त्यामुच्यतेसर्वपातकैः

मृतवत्सा तु या नारी वन्ध्या स्त्री जननी तथा ।
पुत्रं सा लभते नारी शीलवन्तं गुणान्वितम् ॥ ३ ॥

तत्र तीर्थे तु यः स्नात्वा पश्येद्देवीं सुभक्तितः ।
अष्टम्यां वा चतुर्दश्यां सर्वकालेऽथवा नृप !॥ ४ ॥

सङ्गमे तु ततः स्नातः नारीवापुरुषोऽपि वा । पुत्रंधनंतथादेवीददातिपरितोषिता

गोत्ररक्षां प्रकुरुते दृष्टा देवी सुपूजिता । प्रजां च पाति सततंपूज्यमानान संशयः

नवम्यां च महाराज! स्नात्वा देवीमुपोषितः ।
पूजयेत्परया भक्त्या श्रद्धापूतेन चेतसा ॥ ७ ॥

स गच्छेत्परमं लोकं यः सुरैरपि दुर्लभः ॥ ८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे सिद्धेश्वरीदेव्यास्तीर्थमाहात्म्यवर्णनंनामषट्षष्ट्युत्तरशततमोऽध्यायः

---

## सप्तषष्ट्युत्तरशततमोऽध्यायः

### मार्कण्डेश्वरतीर्थमाहात्म्यवर्णनम्

युधिष्ठिर उवाच

नर्मदादक्षिणे कूले ह्यचिह्नेनोपलक्षितम् । तीर्थमेतन्ममाऽऽख्याहि सम्भवश्च महा

श्रीमार्कण्डेय उवाच

पुराकृतयुगस्यादौ दक्षिणे गिरिमुत्तमम् । विन्ध्यसर्वगुणोपेतं नियतो नियता

ऋषिसङ्घैः कृतातिथ्यो दण्डके न्यवसं चिरम् ।

उषित्वा सुचिरं कालं वर्षाणामयुतं सुखी ॥ ३ ॥

तान्सर्वान्समनुप्राप्य शिष्यैरनुगतस्ततः । निवृत्तः सुमहाभाग नर्मदाकूलमा

पुण्यं च रमणीयं च सर्वपापविनाशनम् । कृत्वाऽहमास्पदं तत्र द्विजसङ्घसमा

ब्रह्मचारीभिराकीर्णं गार्हस्थ्ये सुप्रतिष्ठिते ।

वानप्रस्थैश्च यतिभिर्यताहारैर्यतात्मभिः ॥ ६ ॥

तपस्विभिर्महाभागैः कामक्रोधविवर्जितैः । तत्राऽहं वर्षमयुतं तपः कृत्वा सुदारु

आराध्य वासुदेवं प्रभुं कर्तारमीश्वरम् । उग्रतपोभिर्नियमैर्नर्मदाकूलमाश्रित

ततस्तौ वरदौ देवौ समायातौ युधिष्ठिर ।

प्रत्यक्षौ भास्करौ राजन्सुभार्याभ्यां विभूषितौ ॥ ९ ॥

प्रणम्याऽहं ततो देवौ भक्तियुक्तो यथोऽब्रुवम् ।

भवन्तौ प्रार्थयामि स्म वराहौ वरदौ शिवौ ॥ १० ॥

धर्मस्थितिं महाभागौ भक्तिं वाऽनुत्तमां युवाम् ।

अजरः व्याधिरहितः पञ्चविंशतिवर्षवत् ॥

अस्मिन्स्थाने सदा स्थैर्यं सह देवैरसंशयम् ॥ ११ ॥

एवमुक्तौ मया पार्थ तौ देवौ हरिशङ्करौ ।

मामूचतुः प्रहृष्टौ तौ निवासार्थं युधिष्ठिर !॥ १२ ॥

देवावूचतुः

अस्मिन्स्थाने स्थितौ विद्धि सह देवैः सवासवैः ।
एवमुक्त्वा ततो देवौ तत्रैवाऽन्तरधीयताम् ॥ १३ ॥
हंचस्थापयित्वातौशङ्करंकृष्णमव्ययम् । कृतकृत्यस्ततोजातःसम्पूज्यसुसमाहितः
तस्मिंस्तीर्थे नरः स्नात्वा पूजयेत्परमेश्वरम् ।
मार्कण्डेश्वरनाम्ना वै विष्णुं त्रिभुवनेश्वरम् ॥ १५ ॥
न गच्छेत्परमंस्थानं वैष्णवं शैवमेव च । घृतेन पयसावाऽथ दध्नाच मधुना तथा
ार्मदेनोदकेनाऽथ गन्धधूपैः सुशोभनैः । पुष्पोपहारैश्च तथा नैवेद्यैर्नियतात्मवान्
एवं विष्णोः प्रकुर्वीतजागरंभक्तितत्परः । स्नानादीनितथाराजन्प्रयतःशुचिमानसः
ज्येष्ठे मासि सिते पक्षे चतुर्दश्यामुपोषितः । द्वादश्यां कारयेद्देवपूजनं वैष्णवोनरः
एवं कृत्वाचतुर्दश्यामेकादश्यां नरोत्तम !। वैष्णवंलोकमाप्नोतिविष्णुतुल्योभवेन्नरः
माहेश्वरे च राजेन्द्र! गणवन्मोदते पुरे । श्राद्धं च कुरुते तत्र पितॄनुद्दिश्य सुस्थिरः
तस्य ते ह्यक्षयां तृप्तिं प्राप्नुवन्ति न संशयः ।
नर्मदायां द्विजः स्नात्वा मौनी नियतमानसः ॥ २२ ॥
उपास्य सन्ध्यां तत्रस्थो जपं कृत्वा सुशोभनम् ।
तर्पयित्वा पितॄन्देवान्मनुष्यांश्च यथाविधि ॥ २३ ॥
कृष्णस्य पुरतः स्थित्वा मार्कण्डेशस्य वा पुनः ।
ऋग्यजुःसाममन्त्रांश्च जपेदत्र प्रयत्नतः ॥ २४ ॥
ऋचमेकांजपेद्यस्तुऋग्वेदस्य फलं लभेत् । यजुर्वेदस्य यजुषासाम्नासामफलंलभेत्
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ।
मृतप्रजा तु या नारी वन्ध्या स्त्रीजननी तथा ॥ २६ ॥
रुद्रांस्तु विधिवज्जप्त्वा ब्राह्मणो वेदतत्त्ववित ।

रुद्रैकादशभिर्मन्त्रैः स्नापयेत्कलशाम्भसा । पुत्रमाप्नोतिराजेन्द्र दीर्घायुरमकल्मषम्
माकण्डेश्वरवृक्षान्यो दूरस्थानपि पश्यति ।
ब्रह्महत्यादिपापेभ्यो मुच्यते शङ्करोऽब्रवात् ॥ २६ ॥
य इद शृणुयाद्भक्त्या पठेद्वा नृपसत्तम ।। सवपापविशुद्धात्मा जायतेनाऽत्रसशय
इद यशस्यमायुष्यधन्य दु स्वप्ननाशनम् । पठताशृणवता वाऽपिसर्वपापप्रमोचनम
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्या संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे माकण्डेश्वरतीर्थमाहात्म्यवर्णनंनाम सप्तषष्ट्युत्तरशततमोऽध्याय ॥

---

## अष्टषष्ट्यधिकशततमोऽध्याय

### अङ्कूरेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

नमदादक्षिणे रोधस्यङ्कूरेश्वरमुत्तमम् । तीर्थं सर्वगुणोपेत त्रिषु लोकेषु विश्रुतम्
यत्रसिद्धमहारक्षआराध्यतु महेश्वरम् । शङ्करजगत प्राण स्मृतिमात्राघहारिणम्

युधिष्ठिर उवाच

किं तद्रक्षो द्विजश्रेष्ठ किनाम कस्यवाऽन्वये । एतद्विस्तरत सर्वंकथयस्वममाऽनघ
अज्ञानतिमिरान्धा ये पुमास पापकारिण ।
युष्मद्विधैर्दीपभूतै पश्यन्ति मघराघरम् ॥ ४ ॥
धर्मपुत्रवच श्रुत्वामाकण्डेयोमुनीश्वर । स्मितपूर्वमथोवाचकथापापप्रणाशनीम्

माकण्डेय उवाच

मानसोब्रह्मण पुत्र पुलस्त्योनामपार्थिव । वेदशास्त्रप्रशस्त्राथसास्त्राढ्योधार्मिकाऽपर
तृणबिन्दुसुता तस्य भार्याऽऽसात्परमेष्ठिन ।
तस्य धर्मप्रसङ्गेन पुत्रो जातो महामना ॥ ७ ॥

यस्माद्वेदेतिहासैश्च सपडङ्गपदक्रमाः । विश्रान्ता ब्रह्मणा दत्ता नामविश्रवसेतिच

कस्मिंश्चिदथ काले च भरद्वाजो महामुनिः ।
स्वसुतां प्रददौ राजन्मुदा विश्रवसे नृप !॥ ६ ॥

स तया रमतेसार्धं पौलोम्या मघवा इव । मुदा परमयाराजन्ब्राह्मणो वेदवित्तमः
केनचित्त्वथकालेन पुत्रः पुत्रगुणैर्युतः । जज्ञे विश्रवसो राजन्नाम्ना वैश्रवणः श्रुतः
सोऽपिमौनव्रतं कृत्वा बालभावाद्युधिष्ठिर । सर्वभूताभयंदत्त्वाचचार परमव्रतम्

तस्य तुष्टो महादेवो ब्रह्मा ब्रह्मर्षिभिः सह ।
सखित्वं चेश्वरो दत्त्वा धनदत्वं जगाम ह ॥ १३ ॥
यमेन्द्रवरुणानां च चतुर्थस्त्वं भविष्यसि ।
ब्रह्माऽप्युक्त्वा जगामाऽऽशु लोकपालत्वमीप्सितम् ॥ १४ ॥

ततस्त्वनन्तरेकालेकैकसीनामराक्षसी । पातालंभूतलंत्यक्त्वाविश्रवंचकमे पतिम्

पुत्रोऽथ रावणो जातस्तस्या भरतसत्तम !।
कुम्भकर्णो महारक्षो धर्मात्मा च विभीषणः ॥ १६ ॥

कुम्भश्चैव निकुम्भश्च कुम्भकर्णसुतावुभौ । महाबलौ महावीर्यौमहान्तौ पुरुषोत्तम

अङ्कूरो राक्षसश्रेष्ठः कुम्भस्य तनयो महान् ।
विभीषणं च गुणवद्दृष्ट्वैवं राक्षसोत्तमः ॥ १८ ॥

ततः स यौवनं प्राप्य ज्ञात्वा रक्षः पितामहम् । परं निर्वेदमापन्नश्चचार सुमहत्तपः
दक्षिणं पश्चिमं गत्वा सागरं पूर्वमुत्तरम् । नर्मदायां प्रसङ्गेन ह्यङ्कूरोराक्षसेश्वरः
तपश्चचार सुमहद्दिव्यं वर्षशतंकिल । ततस्तुष्टो महादेवः साक्षात्परपुरञ्जयः ॥२१॥
वरेण च्छन्दयामास राक्षसं वृषकेतनः । वरं वृणीष्व भद्रंते तव दास्यामि सुव्रत
प्रोवाच राक्षसो वाक्यं देवदेवं महेश्वरम् । वरदं सोऽग्रतो दृष्ट्वाप्रणम्य च पुनःपुनः

यदि तुष्टो महादेव! वरदोऽसि सुरेश्वर !।
दुर्लभं सर्वभूतानाममरत्वं प्रयच्छ मे ॥ २४ ॥

ममनाम्ना स्थितोऽनेनवरेणत्रिपुरान्तक !। सदासन्निहितोऽप्यत्रतीर्थेभचितमर्हसि

ईश्वर उवाच

यावद्विभीषणमतयाघद्धमनिषेचणम् । करिष्यसि दृढात्मात्व तावदेतद्भविष्यति
एवमुक्त्वा ययौ देव सर्वदेवतपूजित । विमानेनाऽर्कवर्णेन कैलास धरणीधरम्

गते चाऽदर्शन देवे ज्ञात्वाऽऽचम्य विधानत ।
स्थापयामास राजेन्द्र हडकुरेश्वरमुत्तमम् ॥ २८ ॥

गन्धपुष्पैस्तथा धूपैर्वस्त्रालङ्कारभूषणे । पताकैश्चामरैश्छत्रैर्जयशब्दादिमङ्गले

पूजयित्वा सुरेशान स्तोत्रैश्च सुपुष्कले ।
जगाम भवन रक्षो यत्र राजा विभीषण ॥ ३० ॥
पूजित स यथान्याय दानसन्मानगौरवे ।
सौंदर्ये स्थापितो भावे सोऽपासीत्सीत्तपरयामुदा ॥ ३१ ॥

तत्रतीर्थे तु य स्नात्वापूजयेत्परमेश्वरम् । मङ्कुरेश्वरनामान सोऽश्वमेधफललभेत्

माण्डव्यस्नातमारभ्य मङ्गम चाऽपि पञ्चुभम् ।
रेवाया आमलकाख्य देवक्षेत्र महेश्वरम् ॥ ३३ ॥
माण्डव्यस्नातात्पश्चिमतस्तीर्थं हडकुरेश्वरम् ।
तत्र तीर्थे नर स्नात्वा शुचि प्रयतमानस ॥ ३४ ॥

सन्ध्यामाचम्यपत्नेन अपकृत्वाऽथभारत । तर्पयित्वापितॄन्देवान्मनुष्यान्भरतर्षभ
सर्वेन्द्रियसनोमौनमास्थायसयत । अष्टम्या वा चतुर्दश्यामुपोष्यविधिवन्नर

पूजा च कुरुते राजस्तस्य पुण्यफल शृणु ।
स्नात्र तु योजनशत तीर्थान्यायतनानि च ॥ ३७ ॥
भवन्ति तानि दृष्टानि तत पापे प्रमुच्यत ।

अनिवर्त्तिकागतिस्तस्यरुद्रलोकादसंशयम् । कृमिकीटपतङ्गानां तत्रतीर्थेयुधिष्ठिर
अङ्कूरेश्वरनामाख्ये मृतानां सुगतिर्भवेत् ॥ ४१ ॥
एतत्ते कथितं राजन्नङ्कूरेश्वरसम्भवम् । तीर्थं सर्वगुणोपेतं परमम्पापनाशनम् ॥
येऽपि शृण्वन्ति भक्त्येदं कीर्त्त्यमानं महाफलम् ।
लभन्ते नाऽत्र सन्देहः शिवस्य भुवनं हि ते ॥ ४२ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे अङ्कूरेश्वरतीर्थमाहात्म्यवर्णनंनामाऽष्टषष्ट्यु त्तरशततमोऽध्यायः ॥

---

## एकोनसप्तत्यधिकशततमोऽध्यायः

### काममोदिनीतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेत्परंतीर्थंपुण्यंपापप्रणाशनम् । माण्डव्योयत्रसंसिद्धऋषिर्नारायणस्तथा
नारायणेन शुश्रूषाशूलस्थेनकृतापुरा । तत्र स्नात्वामहाराज मुच्यतेपापकञ्चुकात्

युधिष्ठिर उवाच

आश्चर्यमेतल्लोकेषु यत्त्वया कथितं मुने !। न दृष्टं न श्रुतं तात! शूलस्थेन तपः कृतम्
एतत्सर्वं कथय मे ऋषिभिः सहितस्य वै ।
अस्य तीर्थस्य माहात्म्यं माण्डव्यस्य कुतूहलात् ॥ ४ ॥

श्रीमार्कण्डेय उवाच

शृणु राजन्यथावृत्तं पुरा त्रेतायुगेक्षितौ । लोकपालोपमो राजादेवपन्नोमहामतिः
धर्मज्ञश्च कृतज्ञश्च यज्वादानरतः सदा । प्रजा ररक्ष यत्नेन पिता पुत्रानिवौरसान्
दात्यायनीप्रिया भार्या तस्य राज्ञोवशानुगा । हारनूपुरघोषेण झङ्काररवनादिता
परस्परं तयोः प्रीतिर्वर्द्धतेऽनुदिनं नृप !।

यशास्तस्मै स्थितोराजा सशास्ति पृथिवीमिमाम् ॥ ८ ॥

हस्त्यश्वरथसम्पूर्णां धनवाहनसंयुताम् । अलङ्कृतो गुणैः सर्वैरनपत्यो महीपति दुःखेनमहताऽऽविष्ट सन्तप्त सन्ततिविना ।स्नानहोमरतोनित्यद्वादशाब्दानिभारत

व्रतोपवासनियमैः पत्नीभिः सह तस्थिवान् ।

आराधयद्भगवतीं चामुण्डां मुण्डमर्दिनीम् ॥ ११ ॥

स्तोत्रैरनेकैर्भक्त्या च पूजाविधिसमाधिना ।

जय वाराहि चामुण्डे जय देवि त्रिलोचने ॥ १२ ॥

ब्राह्मि ! रौद्रि ! कौमारि ! कात्यायनि ! नमोऽस्तु ते ।

प्रचण्डे ! भैरवि ! रौद्रि ! योगिन्याकाशगामिनि ॥ १३ ॥

नास्तिकिञ्चित्त्वयाहीनंत्रैलोक्येसचराचरे । राज्ञास्तुतातथसतुष्टादेवीवचनमब्रवीत्

वरयस्व यथाकामं यत्ते ( यत्ते ) मनसि वर्तते ।

आराधिता त्वया भक्त्या तुष्टा दास्यामि वरम् ॥ १५ ॥

देव्युवाच

यदि तुष्टाऽसि देवेशि वरार्हो यदिवाऽप्यहम् । पुत्रसन्तानरहितं त्वतः मामनुद्धर सन्तान नयमे वृद्धिंगोत्ररक्षां कुरुष्व मे । अपुत्रिणांगृहाणांहि श्मशानसदृशानिहि पितरस्तस्यनाश्नन्ति देवताऋषिभिः सह । क्रियमाणेऽप्यहरहः श्राद्धेमेपितरःसदा

दर्शयन्ति सदाऽऽत्मानं स्वप्ने क्षुत्पीडिता मम ।

इति राज्ञो वचः श्रुत्वा देवी ध्यानमुपागता ॥ १६ ॥

दिव्येन चक्षुषा दृष्ट्वा त्रैलोक्यं सचराचरम् । प्रसन्नवदना देवी राजानमिदमब्रवीत्

सन्तानं नाऽस्ति ते राजन्त्रैलोक्ये सचराचरे ।

यत्तस्य यत्पुत्रमपत्यं नास्ति तेऽन्यथा ॥ २१ ॥

मयादृष्टंमहीपालत्रैलोक्यं दिव्यचक्षुषा । एवमुक्त्वागता देवीराजाऽस्वगृहमागमत् इयाज यत्पुत्र सञ्जाता कन्यका तत । तेजस्विनी रूपवती सर्वलोकमनोहरा ॥

तस्या नाम कृतं पित्रा हर्षात्कामप्रमोदिनी ॥ २४ ॥
ततःकालेनववृधेरूपेणास्तम्भयज्जगत् । हंसलीलागतिः सुभ्रूः स्तनभारावनामिता
रक्तमाल्याम्बरधरा कुण्डलाभरणोज्ज्वला ।
दिव्यानुलेपनवती सखीभिः सा सुरक्षिता ॥ २६ ॥
कुचमध्यगतो हारोविद्युन्मालेवराजते । भ्रमराञ्चितकेशीसाबिम्बोष्ठीचारुहासिनी
कर्णान्तप्राप्तनेत्राभ्यां पिबन्तीवाऽथ कामिनः ।
चन्द्रताम्बूलसौरभ्यैराकर्षन्तीव मन्मथम् ॥ २८ ॥
कम्बुग्रीवा चारुमध्या ताम्रपादाङ्गुलीनखा ।
निम्ननाभिः सुजघना रम्भोरू सुदती शुभा ॥ २६ ॥
मातापितृसुहृद्वर्गे क्रीडानन्दविवर्द्धिनी ।
एकस्मिन्दिवसे बाला सखीवृन्दसमन्विता ॥ ३० ॥
चन्दनागरुताम्बूलधूपसौमनसाञ्चिता । गृहीत्वा पुष्पधूपादि गता देवीप्रपूजने ॥
तडागतट उत्सृज्यभूषणान्यङ्गवेष्टकान् । चक्रुःसरसिताःक्रीडां जलमध्यगतास्तदा
क्रीडन्तींतामवेक्ष्याथससखीं विमलेजले । राक्षसःशंबरो नामश्येनरूपेणचाऽगमत्
गृहीता जलमध्यस्था तेन सा काममोदिनी ।
खमुत्पपात दुष्टात्मा गृहीत्वाऽऽभरणान्यपि ॥ ३४ ॥
वायुमार्गं गतः सोऽथ कामिन्या सह भारत !।
अपतन्कुण्डलादीनि यत्र तोये महामुनिः ॥ ३५ ॥
माण्डव्यो नर्मदातीरे काष्ठवत्सञ्जितेन्द्रियः । लीनोमाहेश्वरे स्थानेनारायणपदेपरे
तस्य चानुचरोभ्राता भ्रातुः शुश्रूषणे रतः । तपोजपकृशीभूतो दध्यौदेवं जनार्दनम्
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डेकाममोदिनीहरणवर्णनं नामैकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६६ ॥

---

सङ्ग्रामभेरीनिनदैःखुररेणुर्नभोगता । एतस्मिन्नंतरे तात रक्षको नगरस्य हि ॥
गृहीत्वाऽऽभरणं तस्यास्त्वङ्गप्रत्यङ्गिकंतथा । कुण्डलाङ्गदकेयूरहारनूपुरझल्लरीः
निवेद्याकथयद्राज्ञेमयादृष्टंत्ववेक्षणात् । तापसानामाश्रमे तु माण्डव्योयत्रतिष्ठति
तापसैर्वेष्टितो यत्र ददृशे तत्र सन्निधौ । दण्डवासिवचःश्रुत्वाप्रत्यक्षाङ्गविभूषणम्
स क्रोधरक्तनयनो मन्त्रिणो वीक्ष्यनैगमान् । ईदृग्भूतस्समाचारोब्राह्मणोनगरेमम
चौरचर्यां व्रतच्छन्नःपरद्रव्यापहारकः । तेनकन्याहृता मेऽद्य तपस्विपापकर्मिणा

शाकुन्तं रूपमास्थाय जलस्थो गगनं ययौ ।
पाखण्डिनो विकर्मस्थान्विडालव्रतिकाञ्छठान् ॥ १६ ॥
घातुतस्करवृत्तान्हन्यान्नास्त्यस्य पातकम् ।
नद्रष्टव्यो मया पापः स्तेयी कन्यापहारकः ॥ २० ॥

शूलमारोप्यतां क्षिप्रं न विचारस्तुतस्यवै । सच वध्योमयादुष्टोरक्षोरूपी तपोधनः

एवं ब्रुवंश्चलन्क्रोधादादिश्य दण्डवासिनम् ।
कार्याकार्यं न विज्ञाय शूलमारोपयद्द्विजम् ॥ २२ ॥
पौरा जानपदाः सर्वे अश्रुपूर्णमुखास्तदा ।
हाहेत्युक्त्वा रुदन्त्यन्ये वदन्ति च पृथक्पृथक् ॥ २३ ॥

कुटिलतं चकृतंकर्मराज्ञा चण्डालधारिणा । ब्रह्मणोनैव वध्योहिविशेषेणतपोव्रतः

यदि रोषसमाचारो निर्वास्यो नगराद्बहिः ।
न जातु ब्राह्मणं हन्यात्सर्वपापेऽप्यवस्थितम् ॥ २५ ॥

राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम् । नाश्नातिचगृहे राजन्नाग्निर्नगरवासिनाम

सर्वेऽप्युद्विग्नमनसो गृहव्याप्तिविवर्जिताः ॥ २६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे माण्डव्यशूलारोपणवर्णनंनाम सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

---

# एकसप्तत्यधिकशततमोऽध्यायः

## शाण्डिलीमहर्षिसम्वादवर्णनम्

श्रीमार्कण्डेय उवाच

कथितं ब्राह्मणं श्रुत्वा शूलेऽस्थितं तपोधनं । नारायणसमीपे तु गताः सर्वे महर्षयः
नारदो देवलो रैभ्यो यमः शातातपोऽङ्गिराः ।
वसिष्ठो जमदग्निश्च याज्ञवल्क्यो बृहस्पतिः ॥ २ ॥
कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽरुणिर्मुनिः ।
वालखिल्यादयोऽन्ये च सर्वेऽप्यृषिगणाऽव्ययाः ॥ ३ ॥
दृष्ट्वा शूलमारूढं माण्डव्यमृषिपुङ्गवाः । प्रोचुर्नारायण विप्रं किं कुर्मस्तव चेप्सितम्
सर्वे ते तत्र सान्निध्यान्माण्डव्यस्य महात्मनः ।
सम्भ्रान्ता आगता ऊचुः किं मृतः किं नु जीवति ॥ ५ ॥
अवस्था तस्य तां दृष्ट्वा विषादमगमन्परम् । असहित्वा तु तद्दुःखं सर्वे ते मनसा द्विजाः
पृच्छ्यमाना यदि मन्येत राजानं भस्मसात्कुरु ।
तेषां तद्वचनं श्रुत्वा वाक्यं नारायणोऽब्रवीत् ॥ ७ ॥
मयि जीवति मद्भ्राता ह्यवस्थामीदृशीं गतः ।
धिग्जीवितं च मे किन्नु तपसो विद्यते फलम् ॥ ८ ॥
दृष्ट्वा शूलस्थितं ज्येष्ठं मन्मनोऽनुविदीर्यते । परं किं नु करिष्यामि येन राष्ट्रं सराजकम्
भस्मसाच्च करोम्यद्य भवद्भिः क्षम्यतामिह ।
एवमुक्त्वा गृहीत्वाऽसौ करस्थमभिमन्त्रयेत् ॥ १० ॥
क्रोधेन पश्यते यावत्तावद्धुङ्कारकोऽभवत् ।
तेन हुंकारशब्देन ऋषयो विस्मितास्तदा ॥ ११ ॥
माण्डव्यस्य समीपे ह्यपृच्छंस्ते द्विजोत्तमाः ।

निवारयसि किं विप्र! शापं नृपजिघांसनम् ॥ १२ ॥
अपापस्य तु येनेह कृतमस्य जिघांसनम् ।
ऋषीणां वचनं श्रुत्वा कृच्छ्रान्माण्डव्यकोऽब्रवीत् ॥ १३ ॥
अभिवन्दामि वोमूर्ध्ना स्वागतं ऋषयः सदा ।
अर्घ्यसन्मानपूजार्हाः सर्वेऽत्रोपविशन्तु ते ॥ १४ ॥
निविष्टैकाग्रमनसा सर्वान्माण्डव्यकोऽब्रवीत् ॥ १५ ॥
प्राप्तं दुःखं मयाघोरं पूर्वजन्मार्जितंफलम् । माविषादं कुरुध्वं भोःकृतंपापंतुभुज्यते

ऋषय ऊचुः

केन कर्मविपाकेन इहजात्यन्तरं व्रजेत् । दानधर्मफलेनैव केन स्वर्गं च गच्छति ॥

माण्डव्य उवाच

अदत्तदाना जायन्तेपरभाग्योपजीविनः । नस्नानंनजपोहोमो नातिथ्यंनसुरार्चनम्
नपर्वणिपितृश्राद्धंनदानं द्विजसत्तमाः । व्रजन्तिनरके घोरेयान्तितेत्वन्त्यजांगतिम्
पुनर्दरिद्राः पुनरेव पापाः पापप्रभावान्नरके वसन्ति ।
तेनैव संसारिणि मर्त्यलोके जीवादिभूते कृमयः पतङ्गाः ॥ २० ॥
ये स्नानशीला द्विजदेवभक्ता जितेन्द्रिया जीवदयानुशीलाः ।
ते देवलोकेषु वसन्ति हृष्टा ये धर्मशीला जितमानरोषाः ॥ २१ ॥
विद्याविनीता न परोपतापिनः स्वदारतुष्टाः परदारवर्जिताः ।
तेषां न लोके भयमस्ति किञ्चित्स्वभावशुद्धा गतकल्मषा हि ते ॥ २२॥

ऋषय ऊचुः

पूर्वजन्मनि विप्रेन्द्र! किं त्वयादुष्कृतंकृतम् । येन कष्टमिदंप्राप्तं सन्धानंशूलगर्हितम्
शूलस्थंत्वांसमालक्ष्यह्यागताःसर्वएवहि । जीवन्तंत्वां प्रपश्याम त्वंतत्रअवतारयन्
रुजा सन्तापजं दुःखं सोढ्वापि त्वमवेदनः ॥ २४ ॥

माण्डव्य उवाच

स्वयमेव कृतं कर्म स्वयमेवोपभुज्यते । सुकृतं दुष्कृतं पूर्वं नान्ये भुञ्जन्तिकर्हिचित्

# एकसप्तत्यधिकशततमोऽध्यायः

## शाण्डिलीमहर्षिमम्वादवर्णनम्

श्रीमार्कण्डेय उवाच

कथित ब्राह्मण द्रष्टु शूलेक्षित तपोधनं । नारायणसमीपे तु गता सर्वे महर्षय

नारदो देवलो रैभ्यो यम शातातपोऽङ्गिरा ।

वसिष्ठो जमदग्निश्च याज्ञवल्क्यो बृहस्पति ॥ २ ॥

कश्यपोऽत्रिभरद्वाजो विश्वामित्रोऽकणिर्मुनि ।

वालखिल्यादयोऽन्ये च सर्वेप्यृषिगणाऽन्यया ॥ ३ ॥

ददृशु शूलमारूढ माण्डव्यमृषिपुङ्गवा । प्रोचुर्नारायण विप्रकिंनुर्मन्तयन्नेप्सितम्

सच ते तत्र सान्निध्यान्माण्डव्यस्य महात्मन ।

सम्भ्रान्ता आगता ऊचु किं मृत किं नु जीवति ॥ ५ ॥

अवस्था तस्यतेदृष्ट्वापियाद्मगमन्परम् । थसहित्यातुनद्दृदु संमर्वेत मनसाद्विजा

पृच्छयता यदि मन्येत राजान भस्मसात्कुरु ।

तदा तद्वचन श्रुत्वा वाक्यं नारायणोऽब्रवीत् ॥ ७ ॥

मयि आयति मद्भ्राता ह्यवस्थामादृशी गत ।

धिग्गांयित च मे किन्तु तपसो विद्यते फलम् ॥ ८ ॥

दृष्टाशूलस्थितज्येष्ठ मन्मनोऽनुविदीयते । परंकिंनुकरिष्यामि येनराष्ट्र सराजकम्

भस्मसाच्च करोम्यद्य भवद्भि क्षम्यतामिह ।

एवमुक्त्वा गृहीत्वाऽसौ करस्थमभिमन्त्रयेत् ॥ १० ॥

साधन पश्यत यावत्तावद्धुङ्कारकोऽभवत् ।

तत हुङ्कारशब्देन ऋषयो विस्मितास्तदा ॥ ११ ॥

माण्डव्यस्य समीपे तु ह्यपृच्छस्ते द्विजोत्तमा ।

द्वितीयेऽह्नि समायाता न तु बुध्वाऽथ तं ऋषिम्।
भर्त्तारं शिरसा धार्य रात्रौ पर्यटते स्म सा ॥ ४० ॥
न दृष्टः शूलके विप्रो भाराक्रान्त्या युधिष्ठिर !।
स्खलिता तस्य जानुभ्यां शूलस्थस्य पतिव्रता ॥ ४१ ॥
सर्वाङ्गेषु व्यथा जाता तस्याः प्रस्खलनान्मुनेः।
ईदृशीं वर्त्तमानां च ह्यवस्थां पूर्वदैविकीम् ॥ ४२ ॥
पुनःपापफलं किञ्चिद्वाकष्टंममवर्त्तते । व्यथितोऽहंत्वयापापे किमर्थंत्नकर्मणि
स्वैरिणीं त्वां प्रपश्यामि राक्षसी तस्करी नु किम्।
एवमुक्त्वा क्षणं मोहात्क्रन्दमानो मुहुर्मुहुः ॥ ४४ ॥
तपस्विनोऽथऋषयःसर्वेसंत्रस्तमानसाः । पश्यमानामुनेः कष्टं पृच्छन्तेतेयुधिष्ठिर
पर्यटसे किमर्थं त्वं निशीथे वहनं नु किम्।
क्षिप्तं तु झोलिकाभारं किंवाऽऽगमनकारणम् ॥
व्यथामुत्पाद्य ऋषये दुःखाद्दु दुःखविलासिनि !॥ ४६ ॥

शाण्डिल्युवाच

नाऽसुरीं न च गन्धर्वीं न पिशाचीं न राक्षसीम्।
पतिव्रतां तु मां सर्वे जानन्तु तपसि स्थिताम् ॥ ४७ ॥
नमेकामोनमेक्रोधो नवैरं न च मत्सरः। अज्ञानाद्दृष्टिमान्द्याच्चस्खलनं क्षन्तुमर्हथ
वहनं भर्तृसौख्याय दिवा सम्पीड्यते रुजा।
अयं भर्त्ता विजानीथ झोलिका संस्थितः सदा ॥ ४६ ॥
भरणं पानं वस्त्रं च ददाम्येतस्य रोगिणः।
ऋषिः शौनकमुख्योऽसौ शाण्डिलीं मां विजानत ॥ ५० ॥
स्वभर्तृधर्मिणीं कोपं मा कुरुध्वातिथिकुरु। सतांसमीपंसम्प्राप्तांसर्वेमेक्षन्तुमर्हथ

ऋषय ऊचुः

परव्यथां न जानीषे व्यचरन्ती यदृच्छया। प्रभातेऽभ्युदितेसूर्येतवभर्त्तामरिष्यति

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । तथा पूर्वकृतं कर्म कर्तारमुपगच्छति ॥

न माता न पिता भ्राता न भार्या न सुताः सुहृत् ।

न कस्य कर्मणा ऽपि स्वयमेवोपभुज्यते ॥ २९ ॥

श्रूयतां मम वाक्यं च भवद्भिः पृच्छितो ह्यहम् । पूर्वं वयसि भो विप्रा मल्लज्ञानकृतक्षणः

मयाज्ञानादुपालम्भार्थेन यूका कण्ठेऽधिरोपिता ।

तैलाभ्यक्तशिरोगात्रे मया यूका धृता न हि ॥ ३० ॥

कण्टकीतोऽप्यशेषेषु सा सा कण्ठेऽधिरोपिता । तेषु पापकृतं मया फलमेतन्ममागतम्

किंचित्कालं क्षपयित्वाऽहं प्राप्स्ये मोक्षं निरामयम् ।

भवन्तस्त्विह सन्तापं मा कुरुध्वं महर्षयः ॥ ३१ ॥

इमामवस्थां भुक्त्वाऽहं कश्चित्कल्पे न घोरके ।

अहानि कतिचिच्छूले क्षपयिष्यामि किल्बिषम् ॥ ३२ ॥

प्राक्तनं कर्म भुञ्जामि यन्मया सञ्चितं द्विजाः ।

क्षन्तव्यमस्य राज्ञोऽस्य कोपश्चैव विसर्ज्यताम् ॥ ३३ ॥

श्रुत्वा तु तस्य तद्वाक्यं माण्डव्यस्य महर्षयः ।

प्रहृष्यमतुलं लब्ध्वा साधुसाध्वित्यपूजयन् ॥ ३४ ॥

नारायण उवाच

इदं जलं मन्त्रपूतं तस्मिन्स्थाने क्षिपाम्यहम् । येन राजा भवेद्भस्म सराष्ट्रः सपुरोहितः

माण्डव्य उवाच

इदं जलं न रक्षस्व कालकूटविषोपमम् । समुद्रे क्षिपयिष्यामि दैवकार्यसमुत्थितम्

अथ ते मुनयः सर्वे माण्डव्यं प्रणिपत्य च ।

आमन्त्रयित्वा ह्यगाच्छ कश्यपाद्या गृहान् ययुः ॥ ३७ ॥

गच्छमानांस्तु तेऽवोचत् पञ्चमेऽहनि तापसाः ।

आगन्तव्यं भवद्भिश्च मत्सकाशं प्रतिज्ञया ॥ ३८ ॥

तथेति ते प्रतिज्ञाय नारदाद्या अदर्शनम् । गतेषु विप्रमुख्येषु शाण्डिलीव्रततपोधना

# द्विसप्तत्युत्तरशततमोऽध्यायः

## माण्डव्यतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

अथ तेऋषयःसर्वे देवाश्चेन्द्रपुरोगमाः। माण्डव्यस्याऽऽश्रमे पुण्ये समीयुर्नर्मदातटे
शङ्खदुन्दुभिनादेन दीपिकाज्वलनेन च। अप्सरोगीतनादेननृत्यन्त्यो वारयोषितः

कथानकैः स्तुवन्त्यन्ये तस्य शूलाग्रधारिणः।
अष्टाशीतिसहस्राणि स्नातकानां तपस्विनाम् ॥ ३ ॥

समाजेत्रिदशैःसार्द्धं तत्र ते चदिदृक्षया। ब्रह्मविष्णुमहेशानास्तत्र हर्षात्समागताः

मातरो मल्लिकाद्याश्च क्षेत्रपालाविनायकाः।
दिक्पाला लोकपालाश्च गङ्गाद्याश्च सरिद्वराः ॥ ५ ॥

ऋषिदेवसमाजे तु नित्यंहर्षप्रमोदने। तत्र राजा समायातः पौरजानपदैः सह ॥६

दृष्ट्वा कौतूहलं तत्र व्याकुलीकृतमानसम्।
वित्रस्तमनसो भूत्वा भयात्सर्वे समास्थिताः ॥ ७ ॥
तस्मिन्समागमे दिव्ये ब्रह्मविष्ण्वीशमब्रुवन्।
भो माण्डव्य महासत्त्व! वरदास्तेऽमरैः सह ॥ ८ ॥

अनेककष्टतपसा तव सिद्धिर्भविष्यति। प्रार्थयस्व यथाकामं यत्ते मनसिरोचते
अनादित्यमयं लोकं निर्वषट्कारमाकुलम्। नष्टधर्मंविजानीहिप्रकृतिस्थंकुरुष्व च

अनुग्रहं तु शाण्डिल्याः प्रार्थयाम द्विजोत्तम! ॥ १० ॥

एष ते कष्टदो राजासमायातस्तवाऽग्रतः। सम्भूषयस्वविप्रर्षे जनंदेवासुरं गणम्

माण्डव्य उवाच

यदि प्रसन्नामेदेवाःसमायाताःसुरैःसह। त्रिकालमत्रतीर्थेचस्थातव्यमृषिभिःसह
भवतांतुप्रसादेनरुजामेशाम्यतांसदा। एवमस्त्विति देवेशायावज्जल्पन्तिपाण्डव

आत्मदुःखात्परं दुःखं न जानासि कुलाधमे !।
तेन वाक्येन घोरेण शाण्डिली विमनाऽभवत् ॥ ५३ ॥
परं विषादमापन्ना क्षणं ध्यात्वाऽब्रवीद्वचः ।
कोपात्संरक्तनयना निरीक्षन्ती मुनींस्तदा ॥ ५४ ॥
मता गेहे पित्र माता भवता चाऽपकारिणी ।
साम्प्रतातिपितृजाया गिरौ च गृहमागते ॥ ५५ ॥
भवद्भिरीदृगाशिष्य एवऽर्थेव ममैव तु । स्वर्गापवर्गधर्मार्थ भवद्भिर्न निरीक्षितम्
प्राजापत्यामिमां दृष्ट्वा मा यथा प्राकृताः स्त्रियः ।
भजन्त्व स्त्रीफलं मेऽद्य पश्यन्तु दिवि देवताः ॥ ५७ ॥
भविष्यति न मे भर्ता ह्यादित्यो नोदयिष्यति ।
अन्धकारं जगत्सर्वं क्षीयते नाऽद्य शर्वरी ॥ ५८ ॥
एवमुक्ते तथा वाक्येन्नभिमतेऽर्कसमोमयम् । तथप्रजायतेसर्वंनिर्वषट्कारसत्क्रियम्
स्वाहाकार स्वधाकारः पञ्चयज्ञविधिर्न हि ।
स्नान दान जपो नास्ति सन्ध्यालोपव्यतिक्रमः ॥
षण्मासं च तदा पार्थ लुप्तपिण्डोदकक्रियम् ॥ ६० ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे शाण्डिलीऋषिसम्वादवर्णनं नामैकसप्तत्युत्तरशततमोऽध्यायः ॥१७१॥

---

तस्यास्तद्वचनं श्रुत्वा स्वप्नावस्था कृतो ह्यृषिः ।
अन्तर्हितो मुहूर्त्तं च शाण्डिल्याश्च प्रपश्य ताम् ॥ २९ ॥
पुनरादाय ते सर्वे कृत्वा निर्व्रणसत्तनुम्
स्नापितो नर्मदातोये शाण्डिल्यायै समर्पितः ॥ ३० ॥
ततःसा हृष्टमनसापतिंदृष्ट्वा तु तैजसम् । प्रणम्य तानृषीन्देवान्विमलार्कंजगत्कृतम्
क्रियाप्रवर्त्तिताःसर्वे देवगन्धर्वमानुषाः । हृष्टतुष्टा गताःसर्वे स्वमाश्रमपदं महत् ॥
पतिव्रतास्वभर्त्रा सा मासमेवाऽऽश्रमे स्थिता ।
माण्डव्येनाऽप्यनुज्ञाता ययौ नत्वा स्वमाश्रमम् ॥ ३३ ॥
गतेषु तेषु सर्वेषु स्थापयामास चाच्युतम् ।
माण्डव्येश्वरनामानं नारायण इति स्मृतम् ॥ ३४ ॥
दिव्यं वर्षसहस्रं तु पूजयामास भारत । गतोऽसावृषिसङ्घैश्चसहितोऽमरपर्वतम्
तपस्तपन्तौतौतत्रह्यद्यापिकिलभारत । भ्रातरौ संयतात्मानौ ध्यायतःपरमम्पदम्
तत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ।
पितरस्तस्य तृप्यन्ति पिण्डदानाद्वशाब्दिकम् ॥ ३७ ॥
देवगृहे तु पक्षादौ यः करोति विलेपनम् । गोदानशतसाहस्रे दत्ते भवतियत्फलम्
उपलेपनेन द्विगुणमर्चने तु चतुर्गुणम् । दीपप्रज्वलने पुण्यमष्टधा परिकीर्त्तितम्
दिव्यनेत्रधरो भूत्वा त्रैलोक्ये सचराचरे । दध्ना मधुघृतैर्देवं पयसा नर्मदोदकैः ॥
स्नपनं ये प्रकुर्वन्ति पुष्पमालाविलेपनैः । येऽर्च्चयन्ति विरूपाक्षंदेवंनारायणंहरिम्
तेऽपि दिव्यविमानेन क्रीडन्ते कल्पसङ्ख्यया ।
दीपाष्टकं तु यः कुर्यादष्टमीं च चतुर्द्दशीम् ॥ ४२ ॥
एकादश्यांतुकृष्णस्यनपश्यन्तियमंतुते । फलैर्नानाविधैः शुभ्रैर्यःकुर्य्याल्लिङ्गपूरणम्
तेऽपि यान्ति विमानेन सिद्धचारणसेविताः ।
घण्टा चैव पताका च विमाने पुष्पमालिका ॥ ४४ ॥
वादित्राणि यथार्हाणि प्रान्ते च गच्छते शिवम् ।

तावद्दक्षो गृहीत्वाऽग्रे कन्या कामप्रमोदिनीम् ।
उवाच भगवञ्छापं पुरा दत्त्वोर्वशी मम ॥ १४ ॥
यदा कन्या हरेदृक्ष शापातस्तेऽभविष्यति । तेनमेगर्हितकर्म्मशापेनाऽस्तनुद्विन
क्षन्तव्यमितिचोक्त्वा च गतश्चाऽदर्शनं पुनः ।
गते चैव तु सा कन्या दृष्ट्वा पद्मदलेक्षणा ॥ १६ ॥
मन्त्रयित्वासुरे सर्वैर्दत्तामाण्डव्यधीमते । तावत्रशूलिकाप्रगाऽपयित्रैश्चमंदोदर्के
माण्डव्यमृषिमुख्यायं जयशब्दादिमङ्गले ।
विवाहयित्वा ता कन्या माण्डव्य ऋषिपुङ्गव ॥ १८ ॥
अभिवाद्य च तान्सर्वान्दानमन्मानगौरवैः ।
अथ राजा समापन्थो रत्नैश्च विविधैरपि ॥ १९ ॥
धिग्वादैर्निन्दित सर्वैस्तैर्जनैभू पितःपुन । राजाथब्राह्मणा सर्वेभूषणाच्छादनाशनै
सुवर्णकोटिदानेन तुणान्दत्वाक्षमापिता ।
वृत्ते विवाहे आहूय शाण्डिली तामथाब्रवीत् ॥ २१ ॥
मामयस्व इमान् विप्रान् मोचयस्व दिवाकरम् ।
अपहृत्य तमो येन कृपा सद्य प्रवर्त्तते ॥ २२ ॥
श्रुत्वाणा वचनं श्रुत्वा शाण्डिली दु खिताऽब्रवीत् ।
उदितेऽर्के तु मे भर्ता मृत्यु यास्यति भो द्विजा ॥ २३ ॥
त कथ मोचयामीह ह्यात्मनोऽनिष्टसिद्धये । क्रियाप्रवसनाश्चार्थविकार्यमे महर्षय
नि पुंसा स्त्री ह्यनाथाऽहं भवामि भवतो मतम् ।
निप्र त्वमन्यथाकारे तु नेच्छामि रविणोदयम् ॥ २० ॥
ततवाक्यततमर्वेदेवासुरमहर्षय । शिर सञ्चाल्य सर्व्वेसाधु साध्विति चाऽब्रुवन्
पतिव्रते महाभागे श्रृणु वाक्यतपोधने ॥ मन्त्रमे यदि नः सर्वान्दुर्घवचनसयन्

शाण्डिल्युवाच

यत्न म न मरेद्भर्त्ता येन सत्य मुनेर्वच । तत्कुरुध्वं विचार्याशु येन सम्पद्यते सुखम्

पूर्णिमायाममावास्यां व्यतीपातेऽर्कसङ्क्रमे ।
श्राद्धं च संग्रहे कुर्यात्सगच्छेत्परमां गतिम् ॥ ६३ ॥
देवखातेत्रयो देवा ब्रह्मविष्णुमहेश्वराः । तिष्ठन्ति ऋषिभिःसार्द्धंपितृदेवगणैःसह
तत्र तीर्थेऽश्विनेमासिचतुर्द्दश्यांविशेषतः । वायुमार्गेस्थितःशक्रस्तिष्ठते दैवतैःसह
पृथिव्यां यानि तीर्थानि सरितः सागरास्तथा ।
विशन्ति तानि सर्वाणि देवखाते दिनद्वयम् ॥ ६६ ॥
गयाशिरे च यत्पुण्यं प्रयागेऽमकरकण्टके ।
प्रयागे सोमतीर्थे च तत्पुण्यं माण्डवेश्वरे ॥ ६७ ॥
पट्टबन्धेनृयत्पुण्यंमात्रायां लकुलेश्वरे । आश्विन्यामश्विनीयोगे तत्पुण्यंमाण्डवेश्वरे
उज्जयिन्यां महाकाले वाराणस्यां त्रिपुष्करे ।
सन्निहत्यां रविग्रस्ते माण्डव्याख्ये सनातनम् ॥ ६९ ॥
इति ज्ञात्वा महाराज सर्वतीर्थेषु चोत्तमम् ।
पितृन्देवान्समभ्यर्च्य स्नानदानादिपूजनैः ॥ ७० ॥
चतुर्द्दश्यां निराहारः स्थितो भूत्वा शुचिव्रतः ।
पूजयेत्परया भक्त्या रात्रौ जागरणे शिवम् ॥ ७१ ॥
स्नानैश्च विविधैर्देवंपुष्पागरुविलेपनैः । प्रभातेपौर्णमास्यां तुस्नानादिविधितर्पणैः
श्राद्धेन हव्यकव्येन शिवपूजार्चनेन च । अग्निष्टोमादियज्ञैश्च विधिवच्चाप्तदक्षिणैः
धौतपापो विशुद्धात्मा फलते फलमुत्तमम् । गोसहस्रप्रदानेन दत्तंभवति भारत !॥
स्नानाद्यैर्विधिवत्तत्र,तद्दिने शिवसन्निधौ । हिरण्यंवृषभं धेनुं भूमिं गोमिथुनंहयम्
शिवमुद्दिश्य वै वस्त्रयुग्मे दद्यात्सुरूपिणे । पादुकोपानहौछत्रं भाजनं रक्तवाससी
होमं जाप्यं तथा दानमक्षयं सर्वमेवतत् । ऋचमेकांतु ऋग्वेदेयजुर्वेदे यजुस्तथा ॥
सामैकं सामवेदेतु जपेद्देवाग्रसंस्थितः । सम्यग्वेदफलं तस्य भवेद्धि नाऽत्रसंशयः
गायत्रीजाप्यमात्रस्तु वेदत्रयफलंलभेत् । कुलकोटिशतंसाग्रं लभतेतुशिवार्चनात्
[illegible]

देवालयं तु यः कुर्याद्विष्णव माण्डव्येश्वरम् ॥ ४५ ॥
स्वर्गे वसति धर्मात्मा यावदाभूतसम्प्लवम् ।
माण्डव्यनारायणाख्ये विप्रान्भोजयतेऽग्रत ॥ ४६ ॥
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ।
आश्विने मासि सम्प्राप्ते शुक्लपक्षे चतुर्दशीम् ॥ ४७ ॥
कृतोपवासनियमो रात्रौ जागरणेन च । दीपमालां चतुर्दिक्षु पूजां कृत्वा तु शक्तितः
नारी वा पुरुषो वाऽपि नृत्यगीतप्रवादने । प्रभाते विमले दुर्ग्यैर्लाभादिकविधिं नृप
अभिनिवर्त्यमौनेन पश्यते देवमीदृशम् । सर्वपापविनिर्मुक्तो रुद्रलोके महीयते ॥
अथवा मार्गशीर्षे च चैत्रवैशाखयोरपि । श्रावणेवा महाराजसर्वकालेऽप्यपापिष
शिवरात्रिसमं पुण्यमित्येव शिवभाषितम् ।
वाजपेयाऽश्वमेधाभ्यां फलमाप्नोति नाऽन्यथा ॥ ५२ ॥
दुर्भगा तु स्त्रिता वन्ध्या दरिद्रा च मृतप्रजा ।
स्नाति रुद्रवरैर्या स्त्री सर्वान्कामानवाप्नुयात् ॥ ५३ ॥
कृमिकीटपतङ्गाश्चतस्मिंस्तीर्थे तु ये मृता । स्वर्गंप्रयान्तिते सर्वेदिव्यरूपधरान्नृप
अनाशके जलेऽग्नौ तु ये मृता व्याधिपीडिता ।
अनिवर्त्तिका गतिस्तेषां रुद्रलोके ह्यसशयम् ॥ ५५ ॥
नित्यंनमतियोराजञ्छिवनारायणावुभौ । गोदानफलमाप्नोतितस्यतीर्थप्रभावतः
देवालये तु राजेन्द्र यश्च कुर्यात्प्रदक्षिणाम् ।
प्रदक्षिणीकृता तेन ससागरधरा धरा ॥ ५७ ॥
सार्द्धं शतं च तीर्थानि मल्लिकाभवनाद् बहिः ।
तस्य तीर्थप्रमाणं तु विस्तरं राजसत्तम ॥ ५८ ॥
सूत्रेणवेष्टयेत्क्षेत्रमथवा शिवमन्दिरम् । अथवा शिवलिङ्गं च तस्यपुण्यफलं शृणु
जम्बूद्वीपश्च प्लक्षश्चशाल्मलीकुशक्रौञ्चकौ । शाकपुष्करगोमेदे सप्तद्वीपावसुन्धरा
भूषिता तेन राजेन्द्र सशैलवनकानना । रेवाया दक्षिणे भागे शिवक्षेत्रात्समीपत
देवखात महापुण्य निर्मितत्रिदशैरपि । तस्मिन्स्नात्वातुलोकानां मुच्यतेसर्वपातकै

पूर्णिमायाममावास्यां व्यतीपातेऽर्कसङ्क्रमे ।
श्राद्धं च संग्रहे कुर्यात्सगच्छेत्परमां गतिम् ॥ ६३ ॥
देवखातेत्रयो देवा ब्रह्मविष्णुमहेश्वराः । तिष्ठन्ति ऋषिभिःसार्द्धंपितृदेवगणैःसह
तत्र तीर्थेऽश्विनेमासिचतुर्द्दश्यांविशेषतः । वायुमार्गेस्थितःशक्रस्तिष्ठते देवतैःसह
पृथिव्यां यानि तीर्थानि सरितः सागरास्तथा ।
विशन्ति तानि सर्वाणि देवखाते दिनद्वयम् ॥ ६६ ॥
गयाशिरे च यत्पुण्यं प्रयागेऽमकरकण्टके ।
प्रयागे सोमतीर्थे च तत्पुण्यं माण्डवेश्वरे ॥ ६७ ॥
पट्टबन्धेनृयत्पुण्यंमात्रायां लकुलेश्वरे । आश्विन्यामश्विनीयोगे तत्पुण्यंमाण्डवेश्वरे
उज्जयिन्यां महाकाले वाराणस्यां त्रिपुष्करे ।
सन्निहत्यां रविग्रस्ते माण्डव्याख्ये सनातनम् ॥ ६९ ॥
इति ज्ञात्वा महाराज सर्वतीर्थेषु चोत्तमम् ।
पितृन्देवान्समभ्यर्च्य स्नानदानादिपूजनैः ॥ ७० ॥
चतुर्द्दश्यां निराहारः स्थितो भूत्वा शुचिव्रतः ।
पूजयेत्परया भक्त्या रात्रौ जागरणे शिवम् ॥ ७१ ॥
स्नानैश्च विविधैर्द्देवंपुष्पागरुविलेपनैः । प्रभातेपौर्णमास्यां तुस्नानादिविधितर्पणैः
श्राद्धेन हव्यकव्येन शिवपूजार्चनेन च । अग्निष्टोमादियज्ञैश्च विधिवच्चाप्तदक्षिणैः
धौतपापो विशुद्धात्मा फलते फलमुत्तमम् । गोसहस्रप्रदानेन दत्तंभवति भारत !॥
स्नानाद्यैर्विधिवत्तत्र तद्दिने शिवसन्निधौ । हिरण्यंवृषभं धेनुं भूमिं गोमिथुनंहयम्
शिवमुद्दिश्य वै वस्त्रयुग्मं दद्यात्सुरूपिणे । पादुकोपानहौछत्रं भाजनं रक्तवाससी
होमं जाप्यं तथा दानमक्षयं सर्वमेवतत् । ऋचमेकांतु ऋग्वेदेयजुर्वेदे यजुस्तथा ॥
सामैकं सामवेदेतु जपेद्देवाग्रसंस्थितः । सम्यग्वेदफलं तस्य भवेद्वै नाऽत्रसंशयः
गायत्रीजाप्यमात्रस्तु वेदत्रयफलंलभेत् । कुलकोटिशतंसाग्रं लभतेतुशिवार्चनात्
स्नाने दाने तथा श्राद्धे जागरे गीतवादिते ।

अनिवर्तिका गतिस्तस्य शिवलोकात्कदाचन ॥ ८० ॥
कालेन महताऽऽविष्टो मर्त्यलोके समाविशेत् ।
राजा भवति मेधावी सर्वव्याधिविवर्जितः ॥ ८१ ॥
जीवेद्वर्षशतं साग्रं पुत्रपौत्रधनान्वितः । तच्च तीर्थं पुनः स्मृत्वा लीयमानो महेश्वं
उपास्ते यस्तु वै सन्ध्यां तस्मिंस्तीर्थे च पर्वणि ।
साङ्गोपाङ्गैश्चतुर्वेदैर्लभते फलमुत्तमम् ॥ ८३ ॥
तत्र सर्वं शिवक्षेत्रमाक्रोशयात समन्ततः । न भवेद्ब्रह्मयोनिर्हि ब्रह्महत्या नराधिप
यत्रतत्रस्थितो भूमावप्यत्र तीर्थतत्परः । विविधैः पातकैर्मुक्तो मुच्यते नाऽत्र संशय
श्वभ्रीतन्महाराजन्मध्ये प्रदृश्यते । कथानिका पुराणोक्ता धान्तरीतीर्थसेवनात्
तत्र कूपो महाराज तिष्ठते देवनिर्मितः । शिवस्य पश्चिमे भागे शिवक्षेत्रमनुत्तमम्
धूपोत्सर्गं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ।
क्रीडन्ति पितरस्तस्य स्वर्गलोके यदृच्छया ॥ ८८ ॥
अगम्याऽऽगमने पापमपेया पयानेऽस्तिने । स्तेयाद्ब्रह्मगोहत्यागुरुघाताच्च पातकम्
तत्सर्वं नश्यते पापं धूपोत्सर्गे कृते तु वै ॥ ८९ ॥
माण्डव्यतीर्थमाहात्म्यं यः शृणोति समाहितः ।
मुच्यते सर्वपापेभ्यो नाऽत्र कार्या विचारणा ॥ ९० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे नर्मदामाहात्म्ये माण्डव्यतीर्थमाहात्म्यवर्णनंनाम
द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

---

# त्रिसप्तत्यधिकशततमोऽध्यायः

## शुद्धेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्रतीर्थं परमशोभनम्। नर्मदादक्षिणे कुले सर्वपापप्रणाशनम्॥
सिद्धेश्वरमिति ख्यातं महापातकनाशनम्। यत्रशुद्धिंपरां प्राप्तो देवदेवो महेश्वरः
पुराहत्यायुतःपार्थ देवदेवस्त्रिशूलधृक्। पुरापञ्चशिरा आसीद्ब्रह्मालोकपितामहः
तेनाऽनृतं वचश्चोक्तं कस्मिंश्चित्कारणान्तरे॥ ३॥
तच्छ्रुत्वा सहसातस्मै चुकोप परमेश्वरः। छेदयामासभगवान्मूर्द्धानं करजैस्तदा
तस्य तत्करसंलग्नं च्यवतेन कदाचन। ततो हि देवदेवेशः पर्यटन्पृथिवीमिमाम्॥
ततो वाराणसीं प्राप्तस्तस्यांतदपतच्छिरः। पतितेतु कपाले च ब्रह्महत्यानमुञ्चति
ततस्तु सागरे गत्वापूर्वेच दक्षिणेतथा। पश्चिमे चोत्तरे पार्थ! देवदेवो महेश्वरः
पर्यटन्सर्वतीर्थेषु ब्रह्महत्या न मुञ्चति। नर्मदादक्षिणे कुले सुतीर्थं प्राप्तवान्प्रभुः॥
कुलकोटिं समासाद्य प्रार्थयामास चात्मवान्।
प्रायश्चित्तं ततः कृत्वा बभूव गतकल्मषः॥ ६॥
ततो निष्कल्मषोजातो देवदेवोमहेश्वरः। दत्त्वासुरेभ्यस्तत्स्थानंततश्चान्तर्द्धधेप्रभुः
तदाप्रभृति तत्तीर्थं शुद्धरुद्रेति कीर्त्तितम्। विख्यातं त्रिषु लोके ब्रह्महत्याहरं परम्
मासे मासे सितेपक्षेऽमावास्यायां युधिष्ठिर।
स्नात्वा तत्र विधानेन तर्पयेत्पितृदेवताः॥ १२॥
दद्यात्पिण्डं पितृणां तु भावितेनान्तरात्मना।
तस्य ते द्वादशाब्दानि सुतृप्ताः पितरो नृप!॥ १३॥
गन्धधूपप्रदीपाद्यैरभ्यर्च्य परमेश्वरम्। शुद्धेश्वराभिधानं तु शिवलोके महीयते॥
एतत्ते कथितं राजञ्छुद्धरुद्रमनुत्तमम्। मया श्रुतंयथादेव सकाशाच्छूलपाणिनः

मुच्यते सर्वपापेभ्यो रुद्रलोकं स गच्छति ॥ ११ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे शुक्लेश्वरतीर्थमाहात्म्यवर्णनं नाम त्रिसप्तत्युत्तरशततमोऽध्यायः

---

## चतुःसप्तत्यधिकशततमोऽध्यायः

### गोपेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

गोपेश्वरं ततो गच्छेदुत्तरे नर्मदातटे । यत्र स्नानेन चैकेन मुच्यन्ते पातकैर्नराः ॥
तत्रतीर्थे तु यः स्नात्वा कुरुते प्राणसंक्षयम् । वह्नियुक्तेन यानेन स गच्छेच्छिवमन्दिरे ॥
क्रीडित्वा सुचिरं कालं शिवलोके नराधिप ।
इह मानुष्यतां प्राप्य राजा भवति वीर्यवान् ॥ ३ ॥
हस्त्यश्वरथसम्पन्नो दासीदाससमन्वितः । पूज्यमानो नरेन्द्रैश्च जीवेद्वर्षशतं नरः ॥
तस्मात्ते कार्त्तिके मासि नवम्यां शुक्लपक्षतः ।
सोपवासः शुचिर्भूत्वा दीपकांस्तत्र दापयेत् ॥ ५ ॥
गन्धपुष्पैः समभ्यर्च्य रात्रौ कुर्वीत जागरम् ।
तस्य यत्स्यात्सुकृतं तच्छृणुष्व नराधिप ॥ ६ ॥
यावत्पुण्यं फलं संख्या दीपकानां तथैव च । तावद्युगसहस्राणि शिवलोके महीयते ॥
तस्मिंस्तीर्थे तु राजेन्द्र लिङ्गपूरणकं विधिम् ।
तथैव पत्रकैश्चैव दधिभक्तैस्तथैव च ॥ ८ ॥
यस्तु कुर्यान्नरश्रेष्ठ तस्य पुण्यफलं शृणु । यावन्ति तिलसंख्यानि दधिभक्तं तथैव च
पद्मसंख्या शिवे लोके मोदते कालमीप्सितम् ।
तस्मिंस्तीर्थे तु राजेन्द्र यत्किञ्चिद्दीयते नृप ॥ १० ॥

सर्वं कोटिगुणंतस्य संख्यातुं वानशक्यते । एवंते कथितं सर्वंसर्वतीर्थमनुत्तमम् ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे गोपेश्वरतीर्थमाहात्म्यवर्णनंनाम चतुःसप्तत्युत्तरशततमोऽध्यायः

---

# पञ्चसप्तत्यधिकशततमोऽध्यायः

## कपिलेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

उत्तरे नर्मदाकूले भृगुक्षेत्रस्यमध्यतः । कपिलेश्वरंतु विख्यातंविशेषात्पापनाशनम्
योऽसौ सनातनो देवः पुराणे परिपठ्यते । वासुदेवो जगन्नाथः कपिलत्वमुपागतः
पातालं सुतलंनामतस्यैव नितलंह्यधः । गभस्तिगंचतस्याऽधोह्यन्धतामिस्रमेव च
पातालं सप्तमं यच्च ह्यधस्तात्संस्थितं महत् । वसतेतत्रवैदेवः पुराणःपरमेश्वरः ॥
सब्रह्मासमहादेवःसदेवो गरुडध्वजः । पूज्यमानःसुरैः सिद्धैस्तिष्ठते ब्रह्मवादिभिः

वसतस्तस्य राजेन्द्र! कपिलस्य जगद्गुरोः ।
विनाशं चाऽग्रतः प्राप्ताः क्षणेन सगरात्मजाः ॥ ६ ॥
भस्मीभूतांस्तु तान्दृष्ट्वा कपिलो मुनिसत्तमः ।
जगाम परमं शोकं चिन्त्यमानोऽथ किल्बिषम् ॥ ७ ॥

सर्वसंगपरित्यागे चित्तेनिर्विषयीकृते । अयुक्तं षष्टिसहस्राणांकर्तुंमम विनाशनम्

कृतस्य करणं नास्ति तस्मात्पापविनाशनम् ।
गत्वा तु कापिलं तीर्थं मोचयाम्यवमात्मनः ॥ ८ ॥

पातालं तु ततो मुक्त्वा कपिलोमुनिसत्तमः । तपश्चचारसुमहन्नर्मदातटमास्थित
व्रतोपवासैर्विविधैः स्नानदानजपादिकैः । परं निर्वाणमापन्नः पूजयन्रुद्रमव्ययम् ;
तत्र तीर्थे तुयः स्नात्वा पूजयेत्परमेश्वरम् । गोसहस्रफलंतस्य लभते नाऽत्र संशय

ज्येष्ठमासे तुग्रामे शुक्लपक्षे चतुर्दशी । तत्रस्नात्वाविधानेन भक्त्यादानप्रयच्छति
पात्रभूताय विप्रायस्वर्णं वायदिवायद्व । अक्षयं तत्फलं प्रोक्तं शिवेन परमेष्ठिना
अङ्गारकदिने प्राप्तेचतुर्थ्यां नवमीषु च । स्नानकरोतिपुरुषो भक्त्यांपोऽथवाङ्गना
रूपमैश्वर्यमतुलंसौभाग्यं सन्ततिपराम् । लभते मानवम्मानिनित्यं नित्यं पुन पुन
पौर्णमास्याममावास्यां स्नात्वा पिण्डं प्रयच्छति ।
नरूप ते द्वादशाब्दानि तृप्ता यान्ति पुरान्यम् ॥ १७ ॥
सवर्तार्थंतुपौमवत्या दयाङ्गीपस्तुशोभनम् । जायनेनम्यराजेन्द्रमहार्दीति शरीरना
तत्र तीर्थे मृतानां तु जन्तूनां सर्वदा किल ।
अनिवर्त्तिका भवेत्तेषां गतिस्तु शिवमन्दिरात् ॥ १६ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे कपिलेश्वरतीर्थमाहात्म्यवर्णननाम पञ्चसप्तत्यधिकशततमोऽध्याय

---

## षट्सप्तत्यधिकशततमोऽध्याय

### पिङ्गलेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततोगच्छेन्महीपाल पिङ्गलाख्यमुत्तमम् । सार्वंसवगुणोपेत कामिकभुविदुर्लभम्
वाचिक मानस पापकर्मजयन्तुराकृतम् । पिङ्गलेश्वरमासाद्य ततसर्वविलयव्रजेत्
तत्र स्नान च दान च देवखात कृतन्नृप । अक्षय तद्भवेत्सर्वमित्येवं शङ्करोऽब्रवीत् ॥
पृथिव्यासर्वतीर्थेषु समुद्धृत्यशुभोदकम् । मुक्ततत्रसुरै खात्वादेवखाततोऽभवत्

युधिष्ठिर उवाच

कथतु देवखात तत्सजातद्विजसत्तम । सुरा सर्वेकथ तत्र मुमुचुर्वारि तीर्थजम्
सर्वं कथय मे विप्र ! श्रवणे लम्पटं मन ॥ ५ ॥

श्रीमार्कण्डेय उवाच

यदा तुशूलशुद्ध्यर्थं रुद्रोदेवगणैः सह। बभ्राम पृथिवीं सर्वां कमण्डलुधरः शुभाम्
प्रभासाद्येपुतीर्थेपुस्नानंचक्रुःसुरास्तदा। सर्वतीर्थोत्थितंतोयं पात्रेवैनिहितंतुतैः
शूलभेदमनुप्राप्य शूलं शुद्धं तु शूलिनः। तत्रोत्थमुदकं गृह्य आगता भृगुकच्छके॥
तत्राऽपश्यंस्ततोह्यग्निपिङ्गलाक्षं च रोगिणम्। तपस्युग्रेव्यवसितंध्यायमानंमहेश्वर
हविर्भागैस्तुविप्राणांराज्ञां चैवामयाविनाम्। दृष्ट्वा तुवहुरोगार्त्तमग्निदेवमुखं सुराः
प्राहुस्ते सहिता देवं शङ्करं लोकशङ्करम्॥ १०॥

देवा ऊचुः

प्रसादः क्रियतां शम्भो पिङ्गलस्यामयाविनः।
यथा हि नीरुजः कायो हविषां ग्रहणक्षमः॥
पुनर्भवति पिङ्गस्तु तथा कुरु महेश्वर!॥ ११॥

ईश्वर उवाच

भोभोः सुरा हि तपसातुष्टोऽहं वोविशेषतः। वचनाच्चविशेषेणददाम्यभिमतवरम्

पिङ्गल उवाच

यदि तुष्टोऽसि देवेश! दीयते देव! चेप्सितम्।
चन्द्रादित्यौ च नयने कृत्वाऽत्र कलया स्थितः॥ १३॥
तथा पुनर्नवः कायोभवेद्धिमम शङ्कर। तथा कुरु विरूपाक्ष नमस्तुभ्यं पुनः पुनः॥

मार्कण्डेय उवाच

ततःसभगवाञ्छम्भुर्मूर्त्तिमादित्यरूपिणीम्। कृत्वातुतस्यतद्रोगमपानुदतशङ्करः
ततःपुनर्नवीभूतःपुनः प्रोवाचशङ्करम्। अत्रैव स्थीयतांशम्भोतथैव भास्करःस्वयम्
प्राणिनामुपकाराय रोगाणामुपशान्तये। पापानांध्वंसनार्थायश्रेयसां चैव वृद्धये
एवमुक्तस्तु भगवान्पिङ्गलेन महात्मना। अवतारं च कृतवान्गीर्वाणानिदमब्रवीत्

ईश्वर उवाच

मुञ्चध्वमुदकंदेवास्तीर्थेभ्यो यत्समाहृतम्। ममचोत्तरतःकृत्वा स्नातं देवमयंशुभम्

तत्रनिक्षिप्यनाथारि सर्वरोगविनाशनम् । सर्वपापहरं दिव्यं सर्वैरपि सुरादिभि
एवमुक्ताः सुराः सर्वे खातकृत्वा तथोत्तरे । त्रयस्त्रिंशत्कोटिगणैर्युक्तैस्तीर्थजंजलम्

प्रोचुस्ते सहिताः सर्वे विरूपाक्षपुरोगमाः ।

य कश्चिद्देवखातेऽस्मिन्मृदालम्भनपूर्वकम् ॥ २२ ॥

स्नानं कृत्वा रविदिने सम्प्राप्य नर्मदाजले ।

श्राद्धं कृत्वा पितृभ्यो वै दानं दत्त्वा स्वशक्तितः ॥ २३ ॥

पूर्णयिष्यन्ति पितृदेशतस्यवासस्त्रिविष्टपे । भविष्यतिसुरैरुक्त शृणोतिसकलंजगत्

श्रामया भुवि मर्त्यानां क्षयरोगविवर्धिका ।

व्याधयो विकृताकारा कासश्वासज्वरोद्भवाः ॥ २४ ॥

एकाहिकाश्चतुर्थाद्या ये ज्वराः भूतसम्भवाः ।

य चान्येविस्फोटाया दद्रुश्च कामलं तथा । दिनैनैसमभियान्तिनाशस्नानैरवैर्द्विजे

शनभेदप्रभिन्ना ये कुष्ठा बहुविधास्तथा ॥ २७ ॥

शतमादित्यवारेण स्नायाद्यस्तत्र तु य । सम्पूज्यशङ्करं दद्यात्तिलपात्रद्विजातये

तस्यन्तितस्यकुष्ठानिगरुडेनेवपन्नगाः । एवमुक्त्वागताः सर्वे त्रिदशास्त्रिदशालयम्

मार्कण्डेय उवाच

नदीषु देवखातेषु तडागेषु सरित्सु च । स्नानं समाचरेद्धित्य नरः पापैः प्रमुच्यते

षष्टितीर्थसहस्रेषु षष्टितीर्थशतेषु च । यत्फलं स्नानदानेषु देवखाते ततोऽधिकम्

देवखातेषु च स्नात्वा तर्पयित्वा पितॄन्नृप । पूजयेद्देवदेवेशं पिङ्गलेश्वरमुत्तमम् ॥

सोऽश्वमेधस्य यज्ञस्य वाजपेयस्य भारत ।

द्वयो पुण्यमवाप्नोति नात्र कार्या विचारणा ॥ ३३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे पिङ्गलेश्वरतीर्थमाहात्म्यवर्णननाम षट्सप्तत्युत्तरशततमोऽध्याय ॥

---

# सप्तसप्तत्यधिकशततमोऽध्यायः

## भूतीश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

भूतीश्वरं ततो गच्छेत्सर्वतीर्थेष्वनुत्तमम्। दर्शनादेव राजेन्द्र! यस्य पापंप्रणश्यति

तत्र स्थाने पुरापार्थ देवदेवेन शूलिना। उद्धूलनं कृतंगात्रे तेन भूतीश्वरं तु तत्

पुष्ये वा जन्मनक्षत्र (त्रेऽह्नि) अमावास्यां विशेषतः।

भूतीश्वरे नरः स्नात्वा कुलकोटिं समुद्धरेत् ॥ ३ ॥

तत्रस्थाने तुयो भक्त्याकुरुतेह्यङ्गगुण्ठनम्। तस्य यत्फलमुद्दिष्टं तच्छृणुष्वनराधिप

यावन्तो भूतिकणिका गात्रे लग्नाः शिवालये।

तावद्वर्षसहस्राणि शिवलोके महीयते ॥ ५ ॥

सर्वेषामेव स्नानानां भस्मस्नानं परं स्मृतम्।

पुराणैर्ऋषिभिः प्रोक्तं सर्वशास्त्रेष्वनुत्तमम् ॥ ६ ॥

एककालं द्विकालं वा त्रिकालं वाऽपि यः सदा।

स्नानं करोति चाऽऽग्नेयं पापं तस्य प्रणश्यति ॥ ७ ॥

दिव्यस्नानाद्वरंस्नानंवायव्यंभरतर्षभ। वायव्यादुत्तमंब्राह्मयं वरंब्राह्मयात्तुवारुणम्

आग्नेयं वारुणाच्छ्रेष्ठं यस्मादुक्तं स्वयम्भुवा।

तस्मात्सर्वप्रयत्नेन ह्याग्नेयं स्नानमाचरेत् ॥ ९ ॥

युधिष्ठिर उवाच

आग्नेयं वारुणंब्राह्मयंवायव्यंदिव्यमेवच। किमुक्तंश्रोतुमिच्छामिपरंकौतूहलंहिमे

मार्कण्डेय उवाच

आग्नेयं भस्मना स्नानमवगाह्य च वारुणम्।

आपोहिष्ठेति च ब्राह्मयं वायव्यं गोरजः स्मृतम् ॥ ११ ॥

सूर्ये दृष्टे तु यत्स्नानं गङ्गातोयेनतत्समम्। तत्स्नानेपञ्चमयोक्त दिव्यंपाण्डवसत्तम
तस्मात्सर्वप्रयत्नेनस्नात्वा भूतेश्वरेतु य । पूजयेद्देवमीशानसवाह्याभ्यन्तर शुचि
तत्र स्थाने तु ये नित्यं ध्यायन्ति परम पदम्।
सूक्ष्म घातीन्द्रिय नित्य ते धन्या नाऽत्र सशय ॥ १४ ॥
मुक्तितीर्थं तु तत्तीर्थं सर्वतीर्थेष्वनुत्तमम्। दर्शनादेव तस्यैव पापघातिमहत्क्षयम
जायतेपूजया राज्य तत्र स्तुत्वामहेश्वरम्। जपेन पापसशुद्धिर्ध्यानेनैनान्त्यमश्नुते
ॐ ज्योति स्वरूपममादिमध्यमनुत्पाद्यमानमनुधार्यमत्याक्षरम्।
सर्वभूतस्थित शिव सर्वयोगेश्वर सर्वलोकेश्वरमोहशोकहीनमहाज्ञानगम्यम् ॥
तत्र तीर्थे तु यो गत्वा स्नान कुर्यान्नरेश्वर।
अश्वमेधस्य यज्ञस्य फल प्राप्नोति मानव ॥
एवंभूत न जानन्ति मोक्षापेक्षणिका नरा ॥ १८ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्या सहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे भूतीश्वरतीर्थमाहात्म्यवर्णननाम सप्तसप्तत्यधिकशततमोऽध्याय ॥

---

## अष्टसप्तत्यधिकशततमोऽध्यायः

### गङ्गावाहकतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत् राजेन्द्र गङ्गावाहकमुत्तमम्। नर्मदाया महापुण्यं भृगुतीर्थसमीपत ।
तत्र गङ्गा महापुण्या चचार विपुल तप । पुरा वर्षशतसाग्रं परम व्रतमास्थिता
ध्यात्वा देव जगद्योनिं नारायणमकल्मषम्।
आत्मान परम धाम सरितमा उगतीपते ॥ ३ ॥
ततो जनार्दनो देव आगत्येदमुवाच ह ॥ ४ ॥

विष्णुरुवाच

तपसा तव तुष्टोऽहं मत्पादाम्बुजसम्भवे । मत्तः किमिच्छसे देवि ब्रूहि किं करवाणि ते

गङ्गोवाच

त्वत्पादकमलाद्भ्रष्टा गङ्गाऽहं परमा विभो । यदृच्छया त्रिलोकेश वन्द्यमाना दिवौकसैः
नृपो भगीरथस्तस्मात्तपः कृत्वा सुदुष्करम् । समाराध्य जगन्नाथं शङ्करं लोकशङ्करम्
अवतारयामास हि मां पृथिव्यां धरणीधर ॥ मयावै युवयोर्वाक्यादवतारः कृतो भुवि

वैष्णवीमिति मां मत्वा जनः सर्वाप्लुतो मयि ।
ये वै ब्रह्महणो लोके ये च वै गुरुतल्पगाः ॥ ९ ॥
त्यागिनः पितृमातृभ्यां ये च स्वर्णहरा नराः ।
गोघ्ना ये मनुजा लोके तथा ये प्राणिहिंसकाः ॥ १० ॥

अगम्यागामिनो ये च ह्यभक्ष्यस्य च भक्षकाः । वेदाऽनृतप्रवक्तारो ये च विश्वासघातकाः
देवब्राह्मणवित्तानां हर्त्तारो ये नराधमाः । देवब्रह्मगुरुस्त्रीणां ये च निन्दाकरा नराः
ब्रह्मशापप्रदग्धा ये ये चैवात्महनो द्विजाः । भ्रष्टानशनसंन्यासनियतव्रतधारिणः
तथैवापेयपेयाश्च ये च स्वगुरुनिन्दकाः । निषेधका ये दानानां पात्रदानपराङ्मुखाः

ऋतुघ्ना ये स्वपत्नीनां पित्रोः स्नेहपरा न हि ।
बान्धवेषु च दीनेषु करुणा यस्य नास्ति वै ॥ १५ ॥

क्षेत्रसेतुविभेदी च पूर्वमार्गप्रलोपकः । नास्तिकः शास्त्रहीनस्तु विप्रः सन्ध्याविवर्जितः

अहुताशी ह्यसन्तुष्टः सर्वाशी सर्वविक्रयी ।
कदर्या नास्तिकाः क्रूराः कृतघ्ना ये द्विजातयः ॥ १७ ॥
पैशुन्या रसविक्रेयाः सर्वकालविनाकृताः ।
स्वगोत्रां परगोत्रां वा ये भुञ्जन्ति द्विजाधमाः ॥ १८ ॥
ते मां प्राप्य विमुच्यन्ते पापसङ्घैः सुसञ्चितैः ।
तत्पापक्षारतप्ताया न शर्म मम विद्यते ॥ १९ ॥
तथा कुरु जगन्नाथ! यथाऽहं शर्म चाप्नुयाम् ।

अनिवर्त्तिका गतिस्तेषां विष्णुलोकात्कदाचन ॥ ३५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे गङ्गावाहकतीर्थमाहात्म्यवर्णनं नामाष्टसप्तत्युत्तरशततमोऽध्यायः ॥

---

## एकोनाशीत्यधिकशततमोऽध्यायः

### गौतमेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र गौतमेश्वरमुत्तमम् । सर्वपापहरं तीर्थं त्रिषु लोकेषु विश्रुतम्
गौतमेन तपस्तप्तं तत्र तीर्थे युधिष्ठिर ।। दिव्यं वर्षसहस्रं तु ततस्तुष्टो महेश्वरः ॥
प्रणम्य शिरसा तत्र स्थापितःपरमेश्वरः । स्थापितो गौतमेनेशो गौतमेश्वरउच्यते
तत्र देवैश्च गन्धर्वैर्ऋषिभिःपितृदेवतैः । सम्प्राप्ताह्युत्तमा सिद्धिराराध्यपरमेश्वरम्

तत्र तीर्थे तु यः स्नात्वा पूजयेत्पितृदेवताः ।
पूजयेत्परमीशानं सर्वपापैः प्रमुच्यते ॥ ५ ॥

बहवस्तन्न जानन्तिविष्णुमायाविमोहिताः । तत्रसन्निहितंदेवंशूलपाणि महेश्वरम्
ब्रह्मचारीतुयोभूत्वातत्रतीर्थे नरेश्वर । स्नात्वाऽर्चयेन्महादेवंसोऽश्वमेधफलं लभेत्
ब्रह्मचारी तु यो भूत्वा तर्पयेत्पितृदेवताः । पूजयेत्परमीशानं सर्वपापैः प्रमुच्यते ॥

तत्र तीर्थे तु यो दानं भक्त्या दद्याद् द्विजातये ।
तदक्षयफलं सर्वं नाऽत्र कार्या विचारणा ॥ ६ ॥
मासे चाऽश्वयुजे राजन्कृष्णपक्षे चतुर्दशीम् ।
स्नात्वा तत्र विधानेन दीपकानां शतं ददेत् ॥ १० ॥

पूजयित्वा महादेवं गन्धपुष्पादिभिर्नरः । मुच्यते सर्वपापेभ्योमृतःशिवपुरं व्रजेत्
अष्टम्यां च चतुर्दश्यां कार्त्तिक्यां तु विशेषतः ।

उपोष्य प्रयतो भूत्वा घृतेन स्नापयेच्छिवम् ॥ १२ ॥
पञ्चगव्येन मधुना दध्ना वा शीतवारिणा । सर्वस्य यज्ञस्य फलं प्राप्नोति मानवः
भक्त्यानुपूजयेत्पश्चात्स लभेत्फलमुत्तमम् । बिल्वपत्रैररण्डैश्च पुष्पैरुन्मत्तकोद्भवैः
कुशापामार्गसंहितैः कदम्बद्रोणजैरपि । मल्लिका करवीरैश्च रक्तपीतैः सितासितैः
पुष्पैरन्यैर्यथालाभं यो नरः पूजयेच्छिवम् । निरन्तरं षण्मास यो ऽर्चयेद्गौतमेश्वरम्
सर्वान्कामानवाप्नोति मृतः शिवपुरं व्रजेत् ॥ १६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे गौतमेश्वरतीर्थमाहात्म्यवर्णननामैकोनाशीत्यधिकशततमोऽध्याय ॥

---

## अशीत्यधिकशततमोऽध्यायः

### दशाश्वमेधतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल दशाश्वमेधिकं परम् । तीर्थं सर्वगुणोपेतं महापातकनाशनम्
यत्र गत्वा महाराज स्नात्वा सम्पूज्य शंकरम् ।
दशानामश्वमेधानां फलं प्राप्नोति मानवः ॥ २ ॥

युधिष्ठिर उवाच

अश्वमेधो महायज्ञो बहुसम्भारदक्षिणः । अशक्यः प्राकृतैः कर्तुं कथं तेषां फलं लभेत्
अत्याश्चर्यमिदं तत्त्वं त्वयोक्तं वदतां सता । यथा मे जायते श्रद्धा दीर्घायुस्त्वं तथा वद

मार्कण्डेय उवाच

इदमाश्चर्यभूतं हि गौर्या पृष्टस्त्रियम्बकः । तत्तेऽहं सम्प्रवक्ष्यामि पृच्छतो निपुणाय वै
पुरा वृषस्थो देवेशः उमया सह शङ्करः । कदाचित्पर्यटन्पृथ्वीं नर्मदातटमाश्रित
दशाश्वमेधिकं तीर्थं दृष्ट्वा देवो महेश्वरः । तीर्थं प्रत्यर्पितं ध्यानमग्नो त्रिलोचन

कृताञ्जलिपुटं देवं दृष्ट्वा देवीदमब्रवीत् ॥ ८ ॥

देव्युवाच

किमेतद्देवदेवेश! चराचरनमस्कृत !। प्रह्वनम्राञ्जलिं बद्ध्वा भक्त्या परमया युतः

एतदाश्चर्यमतुलं सर्वं कथय मे प्रभो! ॥ १० ॥

ईश्वर उवाच

प्रत्यक्षं पश्य तीर्थस्य फलं मा विस्मिता भव ।

वियत्स्था मे भुविस्थस्य क्षणं देवि! स्थिरा भव ॥ ११ ॥

एवमुक्त्वा तु देवेशो गौरवर्णो द्विजोऽभवत् ।

क्षुत्क्षामकण्ठो जटिलः शुष्को धमनिसन्ततः ॥ १२ ॥

उपविश्यभुवःपृष्ठेसुस्वरंमन्त्रमुच्चरन् । क्रमप्रियोमहादेवो माधुर्येण प्रमोदयन् ॥ १३

श्रुत्वा तां मधुरां वाणीं स्वयं देवेन निर्मिताम् ।

सम्भ्रान्ता ब्राह्मणाः सर्वे स्नातुं ये तत्र चाऽऽगताः ॥ १४ ॥

नित्यक्रिया च सर्वेषां विस्मृता श्रुतिविभ्रमात् ।

तं दृष्ट्वा पठमानं तु क्षुत्पिपासाऽभिपीडितम् ॥ १५ ॥

द्विजोन्यमन्त्रयत्कश्चिद्भक्त्या तंभोजनायवै । प्रसादः क्रियतांब्रह्मन्भोजनायगृहेमम

अद्य मे सफलं जन्म ह्यद्य मे सफलाः क्रियाः ।

सर्वान्कामान्प्रदास्यन्ति प्रीता मेऽद्य पितामहाः ॥ १७ ॥

त्वयि भुक्ते द्विजश्रेष्ठ प्रसीद त्वं ध्रुवं मम । एवमुक्तो महादेवो द्विजरूपधरस्तदा

प्रहस्य प्रत्युवाचेदं ब्राह्मणंश्लक्ष्णयागिरा । मयावर्षसहस्रं तु निराहारं तपः कृतम्

इदानीं तुगृहे तस्य करिष्ये द्विजसत्तम । दशभिर्वाजिमेधैश्च येनेष्टं पारणं तथा ॥

इत्युक्तो देवदेवेनब्राह्मणो विस्मयान्वितः । उत्तमाङ्गंविधुन्वन्वै जगामस्वगृहंप्रति

एवंतेबहवोविप्राःप्रत्याख्यातेनिमन्त्रणे । पुराणार्थमजानन्तोनास्तिकाबहवोगताः

अथ कश्चिद् द्विजो विद्वान्पुराणार्थस्य तत्त्ववित् ।

[illegible]

ब्राह्मण उवाच

यदि प्रीतोऽसि मेदेवयदिदेयोवरो मम। अस्मिंस्तीर्थेमहादेव स्थानव्यं सर्वदैवहि
उपकाराय देवेश एष मे वर उत्तमः । एवमुक्तस्तु देवेन आरुरोह द्विजोत्तमः ॥

गन्धर्वाप्सरःसम्बाधं विमानं सार्वकामिकम्।
पूज्यमानो गतस्तत्र यत्र लोका निरामयाः ॥ ४१ ॥

मार्कण्डेय उवाच

एतदाश्चर्यमतुलं दृष्ट्वा देवी सुविस्मिता । विस्मयोत्फुल्लनयना पुनःपप्रच्छशङ्करम्

पार्वत्युवाच

कथमेतद्भवेत्सत्यं यत्रेदमसमञ्जसम् । स्नानं कुर्वन्ति बहवो लोका यत्र महेश्वर ॥
नेषां तु स्वर्गगमनं यथैव स्वर्गतिं गतः । कथमेतत्समाचक्ष्व विस्मयः परमो मम

एतच्छ्रुत्वा तु देवेशः प्रहस्यप्रत्युवाच ताम्।
वेदवाक्ये पुराणार्थे स्मृत्यर्थे द्विजभाषिते ॥ ४६ ॥

विस्मयो हिनकर्त्तव्योह्यनुमानंहितत्तथा । असंसाध्यंहिलोकानां पुराणेयत्प्रगीयते
यदि पक्षं पुरस्कृत्य लोकाः कुर्वन्ति पार्वति ॥
तस्मान्न सिद्धिरेतेषां भवत्येको न विस्मयः ॥ ४७ ॥

नास्तिका भिन्नमर्यादा ये निश्चयबहिष्कृताः।
तेषां सिद्धिर्न विद्येत आस्तिक्याद्भवते शुभम् ॥ ४८ ॥

श्रुत्वाख्यानमिदं देवीववन्देतीर्थमुत्तमम्। सर्वपापहरंपुण्यं नर्मदायांव्यवस्थितम्

मार्कण्डेय उवाच

दशाश्वमेधं राजेन्द्र सर्वतीर्थोत्तमोत्तमम्। तीर्थं सर्वगुणोपेतं महापातकनाशनम्
तत्रागता महाभागा स्नातुकामा सरस्वती।
पुण्यानां परमा पुण्या नदीनामुत्तमा नदी ॥ ५१ ॥
नाममात्रेण यस्यास्तु सर्वपापैः प्रमुच्यते।
स्नातास्तत्र दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ ५२ ॥

दशाश्वमेधे साराजनियताब्रह्मचारिणी । आराधयित्वा दवेशपरनिर्वाणमागती
कालुष्य ब्रह्मसभूतासवत्सरसमुद्भवम् । प्रक्षालयितुमायाति दशम्यामाश्विनस्यच
उपोष्य रजनीं ता तु सपूज्य त्रिपुरान्तकम् ।
राजनिष्कलमषा यान्ति श्वोभूते शाश्वत पदम् ॥ ५५ ॥

युधिष्ठिर उवाच

सरस्वती महापुण्या नदीनामुत्तमानदी । दशाश्वमेधमायाति स्नातुसवत्सरेसदा
किमधिकृत्य भवेत्तीर्थं दशम्या तत्र शस मे ॥ ५६ ॥

श्रीमार्कण्डेय उवाच

राजनाश्वयुजेमासि दशम्या तद्विशिष्यते। पार्थिवेषु चतीर्थे तुसर्वेष्वेव नराधिप
दशाश्वमेधिकेराजनित्यहि दशमीशुभा । विशेषादाश्विनेशुक्लामहापातकनाशिनी
तस्या स्नात्वाऽर्चयेद्देवानुपवासपरायण ।
श्राद्ध कृत्वा विधानेन पश्चात्सपूजयेच्छिवम् ॥ ५७ ॥

सम्प्रस्था पूजयेद्देवीं स्नातुकामा सरस्वतीम् । नमो नमस्ते देवेशि ब्रह्मदेहसमुद्भवे
कुरु पापक्षय देवि ससाराम्मा समुद्धर । गन्धधूपैश्च सपूज्य ह्यर्घ दत्वा पुन पुन
दश प्रदक्षिणा दत्वा सूत्रेण परिवेष्टयेत् । कपिला तुततोविप्रे दद्याद्विगतमत्सर
सर्वलक्षणसपन्ना सर्वोपस्करसयुताम् । दत्त्वा विप्राय कपिलान शोचतिकृताकृते
पश्चाज्जागरण कुर्याद्घृतेनोज्वाल्यदीपकम् । पुराणपठनेनैव नृत्यगीतविवादनै
वेदोक्तैश्चैव जाप्यैश्चपूजयेच्छशिशेखरम् । प्रभातेविमले पश्चात्स्नात्वार्चेनमदाजले
ब्राह्मणान्भोजयेद्भक्त्या शिवभक्ताश्च योगिन ।
एव कृत्न ततो राजन्सम्यक्तीर्थफल लभेत् ॥ ६६ ॥

तत्र तीर्थे तु य स्नात्वा पूजयेच्छङ्करनर । दशाश्वमेधावभृथ लभते पुण्यमुत्तमम्
पूतात्मा तेन पुण्येन रुद्रलोक स गच्छति ।
आरूढ परम यान कामग च सुशोभनम् ॥ ६८ ॥
तत्र दिव्याऽप्सरोभिस्तु वीज्यमानोऽथ चामरै ।

क्रीडते सुचिरं कालं जयशब्दादिमङ्गलैः ॥ ६६ ॥
ततोऽवतीर्णः कालेन इहराजाभवेद्ध्रुवम् । हस्त्यश्वरथसंपन्नो महाभोगी परंतपः
दशाश्वमेधे यद्दानं दीयते शिवयोगिनाम् । दशाश्वमेधसदृशं भवेत्तन्नाऽत्र संशयः
सर्वेषामेव यज्ञानामश्वमेधो विशिष्यते ।
दुर्लभः स्वल्पवित्तानां भूरिशः पापकर्मणाम् ॥ ७२ ॥
तत्र तीर्थेतु राजेन्द्रदुर्लभोऽपिसुरासुरैः । प्राप्यतेस्नानदानेन इत्येवंशङ्करोऽब्रवीत्
अकामो वा सकामो वा मृतस्तत्र नरेश्वर ।
देवत्वं प्राप्नुयात्सोऽपि नाऽत्र कार्या विचारणा ॥ ७४ ॥
अग्निप्रवेशं यः कुर्यात्तत्र तीर्थेनरोत्तम । अग्निलोके वसेत्तावद्यावदाभूतसम्प्लवम् ॥
जलप्रवेशंयः कुर्यात्तत्र तीर्थे नराधिप । ध्यायमानो महादेवंवारुणंलोकमाप्नुयात्
दशाश्वमेधे यः कश्चिच्छूरवृत्त्या तनुं त्यजेत्
अक्षया तु गतिस्तस्य इत्येवं श्रुतिनोदना ॥ ७७ ॥
न तां गतिं यान्ति भृगुप्रपातिनो न दण्डिनो नैव च सांख्ययोगिनः ॥
ध्वजाकुले दुन्दुभिशंखनादिते क्षणेन यां यान्ति महाहवे मृताः ॥ ७८॥
यत्र तत्र हतःशूरः शत्रुभिः परिवेष्टितः । अक्षयाँल्लभतेलोकान्यदि क्लीवं न भाषते
दशाश्वमेधे संन्यासं यः करोति विधानतः ।
अनिवर्त्तिका गतिस्तस्य रुद्रलोकात्कदाचन ॥ ८० ॥
दशाश्वमेधे यत्पुण्यं संक्षेपेणयुधिष्ठिर । कथितं परया भक्त्यासर्वपापप्रणाशनम्
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे दशाश्वमेधतीर्थमाहात्म्यवर्णनंनामाशीत्युत्तरशततमोऽध्यायः ॥

---

# एकाशीत्यधिकशततमोऽध्याय

## भृगुकच्छोत्पत्तिवर्णनम्

श्रीमार्कण्डेय उवाच

अत परम्प्रवक्ष्यामि भृगुतीर्थस्य विस्तरम् । यच्छ्रुत्वाब्रह्महागोघ्नोमुच्यतेसर्वपातकै
तत्रतीर्थे तुविख्यात धूतपापमितिस्थितम् । भृगुणातत्र राजेन्द्रतपस्तप्त पुराकिल

युधिष्ठिर उवाच

भृगुकच्छे सविप्रेन्द्रो नियतस्थेनहेमुना । तपस्तप्त्वासुविपुलपरा सिद्धिमुपागत

को वा भृग इति प्रोक्तस्तस्मात् येन स्थानितम् ।

एतत्सर्वं यथान्याय कथयस्व ममाऽनघ ॥ ४ ॥

श्रीमार्कण्डेय उवाच

एष प्रश्नो महाराजयस्त्वया परिपृच्छित । तत्सर्वंकथयिष्यामि भृगुर्येकमनानृप
षष्ठस्तु ब्रह्मण पुत्रो मानसो भृगुसत्तम । तपश्चचार विपुलर्थावृते क्षेत्र उत्तमे ॥

दिव्यं वर्षसहस्रं तु सशुष्को मुनिसत्तम ।

निराहारो निरानन्द काष्ठपाषाणवत्स्थित ॥ ७ ॥

तत कदाचिद्वृषेशोविमानवरमास्थित । उमयासहित श्रीमास्तेनमार्गेणचागत
दृष्ट्वा तत्र महाभाग भृगु वल्मीकवत्स्थितम् । उवाच देवीदेवेशकिमिदृश्यतेप्रभो

ईश्वर उवाच

भृगुनाम महादेवि तपस्तप्त्वा सुदारुणम् । दिव्यवर्षसहस्रं तुमम ध्यानपरायण
जलबिन्दु कुशाग्रेण मासेमासे पिबेत्स । सम्यक्स्मरणात्र तिष्ठते च वरानने
तच्छ्रुत्वा वचन गौरीक्रोधसंवर्तितेक्षणा । उवाचदेवी देवेश शूलपाणि महेश्वरम

सत्यमुग्रोऽसि लोके त्व ख्यापितो वृषभध्वज ।

निष्कारुण्यो दुराराध्य सर्वभूतभयङ्कर ॥ १३ ॥

दिव्यं वर्षसहस्रं तु ध्यायमानस्यशङ्करम्। ब्राह्मणस्यवरं कस्मान्नप्रयच्छसिशंसमे
एवमुक्तोऽथ देवेशः प्रहस्य गिरिनंदिनीम्। उवाच नरशार्दूल!मेवगम्भीरयागिरा
स्त्री विनश्यति गर्वेणतपः क्रोधेननश्यति। गावो दूरप्रचारेणशूद्रान्नेन द्विजोत्तमाः

क्रोधान्वितो द्विजो गौरि! तेन सिद्धिर्न विद्यते।
धर्मायुतैस्तथा लक्षैर्न किञ्चित्कारणं प्रिये!॥ १७॥
एवंभूतस्य तस्याऽपि क्रोधस्य चरितं महत्।
एवमुक्त्वा ततः शम्भुर्वृषं दध्यौ च तत्क्षणे॥ १८॥

वृषोहि भगवन्ब्रह्मा वृषरूपी महेश्वरः। ध्यानप्राप्तः क्षणादेव गर्जयन्वै मुहुर्मुहुः॥
किंकरोमि सुरश्रेष्ठ ध्यातःकेनैव हेतुना। करोमि कस्य निधनमकाले परमेश्वर!॥

ईश्वर उवाच

कोपयस्व द्विजश्रेष्ठं गत्वा त्वंभृगुसत्तमम्। येनमे श्रद्दधत्येषा गौरीलोकैकसुन्दरी

एतच्छ्रुत्वा वृषो गत्वा धर्षणार्थं द्विजोत्तमम्।
नर्मदायास्तटे रम्ये समीपे चाऽऽश्रमे भृगुः॥ २२॥

ततः शृंगैर्गृहीत्वा तुप्रक्षिप्तोनर्मदाजले। ततःक्रुद्धो भृगुस्तत्र दण्डहस्तोमहामुनिः
पशुवत्ते वधिष्यामि दण्डघातेनमस्तके। शिखायज्ञोपवीते च परिधानं वरासने

सुसंवृतं कृतं तेन धावन्वै पृष्ठतोऽब्रवीत्॥ २५॥

भृगुरुवाच

पापकर्मन्दुराचार कथंयास्यसिमेवृष। अवमानं समुत्पाद्य कृत्वा गर्त्तं खुरैस्तथा
गर्जयित्वामहानादंततो विप्रमपातयत्। आत्मानं पालितंज्ञात्वावृषेणपरमेष्ठिना
भृगुः क्रोधेनजज्वाल हुताहुतिरिवानलः। करेगृह्य महादण्डं ब्रह्मदण्डमिवाऽपरम्
हन्तुकामो वृषंविप्रोभ्यधावत युधिष्ठिर। धावमानं ततो दृष्ट्वास वृषः पूर्वसागरे
जम्बूद्वीपं कुशं क्रौञ्चं शाल्मलिंशाकमेवच। गोमेदंपुष्करंप्राप्तः पूर्वतोदक्षिणापथम्
उत्तरं पश्चिमं चैवद्वीपाद्द्वीपं नरेश्वर। पातालं सुतलं पश्चाद्वितलंच तलातलम्॥

तामिस्रमन्धतामिस्रं पातालं सप्तमं ययौ।

ततो जगाम भूर्लोकं प्राणार्थी स द्विजोत्तम ॥३२॥
भुवः स्वश्चैव च महस्तपः सत्यं जनस्तथा।
अनुगम्यमानो विप्रेण न शर्म लभते क्वचित् ॥ ३३ ॥
पाप कृत्यैव पुरुषः कामक्रोधबलार्दितः। ततो जगाम शरणं ब्रह्माणं विष्णुमेव च ।
इन्द्रं चन्द्रं तथाऽऽदित्यैर्यमवारुणमारुतैः।
यदा सर्वैः परित्यक्तो लोकालोके सुरेश्वरैः ॥ ३५ ॥
तदा देव नमस्कृत्वा रक्षरक्षस्वचाऽब्रवीत्। वध्यमानमहादेवो भृगुणा परमेष्ठिन
सकलोकैः परित्यक्तमनाथमिव तं प्रभो। दृष्ट्वा श्रान्तं नृप देव पतितं चरणाग्रत
ततः प्रोवाच भगवान्स्मितपूर्वमिदं वचः ॥ ३८ ॥

ईश्वर उवाच

पश्य देवि! महाभाग! शमं विप्रस्य सुन्दरि! ॥ ३९ ॥

पार्वत्युवाच

यावद्विप्रोमयास्माकं कुप्यते परमेश्वर!। तावद्वरप्रदश्चाऽऽशुयदिचेच्छसिमत्प्रियः
ततो भस्मी जटी शूली चन्द्रार्धकृतशेखरः। उमार्धदेहोभगवान्भूत्वा विप्रमुवाच
भोभोद्विजवरश्रेष्ठक्रोधस्तेनशमंगतः। यस्मात्तस्मादिदंतातक्रोधस्थानं भविष्यति
ततो दृष्ट्वा च तं शम्भुं भृगु श्च त्रिलोचनम्।
जानुभ्यामवनिं गत्वा इदं स्तोत्रमुदीरयन् ॥ ४३ ॥

भृगुरुवाच

प्रणिपत्य भूतनाथं भवोद्भवं भूतिदं भयातीतम्।
भवभीतो भुवनपते! विज्ञप्तुं किञ्चिदिच्छामि ॥ ४४ ॥
त्वद्गुणनिकरान्वक्तुं का शक्तिर्मानुषस्यास्य।
वासुकिरपि न तावद्वक्तुं वदनसहस्रं भवेद्यस्य ॥ ४५ ॥
भक्त्या तथाऽपि शङ्कर! शशिधर! करजालधवलिताशेष!।
स्तुतिमुखरस्य महेश्वर! प्रसीद तव चरणनिरतस्य ॥ ४६ ॥

सत्त्वं रजस्तमस्त्वं स्थित्युत्पत्तिविनाशनं देव !।
भवभीतो भुवनपते भुवनेश! शरणनिरतस्य ॥ ४७ ॥
यमनियमयज्ञदानं वेदाभ्यासश्च धारणायोगः।
त्वद्भक्तेः सर्वमिव नार्हन्ति वै कलासहस्रांशम् ॥ ४८ ॥
उत्कृष्टरसरसायनखड्गाञ्जनविवरपादुकासिद्धिः।
चिह्नं हि तव नतानां दृश्यत इह जन्मनि प्रकटम् ॥ ४९ ॥
शाठ्ये न यदि प्रणमति वितरसि तस्याऽपि भृतिमिच्छया देव !।
भवति भवच्छेदकरी भक्तिर्मोक्षाय निर्मिता नाथ !॥ ५० ॥
परदारपरस्वरतं परपरिभवदुःखशोकसन्तप्तम्।
परवदनवीक्षणपरं परमेश्वर! मां परित्राहि ॥ ५१ ॥
अधिकाभिमानमुदितं क्षणभङ्गुरविभवविलसन्तम्।
क्रूरं कुपथाभिमुखं शङ्कर! शरणागतं परित्राहि ॥ ५२ ॥
दीनं द्विजं परार्थे बन्धुजनेनैव पूरिता आशा।
छिन्धि महेश्वर! तृष्णां किं मूढं मां विडम्बयसि ॥ ५३ ॥
तृष्णां हरस्व शीघ्रं लक्ष्मीं दद हृदयवासिनीं नित्यम्।
छिन्धि मदमोहपाशं मामुत्तारय भवाच्च देवेश !॥ ५४ ॥
करुणाभ्युदयं नाम स्तोत्रमिदं सर्वसिद्धिदं दिव्यम्।
यः पठति भृगुं स्मरति च शिवलोकमसौ प्रयाति देहान्ते ॥ ५५ ॥
एतच्छ्रुत्वा महादेवः स्तोत्रं च भृगुभाषितम्।
उवाच वरदोऽस्मीति देव्या सह वरोत्तमम् ॥ ५६ ॥

भृगुरुवाच

प्रसन्नो देवदेवेश! यदि देयो वरो मम। सिद्धिक्षेत्रमिदं सर्वं भविता मम नामतः॥
भवद्भिः सन्निधानेन स्थातव्यं हि सहोमया। देवक्षेत्रमिदंपुण्यंयेनसर्वम्भविष्यति
अत्र स्थाने महास्थानं करोमि जगदीश्वर। तवप्रसादाद्देवेश पूर्यन्तांमे मनोरथाः

ईश्वर उवाच

श्रियारत्नमिदं पूर्वं किं न ज्ञातं त्वया द्विज। अनुमान्य श्रियं देवीं यदीयं मन्यते भवान्
कुरुष्व यदभिप्रेतं त्वत्कृतं न तदन्यथा।
एवमुक्त्वा गते देवे स्नात्वा गत्वा भृगुः श्रियम् ॥ ६१ ॥
कृत्वा च पारणं तत्र च सन्निविष्टस्तया सह। श्रियाचसहितः काले इदं वचनमब्रवीत्

भृगुरुवाच

यदि मे रोचसे भद्रे! दुःखासीनं च मे यदि।
त्वया गृहे महाक्षेत्रे स्थीयं स्थानं करोम्यहम् ॥ ६२ ॥

श्रीरुवाच

ममनाम्ना तु विप्रर्षे तव नाम्ना तु शोभनम्। स्थानं कुरुष्वाभिप्रेतमविरोधेन मे मतिः

भृगुरुवाच

कच्छपाधिष्ठितं ह्येतत्तस्य पृष्ठिगतं त्वमे। समस्त्वं सहितं तेन शोभनं भवती कुरु
इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे भृगुकच्छोत्पत्तिवर्णनं नामैकाशीत्युत्तरशततमोऽध्यायः ॥

---

## द्व्यशीत्यधिकशततमोऽध्यायः

### भृगुकच्छतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो भृगुः श्रिया चैव समेतः कच्छपं गतः। अभिवन्द्य यथान्यायमुवाच वचनं शुभम्
त्वया पुना धरा सर्वा तथा लोकाश्चराचराः।
त्वं च पुण्यभावत्वात्स्थितस्तत्र महामते ॥ २ ॥
चातुर्विद्यस्य स्थानं करोमि रमया सह। यदि त्वमन्यसे देव तदादेशय माविभो

कूर्म उवाच

एवमेवद्विजश्रेष्ठ ममनामाङ्कितं पुरम् । भविष्यति महत्कालं ममोपरिसुसंस्थितम्

अचलं सुस्थिरं तात न भीःकार्या सुलोचने !।

एतच्छ्रुत्वा शुभं वाक्यं कच्छपस्य मुखाच्च्युतम् ॥ ५ ॥

नन्दनेवत्सरे माघे पञ्चम्यां भरतर्षभ । शस्ते नु हा त्तरायोगेकुम्भस्थे शशिमण्डले

रेवाया उत्तरे तीरे गम्भीरे चारुवारुणि । प्रागुदक्प्रवणेदेशे कोटितीर्थसमन्वितम्

क्रोशप्रमाणं तत्क्षेत्रं प्रासादशतसङ्कुलम् । अचिरेणैवकालेन तपोबलसमन्वितः ॥

विचिन्त्य विश्वकर्माणं चकार भृगुसत्तमः ॥ ६ ॥

ब्राह्मणा वेदविद्वांसो क्षत्रिया राज्यपालकाः ।

वैश्या वृत्तिरतास्तत्र शूद्राः शुश्रूपकास्त्रिपु ॥ १० ॥

एवं श्रिया वृतं क्षेत्रं परमानन्दनन्दितम् । निर्मितं भृगुणातातसर्वपातकनाशनम्

इति भृगुकच्छोत्पत्तिः

मार्कण्डेय उवाच

ततःकालेन महता कस्मिंश्चित्कारणान्तरे ।

देवलोकंःजगामाशु लक्ष्मीऋ षिसमागमे ॥ १२ ॥

समर्प्य कुञ्चिकाट्टालं भृगवे ब्रह्मवादिने । पालयस्व यथार्थं चे स्थानकं ममसुव्रत

देवकार्याण्यशेषाणि कृत्वा श्रीः पुनरागता ।

आजगाम रमा देवी भृगुकच्छं त्वरान्विता ॥ १४ ॥

प्रार्थितं कुञ्चिकाट्टालंःस्वगृहं स्वपरिग्रहम् ।

भृगुर्यदा तदा पार्थ! मिथ्या नास्ति तदाऽवदत् ॥ १५ ॥

एवं विवादः सुमहान्सञ्जातश्च नरेश्वर । ममेति मम चैवेति परस्परसमागमे ॥१६

ततः कालेन महता भृगुणा परमर्षिणा ।

चातुर्विद्यप्रमाणार्थं चकार महतीं स्थितिम् ॥ १७ ॥

अस्मदीयं यथा सर्वं नगरंमृगलोचने । चातुर्विद्या द्विजाःसर्वेतथाजानन्तिसुन्दरि

ईश्वर उवाच

श्रियाकृतमिदं पूर्वं किं न ज्ञातत्वयाद्विज । अनुमान्यश्रिय देवीं यदीयमन्यतेभवान्
कुरुष्व यदभिप्रेत त्वत्कृत न तदन्यथा ।
एवमुक्त्वा गते देवे ज्ञात्वा गत्वा भृगु श्रियम् ॥ ६१ ॥
कृत्वा च पारण तत्रचसन्निधमस्तया सह । श्रियाचसहित काल इदं वचनमब्रवीत्

भृगुरुवाच

यदि ते रोचते भद्रे तु चासीनं च ते यदि ।
त्वया कृते महाक्षेत्रे स्वीय स्थान करोम्यहम् ॥ ६३ ॥

श्रीरुवाच

ममनाम्ना तु विप्रर्षेतवनाम्ना तु शोभनम् । स्थान कुरुष्वाभिप्रेतमविरोधेनमेमति

भृगुरुवाच

कच्छपाधिष्ठित ह्येतत्तस्य पृष्ठिगने रमे । समन्त्य सहित तेन शोभन भवती कुरु
इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यासंहितायापञ्चमेऽवन्तीखण्डे
रेवाखण्डे भृगुकच्छोत्पत्तिवर्णन नामैकाशीत्युत्तरशततमोऽध्याय ॥

---

## द्व्यशीत्यधिकशततमोऽध्यायः

### भृगुकच्छतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो भृगु श्रिया चैव समेत कच्छपगत । अभिनन्द्य यथान्यायमुवाचवचनशुभम्
त्वया धृता धरा सर्वा तथा लोकाश्चराचरा ।
तथैव पुण्यभावत्वात्स्थितस्तत्र महामने ॥ २ ॥
चातुर्विद्यस्य सस्थान करोमि रमया सह । यदित्वमन्यसेदेव तदादेशयमाविभो

भृगुरुवाच

शापयित्वा द्विजान्सर्वान्पुरा लक्ष्मीर्विनिर्गता।
अपवित्रमिदं चोक्त्वा ततो देवा विनिर्गताः॥ ३३॥

ईश्वर उवाच

पुरा मयायथाप्रोक्तंतत्तथा न तदन्यथा। क्रोधस्थानमसन्देहंतथाऽन्यदपितच्छृणु
तत्र स्थानसमुद्भूता महद्भयविवर्जिताः। ब्राह्मणामत्प्रसादेन भविष्यन्तिनसंशयः
वेदविद्याव्रतस्नाताः सर्वशास्त्रविशारदाः।
येऽपि ते शतसाहस्रास्त्वरिता ह्यागतास्त्विह॥ ३६॥
अपठस्यापि मूर्खस्य सर्वावस्थांगतस्य च। उत्तरादुत्तरंशक्तो दातुंन तु भृगूत्तम
कोटितीर्थमिदं स्थानं सर्वपापप्रणाशनम्। अद्यप्रभृतिविप्रेन्द्र भविष्यतिन संशयः
मत्प्रसादाद्देवगणैः सेवितश्च भविष्यति। भृगुक्षेत्रे मृताये तु कृमिकीटपतङ्गकाः
वासस्तेषां शिवे लोके मत्प्रसादाद्भविष्यति।
वृषखाते नरः स्नात्वा पूजयित्वा महेश्वरम्॥ ४०॥
सर्वमेधस्य यज्ञस्य फलंप्राप्नोत्यसंशयम्। भृगुतीर्थेनरः स्नात्वा तर्पयेत्पितृदेवताः
तस्य ते द्वादशाब्दानि शान्ति गच्छन्ति तर्पिताः।
दधिक्षीरेण तोयेन घृतेन मधुना सह॥ ४२॥
येस्नपन्तिविरूपाक्षंतेषां वासस्त्रिविष्टपे। मत्प्रसादाद्द्विजश्रेष्ठसर्वदेवानुसेवितम्
भविष्यति भृगुक्षेत्रं कुरुक्षेत्रादिभिः समम्।
मार्त्तण्डग्रहणे प्राप्ते यवं कृत्वा हिरण्मयम्॥ ४४॥
दत्त्वा शिरसि यः स्नाति भृगुक्षेत्रे द्विजोत्तम!।
अविचारेण तं विद्धि संस्नातं कुरुजाङ्गले॥ ४५॥
अहं चैव वसिष्यामि अम्बिका च मम प्रिया।
सर्वदुःखापहा देवी नाम्ना सौभाग्यसुन्दरी॥ ४६॥
वसिष्यामि तया देव्या सहितो भृगुकच्छके।

धर्मउवाच

प्रमाणमम विप्रेन्द्र धातुर्वण्या न संशयः । मदीयंवात्वदीयंवाक्यमस्तुद्विजोत्तमाः
तत समस्तैर्विबुधै सम्यधार्यपरस्परम् । द्विधातैर्वाक्यमस्यत्दृष्ट्वाब्राह्मणान्नृपसंहितम्
अष्टादशसहस्राणि नोचुर्वै किञ्चिदुत्तरम् । अष्टादशसहस्रेषु भृगुकोपमयान्नृप ॥

उक्तं च तान्क हस्ते यस्य तस्येदमुत्तरम् ॥ २१ ॥

एतच्छ्रुत्वा तु सा देवी निगम नैगमं कृतम् ।

क्रोधेन महताविष्टा शशाप द्विजपुङ्गवान् ॥ २८ ॥

श्रीदेव्युवाच

यस्मात्सत्यं समुत्सृज्य लोभोपहतमानसैः ।

मदीयं लोपितं स्थानं तस्माच्छृण्वन्तु मे गिरम् ॥ २३ ॥

त्रिपौरुषामनैर्विद्याविपुलन भनेऽवनम् । न द्वितीयस्तुयोवेद पठितोभयतिद्विजा

गृहाणि न द्विभौमानि न च भूतिः स्थिरा द्विजा ।

एभयानन यो धर्मो न च निःश्रेय भावत ॥ २० ॥

इणे गोत्रजन कश्चिल्लोभेनावृतमानस । न च द्वैध परित्यज्य हे क्सत्यमभविष्यति
अद्यप्रभृति सर्वगामहङ्कारो द्विजन्मनाम् । न पितापुत्रवाक्येन न पुत्र पितृकर्मपि
अहङ्कारकृता सर्व भविष्यन्तिनसंशय । इति जप्त्वा रमादेवी तदैव च दिवं ययौ

ततो गताया वै लक्ष्म्या देवाब्रह्मर्षयोऽमला ।

क्रोधलोभमिदं स्थानं तेऽपि त्यक्त्वा दिवं ययु ॥ २९ ॥

गता दृष्ट्वा ततो देवामृषाश्चैव तपोधनान् ।

भृगुश्च परमंप्रा स विषादमगमत्परम् ॥

प्रसादयामास पुनः शङ्करं त्रिपुरान्तकम् ॥ ३० ॥

तपसा महता पार्थ ततस्तुष्टो महेश्वर । उवाच वचनं काले हर्षयन्भृगुमुत्तमम्॥

किं विषण्णोऽसि विप्रेन्द्र' किं वा सन्तापकारणम् ।

मयि प्रसन्नेऽपि तव ह्येतत्कथय मेऽनघ ॥ ३२ ॥

स याति परमं लोकमिति रुद्रः स्वयं जगौ ॥ ६३ ॥
देवखाते नरः स्नात्वा पिण्डदानादिसत्क्रियाम् ।
यां करोति नृपश्रेष्ठ! तामक्षयफलां विदुः ॥ ६४ ॥
य इमं शृणुयाद्भक्त्या भृगुकच्छस्य विस्तरम् ।
कोटितीर्थफलं तस्य भवेद्वै नाऽत्र संशयः ॥ ६५ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे भृगुकच्छतीर्थमाहात्म्यवर्णनंनाम द्व्यशीत्युत्तरशततमोऽध्यायः

---

## त्र्यशीत्यधिकशततमोऽध्यायः

### केदारेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

अतःपरंमहाराजगच्छेत्केदारसञ्ज्ञकम् । यत्रगत्वामहाराजश्राद्धं कृत्वा पिवेज्जलम्
सम्पूज्य देवदेवेशं केदारोत्थं फलं लभेत् ॥ १ ॥

युधिष्ठिर उवाच

कथमत्र सुरश्रेष्ठ केदाराख्यः स्थितः स्वयम् । उत्तरे नर्मदाकूले एतद्विस्तरतोवद

श्रीमार्कण्डेय उवाच

पुरा कृतयुगस्याऽऽदौ शङ्करस्तुमहेश्वरः । भृगुणाराधितःशप्तःश्रियाचभृगुकच्छके
अपवित्रमिदंक्षेत्रं सर्ववेदविवर्जितम् । भविष्यति नृपश्रेष्ठ गतेत्युक्त्वा हरिप्रिया
तपश्चचार विपुलं भृगुर्वर्षसहस्रकम् । वायुभक्षो निराहारश्चिरं धमनिसन्ततः ॥
ततःप्रत्यक्षतामागाल्लिङ्गीभूतोमहेश्वरः । प्रादुर्भूतस्तुसहसाभित्त्वापातालसप्तकम्
ददर्शाऽथ भृगुर्देवमौत्पलीं कलिकामिव ।
स्तुतिं चक्रे स देवाय स्थाणवे त्र्यम्बकेति च ॥ ७ ॥

एवमुक्त्वा स्थितो देवो भृगुकच्छेऽम्बिका तथा ॥ ४७ ॥
भृगुस्तु स्वपुरं प्रायाद् ब्रह्मघोषनिनादितम् ।
ऋग्यजुःसामघोषेण ह्याथर्वणनिनादितम् ॥ ४८ ॥
तत्रतीर्थेतुयः स्नात्वा पूजयेद् भृगुसत्तमम् । स याति शिवसायुज्यमित्येवं शङ्करोऽब्रवीत्
तत्र तीर्थे तु यः स्नात्वा चैत्रे मासि समाचरेत् ।
दद्याच्च लवणं चित्रे पूज्य सौभाग्यसुन्दरीम् ॥ ५० ॥
साभूद्धिरण्यं विप्रेभ्य प्रार्थयेत् ललितां शिवाम् । न दुःखदुर्भगत्वञ्च वियोगं पतिना सह
प्राप्नोति नारी राजेन्द्र भृगुनार्याः प्रसादेन च । यस्तु नित्यं भृगुं देवं पश्येद्वै पाण्डुनन्दन
आब्रह्मसदनं यावत्तत्रस्थैर्देवतैः सह । यत्फलं समवाप्नोति तच्छृणुष्व नृपोत्तम ॥
सुवर्णशृङ्गां कपिलां पयस्विनीं साध्वीं सुशीलां तरुणीं सवत्साम् ।
दत्त्वा द्विजे संयमतोपपन्ने फलं च यत्स्यात्तदिहैव नूनम् ॥ ५४ ॥
समाः सहस्राणि तु सप्त वै जले त्रियेत्भेद्द्वादशवह्निमध्ये ।
ध्यानस्तु शस्त्रहत्या नरेन्द्र शक्राऽतिथ्यं याति वै मर्त्यधर्मा ॥ ५५ ॥
आख्यानमेतच्च सदा यशस्यं स्वर्ग्यं धन्यं पुण्यमायुष्यकारि ।
*रण्यलुभे मत्वमेतद्धि भक्त्या पर्वणि पर्वण्याजमीढस्तदैव ॥ ५६ ॥
सन्यासं कुरुते यस्तु भृगुतीर्थे विधानतः । स मृतः परमस्थानं गच्छेद्वैयच्चदुर्लभम्
एतच्छ्रुत्वा भृगुश्रेष्ठोदेवदेवेनभाषितम् । महाप्रसन्नो भूत्वा तत्रैव संस्थितो द्विजः
तिरोभावं गते देवे भृगुश्रेष्ठो द्विजोत्तम ।
स्वमूर्तिं तत्र मुक्त्वा तु ब्रह्मलोकं जगाम ॥ ५९ ॥
भृगुकच्छस्य चोत्पत्तिः कथिता तव पाण्डव ।
संक्षेपेण महाराज सर्वपापप्रणाशनी ॥ ६० ॥
एतत्पुण्यं पापहरं क्षेत्रं देवेन कीर्तितम् । चतुर्युगसहस्रेण पितामहदिनं स्मृतम् ॥
प्राप्ते ब्रह्मदिने विप्रा नायं नेयुगसम्भवः । न पश्यामि त्विदं क्षेत्रमिति रुद्रः स्वयं जगौ
यः शृणोति त्विदं भक्त्या नारी वा पुरुषोऽपि वा ।

स याति परमं लोकमिति रुद्रः स्वयं जगौ ॥ ६३ ॥
देवखाते नरः स्नात्वा पिण्डदानादिसत्क्रियाम् ।
यां करोति नृपश्रेष्ठ! तामक्षयफलां विदुः ॥ ६४ ॥
य इमं शृणुयाद्भक्त्या भृगुकच्छस्य विस्तरम् ।
कोटितीर्थफलं तस्य भवेद्वै नाऽत्र संशयः ॥ ६५ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे भृगुकच्छतीर्थमाहात्म्यवर्णनंनाम द्व्यशीत्युत्तरशततमोऽध्यायः

---

## त्र्यशीत्यधिकशततमोऽध्यायः

### केदारेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

अतःपरंमहाराजगच्छेत्केदारसञ्ज्ञकम् । यत्रगत्वामहाराजश्राद्धं कृत्वा पिबेज्जलम्
सम्पूज्य देवदेवेशं केदारोत्थं फलं लभेत् ॥ १ ॥

युधिष्ठिर उवाच

कथमत्र सुरश्रेष्ठ केदाराख्यः स्थितः स्वयम् । उत्तरे नर्मदाकूले एतद्विस्तरतोवद

श्रीमार्कण्डेय उवाच

पुरा कृतयुगस्याऽऽदौ शङ्करस्तुमहेश्वरः । भृगुणाराधितःशप्तःश्रियाचभृगुकच्छके
अपवित्रमिदंक्षेत्रं सर्ववेदविवर्जितम् । भविष्यति नृपश्रेष्ठ गतेत्युक्त्वा हरिप्रिया
तपश्चचार विपुलं भृगुर्वर्षसहस्रकम् । वायुभक्षो निराहारश्चिरं धमनिसन्ततः ॥
ततःप्रत्यक्षतामागाल्लिङ्गीभूतोमहेश्वरः । प्रादुर्भूतस्तुसहसाभित्त्वापातालसप्तकम्
ददर्शाऽथ भृगुर्देवमोत्पलीं कलिकामिव ।
स्तुतिं चक्रे स देवाय स्थाणवे त्र्यम्बकेति च ॥ ७ ॥

एवं स्तुतः स भगवान्प्रोवाच प्रहसन्निव । पुनः पुनर्भृगुं भक्तं किन्नु प्रार्थयसे॥

भृगुरुवाच

पशुक्रोशमिदं क्षेत्रं यत्त्वया शापितं विभो । अपवित्रमिदं क्षेत्रं सर्वक्षेत्रविवर्जितम्
भविष्यतीति च प्रोच्य गता देवी दिवं प्रति ॥ ६ ॥

पुनः पवित्रतां याति यथेदं क्षेत्रमुत्तमम् । तथा कुरु महेशान प्रसन्नो यदि शं

ईश्वर उवाच

केदाराख्यमिदं ब्रह्मन् लिङ्गमाद्यं भविष्यति ।
इत्यवमादिलिङ्गानि भविष्यन्ति द्विजोत्तम हि ॥ ११ ॥

एकादशानन्दरूपाण्यन्तर्बहि क्षेत्रमध्ये भविष्यति । पा(ल)यिष्यन्ति तत्क्षेत्रमेकादशास्ययवि
तथा वै द्वादशादित्या मत्प्रसादात्तु भूमिप ।
वसिष्यन्ति भृगुक्षेत्रे रोगदुःखनिबर्हणाः ॥ १३ ॥

दुर्गा एकादश तथा क्षेत्रपालास्तु षोडश । भृगुक्षेत्रे भविष्यन्ति यदिमप्राक्षमार
पवित्रीकृतमतदि नित्यं क्षेत्रं भविष्यति ।

*माघमासे तु पक्षकाले स्नात्वा भरत जितेन्द्रिय ॥ १५ ॥*

यः पूजयति केदारं स गच्छेच्छिवमन्दिरम् ।
तस्मिंस्तीर्थे नरः स्नात्वा पितृनुद्दिश्य भारत ।
श्राद्धं ददाति विधिवत्तस्य प्रीताः पितामहाः ॥ १६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे केदारेश्वरतीर्थमाहात्म्यवर्णनं नाम त्र्यशीत्युत्तरशततमोऽध्यायः ॥

---

# चतुरशीत्यधिकशततमोऽध्यायः

## धौतपापतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

धौतपापं ततो गच्छेद्भृगुतीर्थसमीपतः । वृषेणतु भृगुस्तत्र भूयोभूयोभुतस्ततः

धौतपापं तु तत्तेन नाम्नालोकेपुविश्रुतम् । तत्र स्थितोमहादेवस्तुष्ट्यर्थंभृगुसत्तमे

तत्र तीर्थे तु यः स्नात्वा शाठ्येनाऽपि नरेश्वर !।

मुच्यते सर्वपापेभ्यो नाऽत्र कार्या विचारणा ॥ ३ ॥

यस्तु सम्यग्विधानेन तत्र स्नात्वाऽर्चयेच्छिवम् ।

देवान्पितॄन्समभ्यर्च्य मुच्यते सर्वपातकैः ॥ ४ ॥

ब्रह्महत्या गवांवध्या तत्रतीर्थे युधिष्ठिर । प्रविशेन्नसदाभीताप्रविष्टापिक्षयम्व्रजेत्

युधिष्ठिर उवाच

आश्चर्यभूतं लोकेऽस्मिन्कथयस्वद्विजोत्तम । प्रविशेन्नब्रह्महत्यायथार्थंधौतपाप्मनि

ब्रह्महत्यासमं पापं भविता नेह किञ्चन । कथं वा धौतपापे तु प्रविष्टं नश्यते द्विज

एतद्विस्तरतः सर्वं पृच्छामि वद कौतुकात् ॥ ७ ॥

मार्कण्डेय उवाच

आदिसर्गे पुरा शम्भुर्ब्रह्मणः परमेष्ठिनः । विकारंपञ्चमंदृष्ट्वा शिरोऽश्वमुखसन्निभम्

अङ्गुष्ठाङ्गुलियोगेन तच्छिरस्तेनकृन्तितम् । कृत्तमात्रे तु शिरसिब्रह्महत्याऽभवत्तदा

ब्रह्महत्यायुतश्चासीदुत्तरे नर्मदातटे । धुनितं तु यतो राजन्वृषेण धर्म्ममूर्त्तिना ॥

तत्र धौतेश्वरीं देवीं स्थापितां वृषभेण तु ।

ददर्श भगवाञ्छम्भुः सर्वदैवतपूजिताम् ॥ ११ ॥

दृष्ट्वाधौतेश्वरीं दुर्गां ब्रह्महत्याविनाशिनीम् । तत्रविश्रममाणश्चशङ्करस्त्रिपुरान्तकः

स शङ्करो ब्रह्महत्या विहीनं मेने त्मानन्तस्य तीर्थस्य भावात् ।

गुप्तिस्थितो देवदेवो वरेण्यो दृष्टा दूरे ब्रह्महत्यां च तीर्थात् ॥ १३ ॥
विधौतपापं महितं धर्मशक्त्या विशेष हत्या देवीमगात्सभीता ।
रक्ताम्बरा रक्तमाल्योपयुक्ता कृष्णा नारी रक्तदामप्रमत्ता ॥ १४ ॥
सा चाङ्गुली स्कन्धदेशे रहस्ये दूरे स्थिता तीर्थवरप्रभावात् ।
सञ्चिन्त्य देवो मनसा स्वतारिवासाय बुद्धिं तत्र तीर्थे चकार ॥ १५ ॥
विमृश्य देवो बहुधा स्थितः स्वयं विधौतपापे प्रथिते पृथिव्याम् ।
बभूव तत्रैव निवासकारी विधूतपापनिकल्मषस्थः ॥ १६ ॥

तदाप्रभृति राजेन्द्र ब्रह्महत्याविनाशनम् । विधौतपापतत्तीर्थं महापापस्थितम
अभ्युक्षणार्चनपरो तत्र कार्यं विशिष्यते । दिनत्रयं तु राजेन्द्र समस्यादिविधिवत
समुपोष्याष्टमासक्तयामाद्वै वेदपारगः । अहोरात्रेणचैकेन भ्रूणहत्तामसक्षम
अभ्यमन्त्रहहत्याया मुच्यते नात्र संशयः । गुरुस्त्रीगमनञ्चैव यथा नृपङ्गनागम

स्नात्वा प्रयतस्तोऽङ्कृते कुम्भेनैव प्रमुच्यते ।
वन्ध्या स्त्री वनिता या तु काकवन्ध्या मृतप्रजा ॥ २१ ॥
सापि कुम्भोदके स्नात्वा जीवत्पुत्रा प्रजायते ।
अपत्यन्तु गरोपोष्य भ्रूणघ्नस्तामसक्षयाम् ॥ २८ ॥

भ्रूणमका जपन्त्वित्रन्तथा पठन्ति यो नृप । मनूघोपोष्यगायत्रीं जपेद्वेदमातरम्
जपत्रयस्या विपन्द्रो मुच्यते पापसञ्चयात् । एवतुकथिततात पुराणोक्तमहर्षिभि
धौतपापमहापुण्यं शिवेनकथितमम । प्राणत्यागं तु यः कुर्यात्तत्रैवाऽऽतीर्थस्थलेविवा
स गच्छति विमानेन उज्ज्वलार्कसमप्रभ । हंसयहिप्रयुक्तेन सेव्यमानोऽप्सरोगणैः

शिवस्य परमं स्थानं यत्सुरैरपि दुर्लभम् ।
क्रीडते स्वेच्छया तत्र यावच्चन्द्रार्कतारकम् ॥ २७ ॥

धौतपापतुयानार्यस्तु नत्व प्राणसङ्क्षयम् । तत्क्षणाद्वेधसा पाथ पुंस्त्वमवाप्नुयात्
अथ किं बहुनोक्तेन शुभवायदिवाऽशुभम् । तदक्षयफलं सर्वं धौतपापे कृत नृप ॥
सन्यसन्नियमनान्न मन्यसेद्धिक्रियादिकम् । फलमूलादिक चैवजलमेवं नसंत्यजेत् ॥

एवं यःकुरुतेपार्थरुद्रलोकं सगच्छति । तत्र भुक्त्वाखिलान्भोगाञ्जायतेभुविभूपतिः
इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे
रेवाखण्डे धौतपापतीर्थमाहात्म्यवर्णनं नाम चतुरशीत्युत्तरशततमोऽध्यायः

---

# पञ्चाशीत्यधिकशततमोऽध्यायः

## एरण्डीतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल एरण्डीतीर्थमुत्तमम् । स्नानमात्रेण तत्रैव ब्रह्महत्याप्रणश्यति
मासि चाश्वयुजे तत्र शुक्लपक्षे चतुर्द्दशीम् । उपोष्य प्रयतःस्नातस्तर्पयेत्पितृदेवताः
पुत्रर्द्धिरूपसम्पन्नोजीवेच्चशरदांशतम् । शिवलोकंमृतोयाति नाऽत्रकार्याविचारणा
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे
रेवाखण्डे एरण्डीतीर्थमाहात्म्यवर्णनं नाम पञ्चाशीत्युत्तरशततमोऽध्यायः

---

# षडशीत्यधिकशततमोऽध्यायः

## कनखलेश्वरतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल तीर्थं कनखलोत्तमम् । गरुडेन तपस्तप्तं पूजयित्वा महेश्वरम्
दिव्यं वर्षशतंयावज्जातमात्रेण भारत । तपोजपैः कृशीभूतो दृष्टो देवेन शम्भुना ॥
ततस्तुष्टो महादेवो वैनतेयं मनोजवम् । उवाच परमं वाक्यं विनतानन्दवर्धनम्
खेचर !॥

गरुड उवाच

इच्छामि वाहनं विष्णोर्द्विजेन्द्रत्वं सुरेश्वर ॥ प्रसन्ने त्वयि मे सर्वं भविष्यतीति मतिर्मम

श्रीमहेश उवाच

दुर्लभः प्राणिनामेतयोर्वरः प्रार्थितोऽनघ । देवदेवस्य वहनं द्विजेन्द्रत्वं सुदुर्लभम्

नारायणोदरे सर्वं त्रैलोक्यं सचराचरम् । त्वया स कथमूह्यो तद्देवदेवो जगद्गुरुः

तेनैव स्थापितश्चेन्द्रस्त्रैलोक्ये सचराचरे ।

कथमन्यस्य चेन्द्रत्वं भवतीति सुदुर्लभम् ॥ ८ ॥

तथाऽपि मम वाक्येन वाहनत्वं भविष्यसि । शङ्खचक्रगदापाणेर्वहनोऽपि जगत्त्रयम्

इन्द्रत्वं पक्षिणां मध्ये भविष्यति न संशयः । इति दत्त्वा वरं तस्मा अन्तर्धानं गतो हरः

ततो गते महादेवे तार्क्ष्यस्याऽनुजो नृप ॥

आराधयामास तदा चामुण्डां मुण्डमण्डिताम् ॥ ११ ॥

श्मशानवासिनीं देवीं भूतसमन्विताम् ।

योगिनीं योगसंसिद्धां वसामांसासवप्रियाम् ॥ १२ ॥

ध्यातमात्रा तु तेनैव प्रत्यक्षाऽभवत्तदा । जालन्धरे यथासिद्धिः कौलीने उड्डियानके

समस्था सा भृगुक्षेत्रे सिद्धक्षेत्रे तु संस्थिता ।

चामुण्डा तत्र सा देवी सिद्धक्षेत्रे व्यवस्थिता ॥ १४ ॥

सन्तुता सखिभिर्दिव्यैर्योगक्षेमार्थसिद्धये । विनताऽऽनन्दजननस्तत्र तां योगिनीं नृप

भक्त्या प्रसादयामास स्तोत्रैर्वैदिकलौकिकैः ॥ १५ ॥

गरुड उवाच

ॐ या सा क्षुत्क्षामकण्ठा नवरुधिरमुखा प्रेतपद्मासनस्था

भूतानां वृन्दवृन्दे पितृवननिलया क्रीडते शूलहस्ता ।

शस्त्र चर्मखर्वारत्नजरुधिरगलन्मुण्डमालोत्तरीया

देवी श्रीवीरमाला विमलशशिनिभा पातु वश्चर्ममुण्डा ॥ १६ ॥

या सा क्षुत्क्षामकण्ठा विकृतभयकरी त्रासिनी दुष्कृतानाम्

मुञ्चज्ज्वालाकलापैर्दशनकसमसैः खादति प्रेतमांसम् ।
पिङ्गोद्र्ध्वोद्वद्धजूटारविसदृशतनुर्व्याघ्रचर्मोत्तरीया-
दैत्येन्द्रैर्यक्षरक्षोऽप्सरसुरनमिता पातुवश्चर्ममुण्डा ॥ १७ ॥
या सा दोर्द्दण्डखण्डैर्डमरुरणरणाटोपटङ्कारखण्टैः
कल्पान्तोत्पातवाताहतपटुपटहैर्वल्गते भूतमाता ।
क्षुत्क्षामा शुष्ककुक्षिः खरतरनखरैः क्षोदति प्रेतमांसम्
मुञ्चन्ती चाट्टहासं घुरघुरितरवा पातु वश्चर्ममुण्डा ॥ १८ ॥
या सा निम्नोदराभा विकृतभवभयत्रासिनी शूलहस्ता
चामुण्डा मुण्डघाता रणरुणितरणज्झल्लरीनादरम्या ।
त्रैलोक्यं त्रासयन्ती ककहकहकहैर्घोररावैरनेकै-
र्नृत्यन्ती मातृमध्ये पितृवननिलया पातु वश्चर्ममुण्डा ॥ १६ ॥
या धत्ते विश्वमखिलं निजांशेनमहोज्ज्वला । कनकप्रसवेलीना पातुमांकनकेश्वरी
हिमाद्रिसम्भवा देवीदयादर्शितविग्रहा । शिवप्रियाशिवे सक्तापातुमांकनकेश्वरी
अनादिजगदादिर्या रत्नगर्भा वसुप्रिया । रथाङ्गपाणिना पद्मापातु मां कनकेश्वरी
सावित्री या च गायत्री मृडानी वागथेन्दिरा ।
स्मर्तॄणां या सुखं दत्ते पातु मां कनकेश्वरी ॥ २३ ॥
सौम्यासौम्यैः सदा रूपैः सृजत्यवति या जगत् ।
परा शक्तिः परा बुद्धिः पातु मां कनकेश्वरी ॥ २४ ॥
ब्रह्मणः सर्गसमये सृज्यशक्तिः परातुया । जगन्मायाजगद्धात्री पातु मांकनकेश्वरी
विश्वस्य पालने विष्णोर्या शक्तिः परिपालिता ।
मदनोन्मादिनी मुख्या पातु मां कनकेश्वरी ॥ २६ ॥
विश्वसंलयने मुख्या या रुद्रेण समाश्रिता ।
रौद्री शक्तिः शिवाऽनन्ता पातु मां कनकेश्वरी ॥ २७ ॥
कैलाससानुसंरुढकनकप्रसवेशया । भस्मकाभिरता पतै पातु मां कनकेश्वरी ॥

पतिमप्राप्यमिच्छन्ती शस्यन्ती या विना पतिम् ।
अबला त्वेवभार्या च पातु मां कनखेश्वरी ॥ २६ ॥
विभ्वसंरक्षणे सक्ता रक्षिता कनखेन या । आत्मप्रम्नात्रभजननी पातुमांकनखेश्वरी॥
प्रशंपिण्ड्यामयरा शक्त्याशरीरग्रहणयया । प्रापिताप्रथमाशाविं पातुमांकनखेश्वरी
श्रुत्वा ॥ गरुडेनोक्तं देवीस्तवमनुत्तमम् । प्रसन्ना सम्मुखी भूत्वा वाक्यमेतदुवाच ह

श्रीचामुण्डोवाच

प्रसन्ना ते महासत्त्व वरं वरय वाञ्छितम् । ददामि ते द्विजश्रेष्ठ यत्तेमनसिरोचते

गरुड उवाच

अजरश्चामरश्चैव अधृष्यश्च सुरासुरे । तव प्रसादाद्धर्म्ये वाग्वैरजेयश्च भवाम्यहम् ॥
त्वया चाऽत्र सदा देवि! स्थातव्यं तीर्थसन्निधौ ।

मार्कण्डेय उवाच

एवं भविष्यतीत्युक्त्वा देवी देवैरभिष्टुता ॥ ३५ ॥
जगामाकाशमाविश्य भूतसङ्घसमन्विता । यदाऽस्या नृपश्रेष्ठ स्थापितपुरमुत्तमम्
अनुमान्य तदा देवीं छत्र तस्या समर्पितम् ।

लक्ष्मीरुवाच

रक्षणाय मया देवि! योगक्षेमार्थसिद्धये ॥ ३७ ॥
मातृवत्प्रतिपाल्यं तेसदादेविपुरमम । गरुडोऽपितत्र स्नात्वा सम्पूज्यकनखेश्वरीम्
तीर्थं तत्रैव संस्थाप्य जगामाऽऽकाशमुत्तमम् ।
तत्र तीर्थे तु यः स्नात्वा पूजयेत्पितृदेवता ॥ ३९ ॥
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते । गन्धपुष्पादिभिर्यस्तु पूजयेत्कनखेश्वरम्
तस्य योगैश्वर्यसिद्धिर्योगपीठेषु जायते । मृतो योगेश्वरं लोकं जयशब्दादिमङ्गलैः
स गच्छेन्नाऽत्र सन्देहो योगिनीगणसंयुतः ॥ ४१ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे कनखलेश्वरतीर्थमाहात्म्यवर्णननाम षडशीत्युत्तरशततमोऽध्यायः ॥

## सप्ताशी यधिकशततमोऽध्यायः

### कालाग्निरुद्रतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

जालेश्वरं ततो गच्छेल्लिङ्गमाद्यं स्वयम्भुवः ।
कालाग्निरुद्रं विख्यातं भृगुकच्छे व्यवस्थितम् ॥ १ ॥
सर्वपापप्रशमनं सर्वोपद्रवनाशनम् । क्षेत्रपापविनाशाय कृपया च समुत्थितम् ॥
पुरा कल्पेऽसुरगणैराक्रान्ते भुवनत्रये । वेदोक्तकर्मनाशे च धर्मे च विलयंगते ॥३॥
देवर्षिमुनिसिद्धेषु विश्वासपरमेषु च । कालाग्निरुद्रादुत्पन्नो धूमः कालोद्भवोद्भवः
धूमात्समुत्थितं लिङ्गं भित्त्वा पातालसप्तकम् ।
अवटं दक्षिणे कृत्वा लिङ्गं तत्रैव तिष्ठति ॥ ५ ॥
तत्रतीर्थेनृपश्रेष्ठकुण्डंज्वालासमुद्भवम् । यत्र सा पतिताज्वालाशिवस्यदहतःपुरम्
तत्रावाटंसमुद्भूतंधूमावर्त्तस्ततोऽभवत् । तस्मिन्कुण्डेतुयःस्नानंकृत्वाथैनर्मदाजले
कुर्याच्छ्राद्धं पितृभ्यो वै पूजयेच्च त्रिलोचनम् ।
कालाग्निरुद्रनामानि स गच्छेत्परमां गतिम् ॥ ८ ॥
यत्किञ्चित्कामिकं कर्म ह्याभिचारिकमेव वा ।
रिपुसङ्क्षयकृद्वापि सान्तानिकमथापि वा ॥
अत्र तीर्थे कृतं सर्वमचिरात्सिद्ध्यते नृप !॥ ९ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे कालाग्निरुद्रतीर्थमाहात्म्यवर्णनंनाम सप्ताशीत्युत्तरशततमोऽध्यायः ॥

———

# अष्टाशीत्यधिकशततमोऽध्यायः

## शालग्रामतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततः परं महाराज चत्वारिंशत्क्रमान्तरे। शालग्रामं ततो गच्छेत्सर्वदैवतपूजितम्
यत्रादिदेवो भगवान्वासुदेवस्त्रिविक्रमः।
स्वयं तिष्ठति लोकात्मा सर्वेषां हितकाम्यया ॥ २ ॥
नारदेन तपस्तप्त्वा कृता शाला द्विजन्मनाम्।
स्थिरीक्षेत्रे भृगुक्षेत्रे ज्ञात्वा रेवातटे स्वयम् ॥ ३ ॥
शालग्रामाभिधो देवो विप्राणां स्वधियासितः।
साधूनां चोपकाराय वासुदेवः प्रतिष्ठितः ॥ ४ ॥
योगिनामुपकाराय योगिध्येयो जनार्दनः। शालग्रामेति तेनैव नर्मदातटमाश्रितः
मासि मार्गशिरे शुक्ले ह्येकादश्यां यदा। स्नात्वा रेवाजले पुण्ये तद्दिने समुपोषयेत्
रात्रौ जागरणं कुर्यात्सम्पूज्य जनार्दनम्। पुनः प्रभातसमये द्वादश्यां नर्मदाजले
स्नात्वा सन्तर्प्य देवांश्च पितॄन्मातॄंस्तथैव च।
श्राद्धं कृत्वा ततः पश्चात्पितृभ्यो विधिपूर्वकम् ॥ ८ ॥
शक्तितो ब्राह्मणान्पूज्य स्वर्णवस्त्रान्नदानतः।
क्षमापयित्वा तान्विप्रांस्तथा देवं जगद्गुरुम् ॥ [illegible]
एवं कृते महाराज यत्पुण्यं स्याद्भवेन्नृणाम्। शृणुष्वावहितो भूत्वा तत्पुण्यं नृपसत्तम
न शक्नुते प्रतिपत्स्यतीह जीवन्मृतो याति मुरारिसाम्यम्।
महान्ति पापानि विसृज्य दुग्धं पुनर्न मातुः पिबते स्तनोद्यत् ॥ ११ ॥
शालग्रामं पश्यते यो हि नित्यं स्नात्वा जले नार्मदेऽर्घावहारे।
स मुच्यते ब्रह्महत्यादिपापैर्नारायणानुस्मरणेन तेन ॥ १२ ॥

वसन्ति ये संन्यसित्वा च तत्र निगृह्य दुःखानि विमुक्तसङ्गाः ।
ध्यायन्तो वै साङ्ख्यवृत्त्या तुरीयं पदं मुरारेस्तेऽपि तत्रैव यान्ति ॥ १३॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे शालग्रामतीर्थमाहात्म्यवर्णनं नामाष्टाशीत्युत्तरशततमोऽध्यायः ॥

---

# एकोननवत्यधिकशततमोऽध्यायः

## उदीर्णवराहतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र! तीर्थं परमशोभनम् । उदीर्णो यत्र वाराहो ह्यभवद्धरणीधरः
धुन्वन्दंष्ट्रां करालाग्रां बिभ्रच्च पृथिवीमिमाम् ।
स एव पञ्चमः प्रोक्तो वाराहो मुक्तिदायकः ॥ २ ॥

युधिष्ठिर उवाच

कथमुदीर्णरूपोऽभूद्वाराहो धरणीधरः । वाराहत्वं गतः केन पञ्चमः केन स.ञ्ज्ञित

मार्कण्डेय उवाच

आदिकल्पेपुराराजन्क्षीरोदे भगवान्हरिः । शेतेस भोगिशयनेयोगनिद्राविमोहित
लक्ष्मीकराम्बुजयुगमृद्यमानपदद्वयः । तस्मिन्स्वपतिदेवेशे भाराक्रान्तावसुन्धर
बभूव नृपतिश्रेष्ठ गत्वा चैदेवसन्निधौ । अवोचद्भारखिन्नाहं गमिष्यामि रसातल
दृष्ट्वा देवाः समुद्विग्ना गता यत्र जनार्दन । तुष्टुवुर्वाग्भिरिष्टाभिःकेशवंजगतःपति

देवा ऊचुः

नमो नमस्ते देवेश!सुरार्तिहर!सर्वग !। विश्वमूर्त्ते नमस्तुभ्यं त्राहि सर्वान्महद्भया
इत्युक्तो दैवतैर्देवो ह्युवाच किमुपस्थितम् ।

देवा ऊचुः

धरा धरित्री भूताना भारोद्विग्ना निमज्जति ।
तामुद्धर हृषीकेश लोकान्संस्थापय स्थितौ ॥ १० ॥

एवमुक्तः सुरैः सर्वैः केशवः परमेश्वरः । वाराहं रूपमास्थाय सर्वयज्ञमयः विभुः ॥
दंष्ट्राकरालः पिङ्गाक्षः समाकुञ्चितमूर्द्धजम् ।
कृत्वाऽनन्तं पादपीठं दंष्ट्राग्रेणोद्धरन्भुवम् ॥ १२ ॥
सपर्वतवनामुर्वीं समुद्रपरिमेखलाम् । उद्धृत्य भगवान्विष्णुरत्रैव समनायत ॥
स्थाप्यन्पञ्चधात्मानमुत्तरे नर्मदातटे । तथाऽऽद्य कोशलायां तु द्वितीयं योधनीपुरे
जयक्षेत्राभिधानेतु जयेनिपरिकीर्त्तितम् । असुरान्मोहयल्लिङ्गस्तृतीयः परिकीर्त्तित
पापताय जगद्धेतो स्थितोयस्माच्छशिप्रभ । अतस्तुगृपप्रसादू रूपेनेतस्त्यभिधीयते
उद्धृत्य जगती दर्भामुद्दीर्णो भृगुकच्छके । तत पञ्चमउर्द्धीर्णोवराह इति सञ्ज्ञितः
इति पञ्चवराहास्ते कथिता पाण्डुनन्दन । युगपत्स्नान यात्रा ब्रह्महत्याव्यपोहति
ज्येष्ठ मासि सिते पक्ष एकादश्यां विशेषतः ।
गत्वा ह्यादिवराह तु सम्प्राप्त दशमीदिने ॥ १९ ॥
हविष्यमन्न भुञ्जीयाद्ब्रह्मलाय गते रवौ । रात्रौ जागरणं कुर्याद्वराहेश्वादिरूपके
ततः प्रभात ॥ यस्मि स्नात्वा नर्मदाजले ।
सन्तर्प्य पितृदेवांश्च तिलैर्यवविमिश्रितैः ॥ २१ ॥
धेनु दद्याद्द्विजेयाग्रदेसर्वाभरणभूषिताम् । निमस्रोमिरहङ्कारो दानदद्याद्द्विजातये
गत्वा सम्पूजयेद्देव वाराह ह्यादिसञ्ज्ञितम् ।
अनेन विधिना पूज्य पश्चाद्गच्छेज्जय त्वरन् ॥ २३ ॥
त्वरितंतुनयगत्वापूर्वकविधिमाचरेत् । अश्वदद्याद्द्विजाग्रधायजयपूर्वाभिनिर्गतम्
लिङ्गे चैव तिला देया ज्जने हिरण्यमेवच । उद्दीर्णेचभुवद्यात्पूर्वक विधिमाचरेत्
अनस्तमित आदित्ये वराहान्पञ्चपश्यत । यत्फलंलभते पार्थ तदिहैकमनाःशृणु
ब्रह्महत्यासुरापान स्तेयगुर्वङ्गनागम । एभिस्तुसहसयोगो विध्वस्तानाघवञ्जनम्

स्वसृदुहितृभगिनीकुलदारोपबृंहणम् । आजन्ममरणाद्यावत्पापं भरतसत्तम !॥
तीर्थपञ्चकपूतस्य वैष्णवस्य विशेषतः । युगपच्चविनश्येत तूलराशिरिवानलात्
नारायणानुस्मरणाज्जपध्यानाद्विशेषतः ।
विप्रणश्यति पापानि गिरिकूटसमान्यपि ॥ ३० ॥
दृष्ट्वा पञ्चवराहान्वै पौरुषेमहतिस्थितः । आप्लवन्नर्मदातोयेश्राद्धंकृत्वायथाविधि
उदयास्तमनादर्वाग्यः पश्येल्लोटणेश्वरम् । कलेवरविमुक्तः स इत्येवं शङ्करोऽब्रवीत्
मुक्तिं प्रयाति सहसा दुष्प्रापां परमेश्वरीम् ।
पौरुषे क्रियमाणेऽपि न सिद्धिर्जायते यदि ॥ ३३ ॥
ब्रुवन्ति स्वर्गगमनमपि पापान्वितस्य च । यत्र तत्र गतस्यैवभवेत्पञ्चवराहकी ॥
ज्येष्ठस्यैकादशीतिथौ ध्रुवं तत्र वसेन्नरः । आदिं जयंतथा श्वेतं लिङ्गमुदीर्णमेवच
आश्रित्य तस्या द्रष्टव्या वराहास्तु यतस्ततः ।
ज्येष्ठस्यैकादशीतिथौ विष्णुना प्रभुविष्णुना ॥ ३६ ॥
वाराहं रूपमास्थाय उद्धृता धरणी विभो !।
पुण्यात्पुण्यतमा तेन ह्यशेषाघौघनाशिनी ॥ ३७ ॥
दृष्ट्वा पञ्चवराहान्वै क्रोडमुदीर्णरूपिणम् । पूजयित्वाविधानेन पश्चाज्जागरणञ्चरेत्
सपञ्चवर्त्तिकान्दीपान्घृतेनोज्ज्वाल्य भक्तितः ।
पुरणश्रवणैर्नृत्यैर्गीतवाद्यैः सुमङ्गलैः ॥ ३६ ॥
वेदजाप्यैः पवित्रैश्च क्षपयित्वा च शर्वरीम् ।
यत्पुण्यं लभते मर्त्यो ह्याजमीढ! शृणुष्व तत् ॥ ४० ॥
रेवाजलं पुण्यतमं पृथिव्यां तथा च देवो जगतां पतिर्हरिः ।
एकादशी पापहरा नरेन्द्र! वह्वायासैर्लभ्यते मानवानाम् ॥ ४१ ॥
एकैकशो ब्रह्महत्यादिकानि शक्तानि हन्तुं पापसङ्घानि राजन् ।
नैते सर्वे युगपद्वै समेता हन्तुं शक्ताः किन्न तद्ब्रूहि राजन् !॥ ४२ ॥
यथेदमुक्तं तव धर्मसूनो! श्रुतं च यच्छङ्कराच्चन्द्रमौलेः ।

श्रुत्वेदमिच्छन्मुच्यते सर्वपापैः पदं यदं याति हि वृत्रशत्रोः ॥ ४३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे नर्मदामाहात्म्ये उदीर्णवराहतीर्थमाहात्म्यवर्णनं नामैकोननवत्युत्तरशततमोऽध्यायः ॥ १८९ ॥

---

## नवत्यधिकशततमोऽध्यायः

### चन्द्रहासतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

ततो गच्छेन्महीपाल सोमतीर्थमनुत्तमम् । चन्द्रहासेतिविख्यातसर्वदैवतपूजित
यत्र सिद्धिं परां प्राप्तः सोमो राजा सुरोत्तम ॥ २ ॥

युधिष्ठिर उवाच

कथं सिद्धिमनुप्राप्तः सोमो राजा ग्रहपतिः । तत्सर्वं श्रोतुमिच्छामि कथयस्व ममाऽनघ

मार्कण्डेय उवाच

पुरा शप्तो मुनीन्द्रेण दक्षेण किल भारत । असेवनाद्धि दाराणां क्षयरोगी भविष्यसि
उद्वाहिताना पत्नीनां ये न कुर्वन्ति सेवनम् ।
या निष्ठा जायते तेषां तां शृणुष्व नरोत्तम ॥ ५ ॥

ऋतुकालेतु नारीणां सेवनाज्जायते सुतः । सुतात्स्वर्गश्च मोक्षश्चहीत्येवं श्रुतिनोदितम्
तत्कालोचितधर्मेण ये न सेवन्ति ता नराः ।
तेषां ब्रह्मघ्नजं पापं जायते नाऽत्र संशयः ॥ ७ ॥

तेन पापेन घोरेण वेष्टतो रौरवे वसेत् । तस्यतद्रुधिरं पापा पिबन्ते कालमीप्सितम्
ततोऽवतीर्णकालेन दारा योनिं प्रयास्यति ।
तस्यां तस्यां स दुर्गतमो दुर्भगो जायते सदा ॥ ९ ॥

नारीणांतुसदाकामो ह्यधिकःपरिवर्त्तते । विशेषेणऋतोःकालेभिद्यतेकामसायकैः
परिभूता हि सा भर्त्रा ध्यायतेऽन्यं पतिं ततः ।
तस्याः पुत्रः समुत्पन्नो ह्यटते कुलमुत्तमम् ॥ ११ ॥
स्वर्गस्थास्तेन पितरःपूर्वंजातामहीपते! । पतन्ति जातमात्रेण कुलटस्तेनप्रोच्यते
तेन कर्मविपाकेन क्षयरोगी शशी ह्यभूत् ।
त्यक्त्वा लोकं सुरेन्द्राणां मर्त्यलोकमुपागतः ॥ १३ ॥
तत्रतीर्थान्यनेकानि पुण्यान्यतनानि च । भ्रमित्वानर्मदांप्राप्तःसर्वपापप्रणाशिनीम्
उपवासस्तु दानानि व्रतानि नियमाश्च ये ।
चचार द्वादशाब्दानि ततो मुक्तः स किल्बिषैः ॥ १५ ॥
स्थापयित्वा महादेवंसर्वपातकनाशनम् । जगामप्रभया पूर्णः सोमलोकमनुत्तमम्
येनैव स्थापितोदेवः पूज्यतेचपसंज्ञया । तावद्युगसहस्राणि तस्यलोकं समश्नुते
तेन देवान्विधानोक्तान्स्थापयन्ति नरा भुवि ।
अक्षयं चाव्ययं यस्मात्फलं भवति नाऽन्यथा ॥ १८ ॥
सोमतीर्थेतुयः स्नात्वापूजयेद्देवमीश्वरम् । जायते स नरो भूत्वा सोमवत्प्रियदर्शनः
चन्द्रप्रभासे यो गत्वा स्नानं विधिवदाचरेत् ।
व्याधिना नाभिभूतः स्यात्क्षयरोगेण वा युतः ॥ २० ॥
चन्द्रहास्येनरः स्नात्वा द्वादश्यांतुनरेश्वर । चतुर्दश्यामुपोष्यैवक्षीरस्य जुहुयाच्चरुम्
मन्त्रैः पञ्चभिरीशानं पुरुषस्त्र्यम्बकं यजेत् ।
हविःशेषं स्वयं प्राश्य चन्द्रहास्येशमीक्षयेत् ॥ २२ ॥
अनेनविधिना राजंस्तुष्टो देवो महेश्वरः । विधिनातीर्थयोगेन क्षयरोगाद्विमुच्यते
सप्तभिःसोमवारैर्यःस्नानं तत्रसमाचरेत् । सचैकर्णकृताद्रोगान्मुच्यतेपूजयञ्छिवम्
अक्षिरोगस्तथा राजंश्चन्द्रहास्ये विनश्यति ।
चन्द्रहास्ये तु यो गत्वा ग्रहणे चन्द्रसूर्ययोः ॥
स्नानं समाचरेद्भक्त्या मुच्यते सर्वपातकैः ॥ २५ ॥

तत्रस्नानं प्रदानं च चन्द्रहास्ये शुभाशुभम् । कृतन्नृपवर्धेत्सर्वं भवतिचाक्षयम् ॥
ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ।
चन्द्रहास्ये तु ये स्नात्वा पश्यन्ति प्रहसं नराः ॥ २९ ॥
धार्मिकं ज्ञानमशेषं कल्मषं पुराहरम् । स्नानमात्रास्तु राजेन्द्र तत्तीर्थं प्रपश्यति
यद्वयस्तत्र जानन्ति महामोहसमन्विताः । देहस्थं दशसर्वेषां परमात्मेयसंस्थितम्
पश्यन्ति मानवेन्द्रा सोमनाथमनुत्तमम् । स समग्रमवाप्नोति चन्द्रहास्येसमद्यपः
मन्वन्तौ च व्यतीपाते विषुवे चायने तथा ।
चन्द्रहास्ये नरः स्नात्वा सर्वपापैः प्रमुच्यते ॥ ३१ ॥
न मूढास्ते दुराचारास्तेषां जन्म निरर्थकम् ।
चन्द्रहास्यं न जानन्ति नर्मदायां व्यवस्थितम् ॥ ३२ ॥
चन्द्रहास्ये तु यः कश्चित्संन्यासं कुरुते नृप ।
अनिवर्तिका गतिस्तस्य सोमलोकात्कदाचन ॥ ३३ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे चन्द्रहास्यतीर्थमाहात्म्यवर्णनं नाम नवत्युत्तरशततमोऽध्यायः

—————

## एकनवत्यधिकशततमोऽध्यायः

### द्वादशादित्यतीर्थमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

सिद्धेश्वरं ततो गच्छेत्तस्यैव तु समीपतः । अमृतस्याचितं लिङ्गमाद्यं स्वायम्भुवं तथा
दृश्यमानेन येनेह तृष्णा नायते नरः । पुरा चरतेन साम्बमाराध्य परमेश्वरम् ॥
प्राप्नुयुः परमां सिद्धिमादित्या द्वादशैव तु ।
अतः सिद्धेश्वरः प्रोक्तः सिद्धिदः सिद्धिकाङ्क्षिणाम् ॥ २ ॥

युधिष्ठिर उवाच

कथं सिद्धेश्वरे प्राप्तास्सिद्धिं देवा द्विजोत्तम !।
आदित्या इति यच्चोक्तं तत्ते विस्मापनं महत् ॥ ४ ॥
तपस्युग्रे व्यवसिता आदित्याः केन हेतुना ।
संप्राप्तास्तु द्विजश्रेष्ठ सिद्धिं चैवाभिलाषिकीम् ॥ ५ ॥
संक्षिप्य तु मया पृष्टं विस्तराद् द्विज! शंस मे ॥ ६ ॥

मार्कण्डेय उवाच

अदितेर्द्वादशादित्या जाताः शक्रपुरोगमाः ।
इन्द्रो धाता भगस्त्वष्टा मित्रोऽथ वरुणोऽर्यमा ॥ ७ ॥
विवस्वान्सविता पूषा ह्यंशुमान्विष्णुरेव च ।
त इमे द्वादशादित्या इच्छन्तो भास्करं पदम् ॥ ८ ॥
नर्मदातटमाश्रित्यतपस्युग्रेव्यवस्थिताः । सिद्धेश्वरेमहाराज काश्यपेयैर्महात्मभिः
एवं सिद्धिरनुप्राप्ता द्वादशादित्यसञ्ज्ञितैः ।
स्थापितश्च जगद्धाता तस्मिंस्तीर्थे दिवाकरः ॥ १० ॥
स्वकीयांशविभागेन द्वादशादित्यसञ्ज्ञितैः ।
तदाप्रभृति तत्तीर्थं राजन्ख्यातिं गतं भुवि ॥ ११ ॥
प्रलये समनुप्राप्ते ह्यादित्याद्वादशैव ते । द्वादशादित्यतो राजन्संभवन्तियुगक्षये
इन्द्रस्तपति पूर्वेण धाता चैवाग्निगोचरे ।
गभस्तिपतिर्वैयाम्ये त्वष्टा नैरृतदिङ्मुखः ॥ १३ ॥
वरुणः पश्चिमे भागे मित्रस्तु वायवे तथा ।
विष्णुश्च सौम्यदिग्भागे विवस्वानीशगोचरे ॥ १४ ॥
ऊर्ध्वतश्चैवसविताह्यधःपूषाविशोषयन् । अंशुमांस्तुतथा विष्णुर्मुखतोनिर्गतंजगत्
प्रदहन्वै नरश्रेष्ठ चभ्रमुश्च इतस्ततः । यथैव ते महाराज! [illegible]

तस्य दक्षोऽङ्गजो राजन्दक्षिणाङ्गुष्ठसंभवः ॥ ६ ॥
धर्मः स्तनान्तात्संजातस्तस्य पुत्रोऽभवत्किल ।
नारायणसहायोऽसावजोपिऽभरतर्षभ ! ॥ ७ ॥
मरुत्वती वसुर्जाना लम्बा भानुमती नती ।
संकल्पा च मुहूर्त्ता च साध्या विश्वावती ककुप् ॥ ८ ॥
धर्मपत्न्यो दशैवैता दाक्षायण्यो महाप्रभाः ।
तासां साध्या महाभागा पुत्रानजयन्नृप !॥ ६ ॥
नरो नारायणश्चैव हरिः कृष्णस्तथैवच । विष्णोरंशांशका ह्येतेचत्वारोधर्मसूनवः
तथा नारायणनरौ गन्धमादनपर्वते । आत्मन्यात्मानमाधाय तेपतुः परमं तपः ॥
ध्यायमानावनौपम्यं स्वं कारणमकारणम् । वासुदेवमनिर्देश्यमप्रवर्क्यमनंतरम्
योगयुक्तौ महात्मानावास्थितावुग्रतापसौ ।
तयोस्तपः प्रभावेण न ततांप दिवाकरः ॥ १३ ॥
वबाह शङ्कितो वायुः सुखस्पर्शो ह्यशङ्कितः ।
शिशिरोऽभवदत्यर्थं ज्वलन्नपि विभावसुः ॥ १४ ॥
सिंहव्याघ्रादयः सौम्याश्चेरुः सहमृगैर्गिरौ ।
तयोर्गौ रिव भारार्त्ता पृथिवी पृथिवीपते !॥ १५ ॥
चेलश्च भूधराश्चैव चुक्षुभेच महोदधिः । देवाश्चस्वेषु धिष्ण्येषु निष्प्रभेषु हतप्रभाः
बभूवुरवनीपाल! परमं क्षोभमागताः ॥ १६ ॥
देवराजस्तथा शक्रःसन्तप्तस्तपसातयोः । युयोजाप्सरसस्तत्र तयोर्विघ्नचिकीर्षया

इन्द्र उवाच

रम्भेतिलोत्तमे कुब्जे घृताचि ललितेशुभे । प्रम्लोचेसुभ्रु सुम्लोचे सौरभेयिमहोद्धते
अलम्बुषे मिश्रकेशिपुण्डरीके वरूथिनि । विलोकनीयं बिभ्राणा वपुर्मन्मथबोधनम्
गन्धमादनमासाद्य कुरुध्वं वचनंमम । नरनारायणौ तत्र तपोदीक्षान्वितौ द्विजौ
तेपाते धर्मतनयौ तपः परमदुश्चरम् । तावस्माकं वरारोहाः कुर्वाणौ परमं तपः

कमातिशापदुःखार्तिप्रशापातिनाशनौ । तद्गच्छतनमौ कार्यौ भयनाभिरिदंवच
स्मर महायशो मघिना धर्मतापपराङ्मुखा । कर्थं यत्र समालोक्यमदनोद्दीपनं परम्
कन्दर्पंयशमभ्येति विवशः को न मानवः ॥ २३ ॥

मार्कण्डेय उवाच

इत्युक्त्वा देवराजेन मदनेन समं गता । अप्सरस्त्वरम सर्वा वसन्तश्च मदीपने ॥
गन्धमादनमासाद्य पुष्पोत्थितगुणगुञ्जम् ।
चकार माधवो रम्यं प्रोत्फुल्लवनपादपम् ॥ २५ ॥
ववयौ दक्षिणाशाया मन्दगामुगतोऽनिलः । भृङ्गमालास्वनस्यै रमणीयमभूद्वनम् ॥
गन्धश्च सुरभिः सद्यो वनराजिसमुद्भवः । किन्नरोत्तायक्षाणां बभूव प्राणतर्पणः
पराङ्मुखाश्च ता सर्वा नरनारायणावृषी ।
चित्राभर्चितुमारब्धा कामदृष्टिन्तिस्मितैः ॥ २८ ॥
जगौमनोहरं काचित्क्वणन् नृत्यं चाऽप्सराः । अन्यादयस्तथैवान्या मनोहरतरं नृप ॥
हावैर्भावै गुणैहास्यैरन्याऽन्या वल्गुभाषिणैः ।
तयोः क्षोभाय तन्वङ्ग्यश्चक्रुरुद्यममङ्गनाः ॥ ३० ॥
तथापि ततयोः कश्चिन्मनसः पृथिवीपतेः। विकारोऽभवद्ध्यानमपारसमाश्रयतयो
निवातस्थौ यथा दीपावकम्पौ नृप तिष्ठतः ।
वासुदेवार्पणस्वस्थ तथैव मनसी तयोः ॥ ३२ ॥
पूर्यमाणोऽपि चाम्भोभिः सुधमन्या महोदधिः ।
यथा न याति सङ्क्षोभं तथा तन्मानसं क्वचित् ॥ ३३ ॥
सर्वभूतहितं ब्रह्मवासुदेवमयं परम् । मन्यमानौ न रागस्य द्वेषस्य च वशं गतौ ॥
स्मरोऽपि नशशाकाय प्रवेष्टुं हृदयं तयोः । चिन्तामयं दीपयुतमन्धकारदुरालयम्
पुष्पोज्ज्वगात्रस्वरान्वसन्तं दक्षिणानिलम् ।
तांश्चाप्सरसः सद्या कन्दर्पं च महामुनी ॥ ३६ ॥
यथारब्धं तपस्ताभ्यामात्मानं गन्धमादनम् । ददृशातेऽखिलं रूपं ब्रह्मणः पुरुषर्षभौ

दाहायनामलोवह्नेर्नापःक्लेदायचाम्भसः । तद्द्रव्यमेवतद्द्रव्यविकारायन च यतः
ततोविज्ञाय विज्ञाय परंब्रह्म स्वरूपतः । मधुकन्दर्पशोपित्तु विकारेनाऽभवत्तयोः
ततो गुरुतरं यत्नं वसन्तमदनौ नृप । चक्राते ताश्चतन्वंग्यस्तत्क्षोभाय पुनः पुनः ॥
अथ नारायणो धैर्यंसन्धार्योदीर्णमानसः । ऊरोरुत्पादयामास वराङ्गीमवलांतदा
त्रैलोक्यसुन्दरीरत्नमशेषमवनीपते । गुणैर्लावण्यमभ्येति यस्याः संदर्शनादनु ॥ ४२

तां विलोक्य महीपाल! चकम्पे मनसाऽनिलः ।
वसन्तो विस्मयं यातः स्मरः सस्मार किञ्चन ॥ ४३ ॥

रम्भातिलोत्तमाद्याश्च वैलक्ष्यं देवयोषितः । न रेजुरवनीपाल तद्रूपहृतवीक्षणाः ॥
ततःकामो वसन्तश्चपार्थिवाप्सरसश्चताः । प्रणम्य भगवन्तौतौ तुष्टुवुर्मुनिसत्तमौ

वसन्तकामाप्सरस ऊचुः

प्रसीदतु जगद्धाता यस्य देवस्य मायया ।
मोहिताः स्म विजानीमो नान्तरं विघ्नेे ऽ्योः ॥ ४६ ॥

प्रसीदतु स वां देवोयस्य रूपमिदंद्विधा । धामभूतस्य लोकानामनादेरप्रतिष्ठतः

नरनारायणौ देवौ शङ्खचक्रायुधावुभौ ।
आस्तां प्रसादसुमुखावस्माकमपराधिनाम् ॥ ४८ ॥

निधानं सर्वविद्यानां सर्वपापवनानलः । नारायणोऽसौ भगवान्सर्वपापं व्यपोहतु

शार्ङ्गचिह्नायुधः श्रीमानात्मज्ञानमयोऽनवः ।
नरः समस्तपापानि हतात्मा सर्वदेहिनाम् ॥ ५० ॥
जटाकलापबद्धोऽयमनयोर्नः क्षमावतोः ।
सौम्यास्यदृष्टिः पापानि हन्तुं जन्मार्जितानि वै ॥ ५१ ॥
तथाऽऽत्मविद्यादोषेण योऽपराधः कृतो महान् ।
त्रैलोक्यवन्द्यौ यौ नाथौ विलोभयितुमागताः ॥ ५२ ॥

प्रसीद देव विज्ञानवन! मूढदृशामिव । भवन्ति सन्तः सततं स्वधर्मपरिपालकाः ॥
दृष्ट्वैतन्नः समुत्पन्नं यथा स्त्रीरत्नमुत्तमम् । त्वयिनारायणोत्पन्ना श्रेष्ठापारवतीमतिः

तेन सत्येन सत्या मत्परमात्मन्सनातन ।। नारायण प्रसीदेश सर्वलोकपरायण ।।
प्रसन्नशुद्धे शान्तात्मन्प्रसन्नवदनेक्षण । प्रसीद योगिनामीश नर! सर्वगताऽच्युत !
नमस्यामो नर देव तथा नारायण हरिम् । नमो नराय नम्याय नमोनारायणाय

प्रसन्नानामनाथानां तथा नाथवतां प्रभो ।।

[redacted] करोतु नरोऽस्माकं श नारायणं देहि न ॥ ५८ ॥

मार्कण्डेय उवाच

एवमभ्यर्थित स्तुत्या रागद्वेषादिवर्जित । प्राहेश सर्वभूतानां मध्येनारायणो नृप

नारायण उवाच

स्वागतं माधवे कामे भवत्वप्सरसामपि ।

यत्कार्यमागतानां [redacted] इहास्माभिस्तदुच्यताम् ॥ ६० ॥

यूयं स्वसिद्धये नूनमस्माकं बलशत्रुणा ।

सम्प्रेषितास्ततोऽस्माकं न्यायोगादिदर्शनम् ॥ ६१ ॥

नवय गीतनृत्येननाङ्गचेष्टादिभाषितैः । हृदयावेधिसर्वैमेन्ये विषयादाहणात्मका

शब्दादिसङ्गदुष्टानि यदा नाक्षाणि न शुभा ।

तदा नृत्यादयो भावा कथं लोभप्रदायिन ॥ ६३ ॥

ते सिद्धा स्म न वै साध्या भवतीनां स्मरस्य च ।

माधवस्य च शक्रोऽपि स्वास्थ्यं यात्वविशङ्कितः ॥ ६४ ॥

योऽसौ परम्श परमं पुरुष परमेश्वर । परमात्मा समस्तस्य स्थावरस्य चरस्य च
उत्पत्तिहेतुरन्ते च यस्मिन्सर्वं प्रलीयते । सर्वाधासीति देवत्वाद्वासुदेवेत्युदाहृत

यमशाशकास्तस्य चतुर्व्यूहस्य मानिज ।

तदादेशितवर्त्मानो जगद्बोधाय देहिनाम् ॥ ६७ ॥

तत्स्वभूतसर्वेशसर्वत्र समदर्शिनम् । कुत पश्यन्तो रागादीन्करिष्यामोविभेदिन
वसन्ते मयि चेन्द्रे चमवतीषु तथास्मरे । यदासर्व भूतात्मा तदादेशादय कथम्

तन्मयाऽन्यविभक्तानि यदा सर्वेषु जन्तुषु ।

सर्वेश्वरेश्वरो विष्णुः कुतो रागादयस्ततः ॥ ७० ॥

ब्रह्माणमिन्द्रमीशानमादित्यमरुतोऽखिलान् ।

विश्वेदेवानृषीन्साध्यान्वसून्पितृगणांस्तथा ॥ ७१ ॥

यक्षराक्षसभूतादीन्नागान्सर्पान्सरीसृपान् । मनुष्यपक्षिगोमृगगजसिंहजलेचरान्

मक्षिकामशकान्दंशाञ्छलभाञ्जलजान्कृमीन् ।

गुल्मवृक्षलतावल्लीत्वक्सारतृणजातिषु ॥ ७३ ॥

यच्चकिञ्चिद्दृश्यं वाऽदृश्यंवात्रिदशाङ्गनाः । मन्यध्वंजातमेकस्य तत्सर्वंपरमात्मनः

जायमानः कथं विष्णुमात्मानं परमं वयम् ।

रागद्वेषौ तथा लोभं कः कुर्यादमराङ्गनाः ॥ ७५ ॥

सर्वभूतमये विष्णौ सर्वगे सर्वधातरि । निपात्यतं पृथग्भूते कुतोरागादिकोगुणः

एवमस्मासु युष्मासु सर्वभूतेषु चाचलाः । तन्मयैकत्वभूतेषु रागाद्यवसरः कुतः ॥

सम्यग्दृष्टिरियं प्रोक्ता समस्तैक्याचलोकिनी ।

पृथग्विज्ञानमात्रैव लोकसंव्यवहारवत् ॥ ७८ ॥

भूतेन्द्रियान्तः करणप्रधानपुरुषात्मकम् । जगद्देहो तदखिलं तदा भेदः किमात्मकः

भवन्ति लयमायान्ति समुद्रसलिलोर्मयः ।

न वारिभेदतो भिन्नास्तथैवैक्यादिदं जगत् ॥ ८० ॥

यथाग्नेरर्चिषः पीताः पिङ्गलारुणधूसराः ।

तथाऽपि नाऽग्नितो भिन्नास्तथैतद्ब्रह्मणो जगत् ॥ ८१ ॥

भवतीभिश्च यत्क्षोभमस्माकं सपुरन्दरः । कारयत्यसदेतच्च विवेकाधारचेतसाम्

भवन्त्यः सच देवेन्द्रो लोकाश्चससुरासुराः । समुद्राद्रिवनोपेतामद्देहान्तरगोचराः

यथेयं चारुसर्वाङ्गी भवतीनां मयाऽग्रतः ।

दर्शिता दर्शयिष्यामि तथा चैवाऽखिलं जगत् ॥ ८४ ॥

प्रयातु शक्रो मा गर्वमिन्द्रत्वं कस्य सुस्थिरम् ।

यूयं च मा स्मयं यात सन्ति रूपान्विताः स्त्रियः ॥ ८५ ॥

किं सुभ्रू कुरूपं वा यदा भेदो न दृश्यते । तारतम्यं सुरूपत्वे सततं भिन्नदर्शनात्
भवतीनां स्वयं मत्वा रूपौदार्यगुणोद्भवम् । मदैश्वर्यदर्शिना तन्वी ततस्तुरगमभ्येत्य

यस्मान्मदूरोर्निष्पन्ना त्वियमिन्दीवरेक्षणा ।
उर्वशीनाम कल्याणी भविष्यति वराप्सराः ॥ ८८ ॥
तदियं देवराजस्य नीयतां वरवर्णिनी ।
भवत्यस्तेन चाऽस्माकं प्रेषिताः प्रीतिमिच्छता ॥ ८९ ॥
वयं त्वत्र महाभागो नाऽस्माकं भोगकारणात् ।
तपश्चर्या न चाप्राप्यमन्यं प्राप्तुमभीप्सता ॥ ९० ॥

तन्मार्गमस्य जगतो दर्शयिष्ये करोम्यहम् । तथा नरेण सहितो जगत्पालनोद्यत
यदि कश्चित्तथाबाधा करोति त्रिदशेश्वर । तमहं वारयिष्यामि निवृत्तो भवतामस्य

कृताऽस्मि नेत्यमाबाधा न दुष्टस्येह कस्यचित् ।
न चाऽपि शान्ता तदहं प्रवर्तिष्याम्यसत्पथम् ॥ ९३ ॥
एतज्ज्ञात्वा न सन्तापस्त्वया कार्यो हि मां प्रति ।
उपकाराय जगतामवतीर्णोऽस्मि वासव ॥ ९४ ॥

या चेयमुर्वशी मत्त ऊरुमूलात्पुरन्दर । चैतान्हि हेतुभूतेयं वधं प्राप्य भविष्यति ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
रेवाखण्डे नर्मदामाहात्म्ये श्रीपन्युपमिवर्णननाम द्विनवत्युत्तरशततमोऽध्यायः

# त्रिनवत्यधिकशततमोऽध्यायः

## श्रीपतिमाहात्म्यवर्णनम्

श्रीमार्कण्डेय उवाच

इत्युक्तेऽप्सरसः सर्वाःप्रणिपत्यपुनःपुनः । ऊचुर्नारायणं देवं तद्दर्शनसमीहया ॥ १

वसन्तकामाप्सरस ऊचुः

भगवन्भवता योऽयमुपदेशो हितार्थिना ।
प्रोक्तः स सर्वो विज्ञातो माहात्म्यं विदितं च ते ॥ २ ॥

यत्त्वेतद्भवता प्रोक्तंप्रसन्नेनान्तरात्मना । दर्शितेयंविशालाक्षीदर्शयिष्यामिवोजगत्
तत्रार्थे सर्वभावेन प्रपन्नानांजगत्पते ॥ दर्शयात्मानमखिलं दर्शितेयं यथोर्वशी ॥

यदि देवाऽपराधेऽपि नाऽस्मासु कुपितं तव ।
नमस्ते जगतामीश दर्शयाऽऽत्मानमात्मना ॥ ५ ॥

नारायण उवाच

पश्यतेहाऽखिलाँल्लोकान्मम देहे सुराङ्गनाः ।
मधुं मदनमात्मानं यच्चान्यद् द्रष्टुमिच्छथ ॥ ६ ॥

श्रीमार्कण्डेय उवाच

इत्युक्त्वाभगवान्देवस्तदानारायणोनृप । उच्चैर्जहासस्वनवत्तत्राऽभूदखिलंजगत्
ब्रह्मा प्रजापतिः शक्रः सह रुद्रैः पिनाकधृक् ।
आदित्या वसवः साध्या विश्वेदेवा महर्षयः ॥ ८ ॥

नासत्यदस्रावनिलः सर्वशश्च तथाग्नयः । यक्षगन्धर्वसिद्धाश्च पिशाचोरगकिन्नराः
समस्ताप्सरसो विद्याःसाङ्गा वेदास्तदुक्तयः ।
मनुष्याः पशवः कीटाः पक्षिणः पादपास्तथा ॥ १० ॥
सरीसृपाश्चाथ सूक्ष्मा यच्चान्यज्जीवसञ्ज्ञितम् ।

नारायणोऽपि भगवानाह तास्त्रिदशाङ्गनाः ॥ ५९ ॥

नारायण उवाच

नीयतामुर्वशीभद्रा यत्राऽसौत्रिदशेश्वरः । भवतीनांहितार्थाय सर्वभूतेष्वसावितिः
ज्ञानमुत्पादितं भूयो लयं भूतेषु कुर्वता । यद्गच्छध्वंसमस्तोऽयं भूतग्रामोमदंशकः
अहमध्यात्मभूतस्य वासुदेवस्य योगिनः ।
अस्मात्परतरं नाऽस्ति योऽनन्तःपरिपठ्यते ॥ ५६ ॥
तमजं सर्वभूतेशं जानीत परमं पदम् । अहं भवत्यो देवाश्च मनुष्याः पशवश्च ये ॥
एतत्सर्वमनन्तस्य वासुदेवस्य वै कृतम् ॥ ६० ॥
एवं ज्ञात्वा समं सर्वं सदेवासुरमानुषम् । सपश्वादिगुणं चैव द्रष्टव्यंत्रिदशाङ्गनाः

मार्कण्डेय उवाच

इत्युक्तास्तेन देवेन समस्तास्ताः सुरस्त्रियः ।
प्रणम्य तौ समदनाः सवसन्ताश्च पार्थिव !॥ ६२ ॥
आदाय चोर्वशीं भूयो देवराजमुपागताः । आचख्युश्च यथावृत्तं देवराजायतत्तथा

मार्कण्डेय उवाच

तथा त्वमपि राजेन्द्र! सर्वभूतेषु केशवम् । चिन्तयन्समतां गच्छसमतैव हि मुक्तये
जानन्नेवं विशेषेण भूतेषु परमेश्वरम् । वासुदेव कथं दोषांल्लोभादीन्न प्रहास्यसि
सर्वभूतानि गोविन्दाद्यदा नाऽन्यानि भूपते !।
तदा वैरादयो भावाः क्रियतां न तु पुत्रक !॥ ६६ ॥
इति पश्य जगत्सर्वं वासुदेवात्मकं नृप !। एतदेव हि कृष्णेन रूपमाविष्कृतं नृप !
परमेश्वरेति यद्रूपं तदेतत्कथितं तव । जन्मादिभावरहितं तद्विष्णोः परमम्पदम् ।
संक्षेपेणाऽथ भूपाल!श्रूयतां यद्वदामि ते । यन्मतंपुरुषः कृत्वा परं निर्वाणमृच्छति
सर्वौ विष्णुसमासो हि भावाभावौ च तन्मयौ ।
सदसत्सर्वमीशोऽसौ महादेवः परं पदम् ॥ ७० ॥
भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारार्दितानाम् ।

तत इन्द्रादयो देवाः शङ्खचक्रगदाधराः ॥ १० ॥
भूत्वा जग्मुस्तदर्थं ते सा तु दृष्टवती सुरान् ।
विश्वरूपं वैष्णवं यत्तद्दर्शयत मा चिरम् ॥ ११ ॥
विलक्षा व्रीडिता देवा गत्वा नारायणं तदा ।
अब्रुवन्विश्वरूपं नो शक्ता दर्शयितुं वयम् ॥ १२ ॥
ततो यथेष्टं ते जग्मुः स च विष्णुरचिन्तयत् । उग्रतपास्थिताऽऽदर्शादिति भार्गवी
तां तस्मात्तत्र गत्वाऽहं वरं दत्त्वा तु वाञ्छितम् ।
पुनस्तपः करिष्यामि दर्शयिष्यामि वा पुनः ॥
वैष्णवं विश्वरूपं यद्दुर्दर्शं देवदानवैः ॥ १४ ॥

मार्कण्डेय उवाच

ततो गत्वा हृषीकेशः सागरान्तस्थितां श्रियम् ।
प्राह तुष्टोऽस्मि ते देवि! वरं वृणु यथेप्सितम् ॥ १५ ॥

श्रीरुवाच

यदि तुष्टोऽसि मे देव प्रपन्नाया जनार्दन ! । तदादर्शयतद्रूपमप्सरोभिस्तथाऽनन
विश्वरूपमनन्तं च भूतभावन केशव !। गन्धमादनमास्थाय कृतं यच्च तपस्त्वया ॥
तद्वदस्व विभो! विष्णो! न मिथ्या यदि केशव !।
श्रद्दधामि न चैवाऽहं रूपस्याऽस्य कथञ्चन ॥ १८ ॥
बहुभिर्यक्षरक्षोभिर्मायाचारप्रचारिभिः । छन्दिता मम जानद्भिर्भावमन्तर्गतं हरि
भूत्वा विष्णुस्वरूपास्ते चक्रिणश्च चतुर्भुजाः ।
सुव्रीडिताऽगताः सर्वे विश्वरूपो सहायतः ॥ २० ॥

मार्कण्डेय उवाच

नारायणोऽथभगवाञ्छङ्खचक्रगदाभृतम् । तयातथोक्तस्तद्रूपंमुक्त्वाऽहं सुरपूजितम्
रूपं परं यथोक्तं वै विश्वरूपमदर्शत । दर्शयित्वा वचः प्राह पञ्चरात्रविधानतः
योऽर्चयिष्यति मां नित्यं स पूज्यः स च पूजितः ।

विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे श्रीपतिमाहात्म्यवर्णनंनाम त्रिनवत्युत्तरशततमोऽध्यायः ॥ १९३ ॥

---

## चतुर्नवत्यधिकशततमोऽध्यायः

### श्रीपतिविवाहवर्णनम्

*श्रीमार्कण्डेय उवाच*

तच्छ्रुत्वानन्तदेवेन विश्वरूपमुदाहृतम् । देवराजस्तथा देवाः परं विस्मयमागताः

दृष्ट्वा चाप्सरसं पुण्यामुर्वशीं कमलाननाम् ।
सव्रस्तो विस्मितश्चाऽभूदिन्द्रो राजश्रिया सह ॥ २

न किंचिदुक्तवान्वाक्यमुक्तवाङ्गोपमास्थितः ।
इति वृत्तान्तभूत हि नारायणविचेष्टितम् ॥ ३ ॥

भृगोः सा (ऱ्या) स्या समुत्पन्ना लक्ष्मीः श्रुत्वा तु वै नृप ।
विश्वरूपं परं रूपं विस्मिताऽचिन्तयत्तदा ॥ ४ ॥

केनोपायेन मे स्यान्मे भर्ता नारायणः प्रभुः । व्रतेनतपसायाऽपिदानेननियमेन च
वृद्धानासेवनेनाऽथदेवताराधनेनवा । इति चिन्तापराऽन्याथलीशारवायुधिष्ठिर

प्राह ग्रामो मया भर्ता शङ्करस्तपसा किल ।
प्रजापतिश्च गायत्र्या ह्यन्याभिरभिवाञ्छिता ॥ ७ ॥

तपसैवहि तं प्राप्यस्तस्मात्तचर भुवने । तपस्त्वहिमहच्चोग्रं सर्वकाङ्क्षितदायकम्

मार्कण्डेय उवाच

सागरान्त समासाद्य लक्ष्मी परपुरञ्जय । चचारविपुलं कालं तपः परमदुश्चरम् ॥

स्थाणुवत्संस्थिता साऽभूद्दिव्यं वर्षसहस्रकम् ।

ते दिव्यज्ञानसम्पन्ना दिव्यदेहविचेष्टिताः।
दिव्यं लोकमवाप्स्यन्ति दिव्यभोगसमन्विताः ॥ ३७ ॥

मार्कण्डेय उवाच

तयोरेवं सम्वदतोर्देवा इन्द्रपुरोगमाः। समागता वनोद्देशं सागरान्ते महर्षयः ॥
ततो भृगुं देवराजो नारायणविचिन्तितम्।
वव्रे ज्ञात्वा तु तत्कन्यां धर्मात्मा स ददौ च ताम् ॥ ३६ ॥
धर्मोऽपि विधिवद्वत्स! विवाहं समकारयत्। देवदेवस्य राजर्षे देवतार्थे समाहितः

युधिष्ठिर उवाच

धर्मो विवाहमकरोद्विधिवद्यस्त्वयोदितम्।
को विधिस्तत्र का दत्ता दक्षिणा भृगुणाऽपि च ॥ ४१ ॥
विवाहयज्ञे समभूत्स्रुक्स्रुवग्रहणेश्चकः। ऋत्विजः के सदस्याश्च तस्यासन्द्विजसत्तम
किं तस्याऽवभृथं त्वासीत्तत्सर्वं वद विस्तरात्।
त्वद्वाक्यामृतपानेन तृप्तिर्मम न विद्यते ॥ ४३ ॥

मार्कण्डेय उवाच

नारायणविवाहस्य यज्ञस्य च युधिष्ठिर!। तपसस्तस्य देवस्य सम्यगाचरणस्य च
वक्तुं समर्थो न गुणान्ब्रह्माऽपि परमेश्वरः।
तथाप्युद्देशतो वच्मि शृणु भूत्वा समाहितः ॥ ४५ ॥
ब्रह्मा सप्तर्षयस्तत्र स्रुक्स्रुवग्रहणे रताः। अग्नीञ्जुहुविरे राजन्वेदिर्धात्रीससागरा
ददुः समुद्रा रत्नानि ब्रह्मर्षिभ्यो नृपोत्तम!।
धनदोऽपि ददौ वित्तं सर्वब्राह्मणवाञ्छितम् ॥ ४७ ॥
विश्वकर्माऽपि देवानां ब्रह्मर्षीणां परन्तप। वेश्मानि सुविचित्राणि सर्वरत्नमयानि च
कृत्वा प्रदर्शयामास देवेन्द्राय यशस्विने। शतक्रतुस्ततो विप्रान्काश्यपादीन्पुरोगमान्
शौनकादींश्च पप्रच्छ वाष्कलाञ्छागलानपि।
आत्रेयानपि राजेन्द्र! वृणुध्वमभिवाञ्छितम् ॥ ५० ॥

धनधान्यसमायुक्तः सर्वभोगसमन्वितः ॥ २३ ॥
मूलं हि सर्वधर्माणां ब्रह्मचर्यं परन्तप । तेनाहतत्रस्थास्यामिमूलश्रीपतिमञ्चितः
मूर्ध्नी प्रोच्यतब्राह्मी ब्रह्मचर्यस्वरूपिणी । सर्वयोगमयीपुण्या सर्वपापहरीशुभा
पतिस्तस्या प्रभुरहं वरदः प्राणिनां प्रिये ।
स्नात्वा पश्येत्तु यो देवि योऽसौ येमां यतव्रतः ॥ २६ ॥
मूर्ध्नीपतिनिनामानं वाञ्छितं प्राप्नुयात्फलम् ।
स्नानानि तत्र यो दद्यात्महादानानि च प्रिये ॥ २७ ॥
सहस्रगुणितं पुण्यमस्यानादवाप्स्यते । इष्टं स्वथानत्रदेवो सम्यक्चैवायथारितम्
तन्निमित्तं पराकामानवाप्स्यसि त्वं न संशयः ॥ २८ ॥
वरं वृणीष्व देवेशि वाञ्छितं दुर्लभं सुरैः । दुःखसंसारकान्तारपतिते परमेश्वरि
श्रीरुवाच
नारायण जगन्नाथनारायण जगत्पते । नारायण परब्रह्मं नारायणपरायण ॥३०
प्रसीद पाहि मां भक्त्या सम्यक्स्वर्गे नियोजय ।
प्रियो हासि प्रियाऽहं ते यथा स्यां तत्तथा कुरु ॥ ३१ ॥
गृहं समाधकामानां कारणं देव सम्मतम् ।
मनाग्ध्यायाऽऽश्रमं पुण्यं मां श्रयसि नियोजय ॥ ३२ ॥
नारायण उवाच
नारायणगिरा देवि चिन्तितोऽस्मि यतस्त्वया ।
नारायणगिरिर्नाम तव म्रत्र भविष्यति ॥ ३३ ॥
नारायणस्मृतौ याति दुरितं जन्मकोटिजम् ।
यस्माद्गिरति तस्माच्च गिरिरित्येव शब्दितम् ॥ ३४ ॥
तस्मात्सर्वाश्रयो देवि गिरिः पर्वतराड् भवेत् ।
सुरासुरमनुष्याणां यथाऽहमपि चाऽऽश्रय ॥ ३५ ॥
य एतं पूजयिष्यति मण्डलस्थं परं मम । नारायणगिरिर्नाम देवरूपं शुभेक्षणे ॥

प्राजापत्याश्चतुर्विंशसहस्राणि नरेश्वर !॥ ६४ ॥

[स]र्वव्रतस्थानां व्रतब्रह्मविचारिणाम् । द्वादशैषां सहस्राणिसन्तिवै वृषभध्वज

नारदस्य वचः श्रुत्वा देवा देवर्षयोऽपि च ।

साधुसाध्वित्यमन्यन्त नोचुः केचन किञ्चन ॥ ६६ ॥

समाह्वयत्ततो लक्ष्मीस्तान्विप्रान्भक्तिसंयुता ।

उवाच चरणान्गृह्य प्रसादः क्रियतां मयि ॥ ६७ ॥

षट्त्रिंशच्च सहस्राणि वेश्मनामत्र संस्थितिः ।

विश्वकर्मकृतानां तु तेषु तिष्ठन्तु वोऽखिलाः ॥ ६८ ॥

ते तथेति प्रतिज्ञाय स्थिताः सम्प्रीतमानसाः ।

धनधान्यसमृद्धाश्च वाञ्छितप्राप्तिलक्षणाः ॥

सर्वकामसमृद्धाश्च ह्यनारम्भेषु कर्मणाम् ॥ ६९ ॥

इति संस्थाप्य तान्विप्रान्सा स्थिता पर्यपालयत् ।

चतुर्द्धा तु स्थितो विष्णुः श्रियाः देव्याः प्रिये रतः ॥ ७० ॥

एवं ववाहिकमखेनिवृत्ते ऋषयस्तुतम् । ऊचुश्चावभृथस्नानं कुत्र कुर्मो जनार्द्दन !॥

इति श्रुत्वा तु वचनं श्रीपतिःपादपङ्कजात् । मुमोचजाह्नवीतोयं रेवामध्यगमंशुचि

हरेः पादोदकंदृष्ट्वानिःसृतंमुनयस्तु ते । विस्मितास्समपश्यन्तजरनंतस्तस्यगौरवम्

रुद्रेण सहिताः सर्वे देवता ऋषयस्तथा ।

सङ्कथा विस्मिताश्चक्रुर्विधुन्वन्तः शिरांसि च ॥ ७४ ॥

ऋषय ऊचुः

ब्रूहि शम्भो! किमत्रायं अकस्माद्वारिसम्भवः ।

विष्णोः पादाम्बुजोत्थश्च सम्मोहकरणः परः ॥ ७५ ॥

ईश्वर उवाच

पादोदकमिदंविष्णोरहंजानामिवै सुराः । दशाश्वमेधावभृथैःस्नानमत्रातिरिच्यते

युष्माभिः श्रीपतिः पूज्यः स्नानं चावभृथं कुतः ।

दृष्ट्वातेधिश्वरत्वानिशाद्भुसर्वेश्वरेश्वरम् । देवानाञ्च ऋषीणा ■ मद्गमोऽयसुपुण्य

यस्मिन्पुण्ये सुरेशान' वस्तु वाञ्छामहे सदा ।

शतरतु प्राह पुनर्वासो योऽत्र भविष्यति ॥

सत्यधमरता यूयं यावत्काल भविष्यथ ॥ ५२ ॥

मार्कण्डेय उवाच

पृष्यद्राजराद्द् ७ केमवे होशिणोऽभवत् । तन्मोक्ष्यमाणमधुनाऽगुसूर्यासमाहि

समन्तुमात्प्रमुखा सदस्यास्तस्य चाऽभवत् ।

बौद्धाग्रमरथद्गिर्सा भर्ताचिद्ध चकार ह ॥ ५४ ॥

होत्र धमयशिष्टांच ब्रह्मचमनकोमुनि । पटभिशद्ग्रामसाहस्रप्रासाजेभ्यप्रातन

लम्माभवा च मयुक्ताऽभवत्तत्रजान्प्रभु । ब्राह्मणोजुहनोयहियाय द्वेशस्त्यिने सु

दृष्टे हराट दत्ताऽसा लगाद इति सञ्ज्ञित । स देवार्थापत्तं श्रेत्रपुण्यंद्वर्पिसेषि

सपाध्ययमयविश्व दिव्यसिद्धिसमन्वितम् ।

ब्राह्मणाना तत पदानि निवेशयितुमुद्यता ॥ ५८ ॥

दृष्ट्वा धीपतिनामानमाह देव वचस्तदा ।

श्रीरुवाच

य एत ब्राह्मणा शिष्या भृत्यादीना यतव्रता ।

नानिग्रहायितुमिच्छामि त्वत्प्रसादाद्धिषोत्तम ॥

सदाद्यादय सुवन्तुण स्थापिता गन्दध्वज ॥ ६० ॥

नैष्ठिकव्रतिना विप्रावश्याऽश्वयनप्रता । प्रापण्येप्रतं ह्राहोयं विद्वन्त्यपन्थिय

तानह स्थापयिष्यामि त्वत्प्रसादाद्धिषोत्तम ॥ ६१ ॥

मार्कण्डेय उवाच

तत कौतूहलाद्भगवान्नृपमब्रवन । पप्रच्छ प्रतिन सर्वान्नृत्तिभेदैःस्वयमन्वित

नारदोऽपि महान्तमुपस्थमर्वार्णनिम् । प्राहकृष्णाजिनधरोनैष्ठिका ब्राह्मणा ह

अमा काया सुयस्य छत्रगुहा द्विजोत्तमाः ।

प्राजापत्याश्चतुर्विंशसहस्राणि नरेश्वर !॥ ६५ ॥

ब्रह्मचर्यव्रतस्थानां व्रतब्रह्मविचारिणाम्। द्वादशैषां सहस्राणिसन्तिवै वृषभध्वज

नारदस्य वचः श्रुत्वा देवा देवर्षयोऽपि च।

साधुसाध्वित्यमन्यन्त नोचुः केचन किञ्चन ॥ ६६ ॥

समाहूयत्ततो लक्ष्मीस्तान्विप्रान्भक्तिसंयुता।

उवाच चरणान्गृह्य प्रसादः क्रियतां मयि ॥ ६७ ॥

षट्त्रिंशच्च सहस्राणि वेश्मनामत्र संस्थितिः।

विश्वकर्मकृतानां तु तेषु तिष्ठन्तु वोऽखिलाः ॥ ६८ ॥

ते तथेति प्रतिज्ञाय स्थिताः सम्प्रीतमानसाः।

धनधान्यसमृद्धाश्च वाञ्छितप्राप्तिलक्षणाः॥

सर्वकामसमृद्धाश्च ज्ञानारम्भेषु कर्मणाम् ॥ ६६ ॥

इति संस्थाप्य तान्विप्रान्सा स्थिता पर्यपालयत्।

चतुर्द्धा तु स्थितो विष्णुः श्रियाः देव्याः प्रिये रतः ॥ ७० ॥

एवं वचाहिकमखेनिवृत्ते ऋषयस्तुतम्। ऊचुश्चावभृथस्नानं कुत्र कुर्मो जनार्द्दन !॥

इति श्रुत्वा तु वचनं श्रीपतिःपादपङ्कजात्। मुमोचजाह्नवीतोयं रेवामध्यगमंशुचि

हरेः पादोदकंदृष्ट्वानिःसृतंमुनयस्तु ते। विस्मितास्समपश्यन्तजरनंतस्तस्यगौरवम्

रुद्रेण सहिताः सर्वे देवता ऋषयस्तथा।

सङ्कथा विस्मिताश्चक्रुर्विधुन्वन्तः शिरांसि च ॥ ७४ ॥

ऋषय ऊचुः

ब्रूहि शम्भो! किमत्रायं अकस्माद्वारिसम्भवः।

विष्णोः पादाम्बुजोत्थश्च सम्मोहकरणः परः ॥ ७५ ॥

ईश्वर उवाच

पादोदकमिदंविष्णोरहंजानामिवै सुराः। दशाश्वमेधावभृथैःस्नानमत्रातिरिच्यते

युष्माभिः श्रीपतिः पूज्यः स्नानं चावभृथं कुतः।

भविष्यतीति तेनाऽऽशु इदं घोऽर्ये विनिर्मितम् ॥ ७७ ॥
स्नात्वाऽत्र त्रिदशेशाना यत्फल सम्प्रपद्यते । यत्तु नवेनविद्यातितत त्रिमुत्तरवच
मार्कण्डेय उवाच
एवमुक्त्वा तुते सर्वे स्नानं कृत्वा यथागतम् । जग्मुर्देवा महेशानपुरोगाभरतं
ब्राह्मणाश्च तत्र सर्वे स्वयेश्मान्येव भेजिरे ।
देवतीर्थं महाराज सर्वपापप्रणाशने ॥ ८० ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्या संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे श्रीपतिविवाहवर्णननाम चतुनव युत्तरशततमोऽध्याय ॥ १९४ ॥

---

## पञ्चनवत्यधिकशततमोऽध्याय

### श्रीपतिमाहात्म्यवर्णनम्

युधिष्ठिर उवाच

देवतार्थेतुकिन्नाममाहात्म्यसमुदाहृतम् । फलं किंस्नानदानादिकारिणाजायतेद्विज
मार्कण्डेय उवाच

पृथिव्या यानि तीर्थानि देवैर्मुनिगणैरपि ।
सेवितानि महाबाहो तानि ध्यातानि विष्णुना ॥ २ ॥
समागतान्येकता वै तत्र तीर्थे युधिष्ठिर । तत्तीर्थंवैष्णवपुण्य देवतीर्थमितिश्रुत
कुरुक्षेत्र भुवि परमन्तरिक्षे त्रिपुष्करम् । पुरुषोत्तम दिवि पर देवतीर्थं परात्पर
देवतीर्थसम नास्ति तीर्थमत्र परत्र च । यत्प्राप्य मनुजस्तत्पोत्र कदाचिद्युधिष्ठि
देवैरुक्तानि तीर्थानि योऽत्र स्नान समाचरत् ।
देवतीर्थ स सवत्र स्नातो भवति मानव ॥ ६ ॥
एवमस्त्विति तैरुक्ते देवा ऋषिगणा अपि ।

सन्तुष्टाः श्रीशमभ्यर्च्य स्वं स्वं स्थानं तु भेजिरे ॥ ७ ॥
सूर्यग्रहेऽत्र वै क्षेत्रे स्नात्वा यत्फलमश्नुते ।
स्नात्वा श्रीशं समभ्यर्च्य समुपोष्य यथाविधि ॥ ८ ॥
यद्ददाति हिरण्यानि दानानि विधिवन्नृप ॥
तदनन्तफलं सर्वं सूर्यस्य ग्रहणे यथा ॥ ६ ॥
भूमिदानं धेनुदानं स्वर्णदानमनन्तकम् । वस्त्रदानमनन्तं च फलं प्राह शतक्रतुः ॥
सोमो वै वस्त्रदानेनमौक्तिकानांचभार्गवः । सुवर्णस्यरविर्दानं धर्मराजोह्यनन्तकम्
वतीर्थे तु यद्दानं श्रद्धायुक्तेन दीयते । तदनन्तफलं प्राह बृहस्पतिरुदारधीः ॥१२॥
वतीर्थं भृगुक्षेत्रे सर्वतीर्थाधिकंनृप ॥ देवतीर्थे नरः स्नात्वाश्रीपतिं योऽनुपश्यति
सोमग्रहे कुलशतं स समुद्धृत्य नाकभाक् ।
दानानि द्विजमुख्येभ्यो देवतीर्थे नराधिप ॥ १४ ॥
र्द्दत्तानि नरैर्भोगभागिनः प्रेत्य चेह ते । देवतीर्थे विप्रभोज्यं हरिमुद्दिश्ययश्चरेत्
स सर्वाह्लादमाप्नोति स्वर्गलोके युधिष्ठिर ॥
देवतीर्थे नरो नारी स्नात्वा नियतमानसौ ॥ १६ ॥
उपोष्यैकादशीं भक्त्या पूजयेद्यः श्रियः पतिम् ।
रात्रौ जागरणं कृत्वा घृतेनोद्बोध्य दीपकम् ॥ १८ ॥
द्वादश्यां प्रातरुत्थाय तथावै नर्मदाजले । विप्रदां पत्यमभ्यर्च्य विधिवत्कुरुनन्दन
वस्त्राभरणताम्बूलपुष्पधूपविलेपनैः । अक्षये विष्णुलोकेऽसौ मोदते चरितव्रतः ॥
यः सदैकादशीतिथौ स्नात्वोपोष्याऽर्चयेद्धरिम् ।
रात्रौ जागरणं कुर्याद्वेदशास्त्रविधानतः ॥ २० ॥
धर्मराजकृतांपापांनसपश्यतियातनाम् । पञ्चरात्रविधानेनश्रीपतिंयोऽर्चयिष्यति
दीक्षामवाप्य विधिवद्वैष्णवीं पापनाशनीम् ।
स्वर्गमोक्षप्रदां पुण्यां भोगदां चित्तदामथ ॥ २२ ॥
राज्यदांवामहाभागपुत्रदांभाग्यदामथ । सुकलत्रप्रदांवापिविष्णोर्भक्तिप्रदामिति

यदारुणाख्यस्त्रैलोक्ये महाबाधां करिष्यति । तदाहं भ्रामरं रूपं कृत्वाऽसंख्येयषट्पदम्

त्रैलोक्यस्य हितार्थाय वधिष्यामि महासुरम् ।
भ्रामरीति च मां लोकास्तदा स्तोष्यन्ति सर्वतः ॥ ५० ॥
इत्थं यदा यदा बाधा दानवोत्था भविष्यति ।
तदा तदाऽवतीर्याऽहं करिष्याम्यरिसंक्षयम् ॥ ५१ ॥

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये देव्याः स्तुति
र्नामैकादशोऽध्यायः ॥ ११ ॥
समाप्तश्चायमेकादशः ॥

---

तदा मां देवीं ज्ञानप्रमुखाः भक्तिप्रह्वकाया मन्तः सर्वेऽपि मुनयः धनिष्ठाय स्तोष्यन्ति । ततः भीमरूपेण रक्षोभक्षणाद्धेतोः विख्यातप्रसिद्धभीमादेवीति विश्रुतनाम भविष्यति । विस्मयस्यादितिभीमस्य भीमाद्योऽपादाने निपातिता ॥ ४८ ॥

हे देवाः ! यदा त्रैलोक्ये अरुणो नाम महासुरः महाबाधां महतीं पीडां करिष्यति । लोकान् बाधिष्यते अतितरां तदा अहं असंख्येयषट्पदं भ्रामरं रूपं भ्रमरसमष्टिनीं मूर्तिं कृत्वा त्रैलोक्यस्य हितार्थाय अरुणं महासुरं वधिष्यामि तदा लोकाः सर्वतः भ्रामरीत्येवं स्तोष्यन्ति भ्रमराणां इयं भ्रामरी इत्याख्या भ्रामरी देवी । असंख्येयाः संख्यातुमशक्याः षट्पदाः भ्रमराः मूर्तिभूताः अरुणासुरं हनिष्यन्ति अतः सा भ्रामरीति नाम्ना लोकैः सङ्कीर्त्यते इत्यर्थः । अरुणस्यापत्यं पुमान् आरुणः इति च्छेदे अतः अस्य बाधित्वात् शिवा तस्याद्रणधा ॥ ४९ ॥ ५० ॥

इदानीं देव्या अवताराणां तत्कार्याणां चानन्त्यात् साकल्येन वक्तुमशक्यत्वात् संक्षिप्यन्तं कथामुपसंहरति । हे देवाः इत्युक्तानुसारेण प्रकारेण यदा यदा दानवेभ्य

# द्विनवतितमोऽध्यायः

## ( द्वादशोऽध्यायः )

## श्रीमद्देवीचरित्रपठनमाहात्म्यवर्णनम्

देव्युवाच

एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः।
तस्याहं सकलां बाधां शम ( नाश ) यिष्याम्यसंशयम् ॥ १ ॥

---

उत्तिष्ठतिउत्थास्यतिवादानवोत्थादानवेभ्यः समुद्भवाबाधापीडालोकानांभविष्य तिउत्पत्स्यते। तदातदाअहंतत्तत्कार्यानुरूपमवतीर्यप्रादुर्भावमवाप्यअरिसंक्षयंशत्रुविनाशंककरिष्यामि। दानवोत्थेतिसुपिस्थःकः कर्तरि ॥ ५१ ॥

इति श्रीमार्कण्डेयपुराणे श्रीमदु० शन्तनु० देवीमा०टीकायांनारायणीस्तुतिर्नामैकनवतितमोध्यायः ॥ ६१ ॥

---

देव्युवाच। यद्यपि प्रागपिदेवान् देव्येवोवाचतथाप्यध्यायादौ देवीवचनस्य प्राधान्यंध्वनयितुंदेवीमाहात्म्याध्ययनश्रवणादिफलप्राप्तिप्रामाण्यं च दर्शयितुंदेव्येवोचितांवाचं देवानुक्तवती। यः पुरुषः समाहितःभक्तिश्रद्धान्वितो भूत्वा एभिःप्रागुक्तैः स्तवैः स्तोत्रैः पुनःपुनः नित्यंअविकल्पितं यथा भवति तथा शश्वद्वामांदेवींस्तोष्यते तस्यपुंसःसकलांबाधांशमयिष्यामिअसंशयंसंशयाभावः। अर्थाभावेऽव्ययर्थाभावः। यद्वा, असंशयंयथास्यात्तथास्तोष्यते क्रियाफलेकर्तृगतेञित्वादात्मनेपदम्। एभिरितिब्रह्मकृतैरिन्द्रादिदेवकृतैश्च। हंसःसूर्यः परमात्मा।

भविष्यति न दारिद्र्यं न चैवेष्टवियोजनम् ॥ ४ ॥
शत्रुतो न भयं तेषां (तस्य) दस्युतो वा न राजतः ।
न शस्त्रानलतोयौघात् कदाचित् सम्भविष्यति ॥ ५ ॥
तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः ।
श्रोतव्यञ्च सदा भक्त्या परं स्वस्त्ययनं महत् ( हि तत् ) ॥ ६ ॥

उपसर्गानशेषांस्तु महामारीसमुद्भवान् । तथा त्रिविधमुत्पातंमाहात्म्यंशमयेन्मम

---

ये मम माहात्म्यंकीर्त्तयिष्यन्ति स्तोष्यन्ति च तेषां कदाचिदपिशत्रुतोभयंनसम्भविष्यति । दस्युतः तस्करतोऽपिवा न । राजतोऽपिनृपात्न नशस्त्रतः आयुधतः न अनलतोऽग्नितः । न तोयौघात् जलप्रवाहात् न सम्भविष्यतीत्यनेन सर्वत्र सम्बध्नाति ॥ ५ ॥

तस्माद्वाञ्छितार्थसाधनत्वाद्धेतोः समाहितैः सावधानैः कृतप्रयत्नैः पुंभिःपरं प्रकृष्टंमहत्पूजनीयम् । स्वस्त्ययनंक्षेमकरं अयनंवर्त्ममदेव्याएतन्माहात्म्यंग्रन्थसन्दर्भरूपंपक्त्या पठितव्यंश्रोतव्यं च । एतन्माहात्म्यमिति बहुव्रीहिः । ग्रन्थसन्दर्भरूपोऽन्यपदार्थः । शब्दस्यैव पठनश्रवणयोग्यत्वेनचिषयभावात् । एतदितितुपृथक्पदत्वे माहात्म्यम्प्रतिपाद्यन्तद्यत्रास्तिग्रन्थवन्धेसोऽप्युपचारात् मत्वर्थीयेनअर्शआद्यचाचामाहात्म्यशब्देनोच्यतइतिपठनश्रवणयोग्यंद्रष्टव्यम् । 'स्वस्त्याशीःक्षेमपुण्येषु मङ्गलेचाव्ययंस्मृतम्' ॥ ६ ॥

ममदेव्याः माहात्म्यंकर्त्तृ भक्तितः पठतांभक्तितःशृण्वतां च पुंसांमहामारी समुद्भवान् सर्वानुपसर्गान् उपद्रवान् शमयेद्दूरीकुर्यात् । तथातेषां पुंसांत्रिविधं उत्पातं आध्यात्मिकं आधिदैविकमाधिभौतिकं । आध्यात्मिकं शरीरोत्पन्नंराग द्वेषादिकंव्याध्यादिकं च । आधिभौतिकं भूतप्रेतादिकजनितं भयभ्रमादिकम् । आधिदैविकंदैवकृतंवज्रपातादिकं दारिद्र्यादिकं च । यद्वा, भूर्भुवःस्वःसम्भवमुत्पातत्रयंशमयेत् । भौमंभूकम्पादिकं आन्तरिक्षं अनभ्रगर्जनादि । स्वर्लोक-

